महामहोपाध्याय-श्रीगङ्गेशोपाध्यायविरचितं

# सिद्धान्त-लक्षणम्

श्रीरघुनाथशिरोमणिविरचितया

दीधित्या,

श्रीजगदीशतर्कालङ्कारकृतया

जागदीश्या,

वाराणसेय श्रीसंन्यासि-संस्कृत-महाविद्यालयीय

दर्शनविभागाध्यक्ष-न्यायवेदान्ताचार्य-

स्वामि-दिव्यानन्द-कृतया

( श्रीदत्तात्रेयशास्त्री-ओगले-कृतया )

लक्ष्मीटीका-दिव्याटिप्पण्या च समलङ्कृतम् ।

सम्पादकः

श्री ज्वालाप्रसादगौडः,

श्रीसंन्यासिसंस्कृतमहाविद्यालयीय प्रधानाचार्यः

THE

# SIDDHANTA LAKSHANAM

## OF M.M. SHRI GANGESHOPADHYAYA

*WITH THE COMMENTRIES*

**Didhiti by shri Raghunath Shiromani,**

**Jagadishi by Shri Jagadish Tarkalankar,**

**Lakshmi and Divya by**

**SWAMI DIVYANANDA**

( DATTATREYA-SHASTRI OGALE )

[ Head of the dept. of philosophy

Sanyasi Sanskrit Callege, Varanasi ]

*Adited by—*

**Shri JWALAPRASAD GAUR**

Principal, Shri Sanyasi Sanskrit Callege.

Dhundiraja Gali, Varanasi.

In. 1970.

*Published by—*

**Shri Swami Divyananda,**

( Dattatreya Shastri Ogale )

Shri Krisna Nivas Ashram,

**Kanakhal, HARDWAR, U.P.**

*Agents—*

**Bharatiya Vidya Prakashan,**

**Kachori Gali, Varanasi.**

**Motilal Banarasidas, Chouk, Varanasi.**

**Shri Sanyasi Sanskrit College, Varanasi.**



**Price 10 Rs.**

*Printer—*

**Gita Dharma Press,**

Mishrapokhara, Varanasi.

# कृतज्ञता प्रकाशः

सिद्धान्तलक्षणग्रन्थस्य नव्यन्याय शास्त्रे अतीव महत्वं विद्यते, व्याप्तिपञ्चकोत्तरं व्याप्तेः सिद्धान्तस्वरूपलक्षणस्य सम्यक्तया निरूपणमस्मिन्नेव ग्रन्थे कृतम्। चिन्तामणिः मूलकारः, तस्योपरि दीधितिटीका विद्यते—उभयोरुपरि जागदीशी टीका विद्यते सर्वेषामेव तात्पर्य ग्राहिका लक्ष्मीटीका तथा दिव्यटिप्पणी च विद्यते। प्रधानाचार्यैः वाराणसीस्थ श्रीसंन्यासि संस्कृतमहाविद्यालयीय पं. प्र. गुरुवर्य श्रीज्वालाप्रसाद—गौडमहाभागैः ग्रन्थसंपादनकार्ये अतीव सहायता कृता। एवं ग्रन्थस्यास्य भूमिकाऽपि तैरैव कृता। अतः तेभ्यः प्रणतिप्रसूताञ्जलिं समर्पयामि।

अस्य ग्रन्थस्य प्रकाशनकार्ये सहायतारूपेण जुनाऽखाडीय श्रीमहन्तैः पाञ्चालस्थ पटियाला निवासिभिः स्वामिभिः श्री सोहनगिरिभिः १०००) रु. प्रदत्तानि तेन तेषामहं अतीव कृतज्ञतां मन्ये। अन्यच्च यैः यैः महाभागैः अस्मिन् ग्रन्थे केनापि प्रकारिका सहायता कृता ते सर्वे धन्यवादार्हाः सन्ति।

गीताधर्ममुद्रणालयसञ्चालकाः श्रीब्रह्मचारिभवानन्दमहाभागा अपि अतीव धन्यवादार्हाः।

एवं कृतेपि परिश्रमे पुरुषमात्रसाधारणा भ्रमप्रमादादिदोषा अप्यवश्यं भवेयुरेव। तथापि येऽत्र गुणलवस्ते गुरूणां, ये च दोषास्ते मदीया इति गुणैकपक्षपातिनो विपश्चितः क्षाम्यन्तु ममापराधं, निवेदयन्तु च मह्यमत्रत्यान् दोषविशेषान् येनाऽहमुद्यतः स्यां द्वितीयावृत्तौ तन्निराकरणायेति भूयोभूयः प्रार्थये पण्डितप्रवरान्।

विदुषामनुविधेयः—

**स्वामिदिव्यानन्दः**

**(दत्तात्रेयशास्त्री)**

# भूमिका

जनकः श्रीप्रभुदत्तः श्रीनान्हीदेवी च यत्प्रसूः ।
ज्वालाप्रसादगौडोऽहं तं वन्दे ज्ञानदं गुरुम् ॥

प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः परिष्कृता जगदीशेन । व्याख्याता च गुरुवरैस्तद्वन्मान्यैः श्रीतर्कतीर्थमहोदयैश्च ।

केचित्तु हेतुसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्यसामानाधिकरण्यरूपान्योन्याभावगर्भैव व्याप्तिः । भेदस्य व्याप्यवृत्तितया प्रतियोगिवैयधिकरण्याप्रवेशेन लाघवात् । अन्योन्याभावस्याऽव्याप्यवृत्तित्वमतेऽपि प्रतियोग्यवृत्तित्वस्यैव निवेशे लाघवं दुर्वारमिति प्राहुः ।

तयोरनुगमश्च व्यभिचारधीविरोधिधीविषयत्वेनेति सिद्धान्तः । तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहविरोधिग्रहविषयत्वेन प्रतियोगितावच्छेदकत्वाभाव—प्रतियोगितावच्छेदकभेदगर्भव्याप्तीनामनुगमः ।

अथ प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहविरोधित्वं यदि तादृशावच्छेदकत्वग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वमात्रम्, तदा वन्हित्वं तादृशाभावप्रतियोगितावच्छेदकं भूतलं च घटवदिति समूहालंबनग्रहनिष्ठभूतलधर्मिक घटप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिनो भूतलं घटाभाववदिति ग्रहस्यापि प्रतिबन्धकत्वापत्तिरिति चेन्न । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्यैव तादृशविरोधित्वपदेन विवक्षितत्वात् । तथा च सति भूतलनिष्ठविशेष्यितावावच्छिन्नघटप्रकारिता न तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापिका, वन्हित्वं तादृशाभावप्रतियोगितावच्छेदकमिति भूतलधर्मिकघटानवगाहिज्ञाने व्यभिचारात, किन्तु तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारतैव तादृशावच्छेदकत्वप्रकारिता व्यापिका तदवच्छिन्नत्वं च न भूतलधर्मिकघटप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायामतो घटाभाववद्भूतलमिति ज्ञानस्य नानुमितिकारणत्वमिति भावः ।

अत्रेदं बोध्यम् । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभाव-

प्रतियोगितावच्छेदकत्वग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वन्हित्वमिति ज्ञाने इव हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानेपि वर्तते सामान्याभावनिश्चयस्य प्रतिबध्यतावच्छेदककोटौ सामान्यधर्मावच्छिन्नप्रकारतावच्छेदकतापर्याप्त्यनिवेशात्, तच्च 'विरुणद्धि सामान्याभावबोधोपि सामान्यघटितविशेषबुद्धिम्' इत्यादिना दीधितिकारेणैवोक्तम्। प्रतियोग्यसामानाधिकरण्यानुपस्थितावपि नानुमित्यनुपपत्तिरिति ध्येयम्।

न च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिग्रहत्वेनैवानुगमे समूहालंबनस्यापि प्रसंगवारणसंभवात्तादृशप्रकारिता व्यापकत्वनिवेशो व्यर्थं इति वाच्यम्। तथा सति वन्हित्वं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकमिति व्यभिचारग्रहकालेपि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणघटाभावप्रतियोगितानवच्छेदकं वन्हित्वमिति ज्ञानादनुमित्यापत्तेः। तादृशज्ञानस्यापि निरुक्तप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालित्वात्।

यद्यपि प्रतिबध्यतावच्छेदककोटौ अभावविषयतायां प्रतियोगिवैयधिकरण्यविषयताभिन्नासती हेतुसामानाधिकरण्यविषयताभिन्ना सती अभावत्वविषयताभिन्ना या विषयता तदनिरूपकत्वनिवेशेनैवोक्तज्ञानमादायातिप्रसंगवारणसंभवः, घटाभावविषयतायाः घटप्रतियोगिकत्वविषयतानिरूपितत्वेन तादृशत्वाभावात्, तथापि उक्तव्यभिचारग्रहकाले महानसीयधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादनुमित्यापत्तिः। न च प्रतिबध्यतावच्छेदककोटौ हेतुविषयतायामपि हेतुतावच्छेदकनिष्ठविषयताभिन्ना या विषयता तदनिरूपकत्वं निवेशनीयम्, तथा च तादृशावच्छेदकताभिन्नामहानसीयत्वनिष्ठावच्छेदकतानिरूपकत्वस्यैव सत्त्वात्तदसंग्रह इति वाच्यम्।

एवमपि व्यभिचारग्रहकाले हेतुमत्पर्वतवृत्यभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादनुमित्यापत्तिः। अत्रापि यदि प्रतिबध्यतावच्छेदककोटौ अधिकरणविषयतायां हेतुविषयताभिन्ना सती अधिकरणत्वविषयताभिन्ना या विषयता तदनिरूपकत्वं निवेश्यते तथा च हेत्वधिकरणपर्वतविषयता न तादृशी, तस्यां तादृशविषयता-

भिन्नपर्वतत्वनिष्ठविषयतानिरूपकत्वसत्वात्। न च तथापि तादृश-व्यभिचारग्रहकाले हेतुसमानाधिकरणाभावीय घटनिष्ठप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादनुमित्यापत्तिरिति वाच्यम्। प्रतिबध्यतावच्छेदककोटौ प्रतियोगित्वविषयतायां अभावनिष्ठविषयत्वभिन्ना सती प्रतियोगितात्वनिष्ठविषयताभिन्ना या विषयता तदनिरूपकत्वस्य निवेशनीयत्वात्। घटनिष्ठप्रतियोगित्वविषयता न तादृशी, तस्या अपि घटवृत्तित्वविषयतानिरूपकत्वात्।

तथा च हेतुतावच्छेदकनिष्ठविषयताभिन्ना या विषयता तदनिरूपिका या हेतुविषयता तद्भिन्ना सती अधिकरणत्वविषयताभिन्ना या विषयता तदनिरूपिका याऽधिकरणविषयता तद्भिन्ना सती वृत्तितात्वनिष्ठविषयताभिन्ना या विषयता तदनिरूपिका या वृत्तित्वनिष्ठविषयता तद्भिन्नासती प्रतियोगिवैयधिकरण्यविषयताभिन्ना सती अभावत्वविषयताभिन्ना या विषयता तदनिरूपिका याऽभावनिष्ठविषयता तद्भिन्ना सती प्रतियोगितात्वविषयताभिन्ना या विषयता तदनिरूपिका या प्रतियोगित्वविषयता तद्भिन्ना सती अवच्छेदकतात्वविषयताभिन्ना या विषयता तदनिरूपिका याऽवच्छेदकत्वप्रकारिता तदवच्छिन्नत्वेन प्रतिबध्यतानिवेशनीयेति निष्कृष्टार्थः। न्यूनधारकपर्याप्तिरपि निवेश्या। तेनाऽभावो न हेतुसमानाधिकरणः—प्रतियोगितानवच्छेदकं वन्हित्वम् अभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानतो नानुमित्यापत्तिः।

परन्तु प्रतिबध्यतावच्छेदककोटौ एतादृशपर्याप्तिपर्यालोचने महागौरवमतः प्रकारिताव्यापकत्वनिवेशः।

अथ तथापि प्रतिबध्यतायामेव प्रकारिताव्यापकत्वं निवेश्यतां किं प्रकारितायां तद्व्यापकत्वनिवेशनेति चेन्न। प्रकारित्वस्य संस्कारादिसाधारणतया तादृशप्रकारिताव्यापकप्रतिबध्यत्वाप्रसिद्धेः। अतः प्रकारितायामेव प्रकारिताव्यापकत्वं निवेशितम्।

न च तादृशग्रहत्वव्यापकत्वमेव प्रतिबध्यतायां निवेश्यताम्, तेनैव संस्कारव्यावृत्तेरिति वाच्यम्। तादृशग्रहत्वस्याऽऽहार्यज्ञानसाधारणतया तद्व्यापकत्वस्य प्रतिबध्यतायामप्रसिद्धेः। न च इच्छाऽप्रयोज्यत्वं प्रकारितायां निवेशनीयम्, तत्रापि द्वितीयप्रकारितायां तदवश्यं निवेशनीयम् अन्यथा तादृशप्रकारिताव्यापकाऽऽहार्यज्ञानीयप्रकारित्वावच्छिन्नप्रतिबध्यत्वाप्रसिद्धेरिति चेन्न। तथा सति लाघवानवकाशादिति ध्येयम्।

केचित्तु इच्छाप्रयोज्यताद्दशप्रकारताशालिग्रहत्वव्यापकप्रतिबध्यतानिवेशे ज्ञानभेदेन प्रतिबध्यताभिन्नत्वमते ताद्दशप्रकारताशालिग्रहत्वं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमिति ज्ञाने वर्तते, तत्र हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतावान्नेति भेदसत्वात्तदवच्छेदकत्वमेव प्रतिबध्यतायामिति रीत्या सर्वत्रैव व्यापकत्वासंभवात्। न च प्रतिबध्यतायां ताद्दशप्रकारिताशालिग्रहत्वव्यापकत्वं स्वावच्छेदकप्रकारितावत्त्वसंबन्धेन वक्तव्यम् तथा च नोक्तानुपपत्तिरिति वाच्यम्। तथापि तत्तत्प्रतिबध्यतावान्नेति भेदसत्वेनोक्तदोषतादवस्थात्। न च स्वावच्छेदकप्रकारितावच्छेदकधर्मावच्छिन्नप्रकारितावत्त्वसंबन्धेन व्यापकता ग्राह्या, तथा च सर्वासां प्रतिबध्यतानां ताद्दशसम्बन्धेन सत्वादिति वाच्यम्। उक्तलक्षणापेक्षया लाघवानवकाशादिति आहुः।

अथ तथापि ताद्दशप्रकारताशालिग्रहत्वव्यापकत्वं प्रतिबन्धकतायामेव निवेशनीयम्, व्यापकता च स्वनिरूपितप्रतिबध्यतावत्त्वसंबन्धेनेति वाच्यम्। प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारताशालिग्रहत्वस्य लौकिकसन्निकर्षजन्यं दोषविशेषजन्यं वा यत्प्रतियोगिव्यधिकरणहेतुसमानाधिकरणप्रतियोगितावच्छेदकमिति ज्ञानं तत्र एवं घटवद्भूतलं घटाभाववत्, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं च वन्हित्वमिति आहार्यज्ञानेपि सत्वेन तत्र च स्वनिरूपितप्रतिबध्यतावत्त्वसंबन्धेन प्रतिबन्धकत्वाभावात्तद्वारणार्थं अनाहार्यलौकिकसन्निकर्षाजन्यदोषविशेषाजन्यप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारताशालिग्रहत्वव्यापकत्वनिवेशे च महागौरवापत्तेः।

अथैवमपि ताद्दशप्रकारिताव्यापकत्वं न ताद्दशप्रकारितावन्निष्ठाभावाप्रतियोगित्वम्. ताद्दशप्रकारिता घटोभयाभावमादायाऽप्रसिद्धेः। न च ताद्दशप्रकारितावन्निष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वं न तदिति वाच्यम्। तथा सति प्रकारितात्वादिकमादाय भूतलत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारित्वादीनां व्यापकत्वापत्त्या घटवद्भूतलमिति ज्ञानवारणासंभवात्।

न च ताद्दशप्रकारित्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नावच्छेदकताकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालित्व -

निवेशान्न दोष इति वाच्यम्। भूतलत्वावच्छिन्नविशेष्यतानिरूपित-घटत्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यताया अपि तादृशप्रकारिताव्यापकतावच्छेदकप्रकारितात्वावच्छिन्नावच्छेदकताकत्वेन तन्निरूपितप्रतिबन्धकताशालितया घटाभाववद्भूतलमिति ज्ञानवारणासंभवात्। एवं हेतुतावच्छेदकावच्छिन्नविषयतानिरूपिताऽधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताऽभावविषयतानिरूपित प्रतियोगित्वविषयतानिरूपिताऽवच्छेदकत्वप्रकारित्वादीनां तादृशप्रकारिताव्यापकतया तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालि हेतुसमानाधिकरणघटाभावप्रतियोगितानवच्छेदकं वन्हित्वमित्यादि-ज्ञानवारणासंभवाच्चेति चेन्मैवम्।

प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितावन्निष्ठाभावप्रतियोगितानवच्छेदकप्रकारितात्वपर्याप्तावच्छेदकताकावच्छेदकताकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिज्ञानत्वेन हेतुत्वोपगमेन सामञ्जस्यं स्यात्।

तादृशप्रकारिताव्यापकतावच्छेदकं यद्धेतुविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताऽभावविषयतानिरूपित-प्रतियोगित्वविषयतानिरूपितावच्छेदकत्वप्रकारितात्वं तत्पर्याप्तावच्छेदकताकावच्छेदकताकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालितया वह्नित्वं हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति ज्ञानस्य संग्रहः।

प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वन्हित्वमिति ज्ञानस्य च तादृशप्रकारिताव्यापकतावच्छेदकं यत्प्रतियोगिविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितं हेतुविषयतानिरूपिताधिकरणविषयत्वनिरूपितवृत्तित्वविषयतानिरूपिताभावविषयत्वं तन्निरूपितप्रतियोगित्वविषयतानिरूपिताऽवच्छेदकत्वप्रकारितात्वं तत्पर्याप्तावच्छेदकताकवच्छेदकताकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालित्वेन तत्संग्रहः।

भूतलं घटाभाववदिति ज्ञानस्य हेतुसमानाधिकरणघटाभावप्रतियोगितानवच्छेदकं वन्हित्वमिति ज्ञानस्य च तादृशप्रकारितात्वपर्याप्तावच्छेदकताकावच्छेदकताकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालित्वाभावादसंग्रहः।

ननु प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वपर्याप्तावच्छेदकताकप्रकारितानिष्ठावच्छेदकताकप्रति-

बध्यतानिरूपितप्रतिबन्धकताशालित्वेनैवानुगमे तादृशावच्छेदकत्व प्रकारितावन्निष्ठाभावप्रतियोगितानवच्छेदकप्रकारितात्वपर्याप्तावच्छे - दकताकावच्छेदकताकत्वरूपगुरुतरनिवेशो व्यर्थः। तथा च प्रतियोग्य समानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वन्हित्व- मिति धियस्तादृशप्रकारितानिष्ठावच्छेदकताकप्रतिबध्यतानिरूपित- प्रतिबन्धकताशालित्वेन संग्रहः।

न च हेतुसमानाधिकरणप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानाऽसंग्रहः, प्रतियोग्यसमानाधिकरणाभावप्रतियोगितावच्छेदकत्व- पर्याप्तावच्छेदकताकप्रकारितायास्तादृशज्ञानप्रतिबध्यतानवच्छेदकत्वात् हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वं प्रतियोग्यसमा- नाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमिति ज्ञानसाधारणहेतुविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्व - विषयतानिरूपिताभावविषयतानिरूपितप्रतियोगित्वविषयतानिरूपि - तावच्छेदकत्वप्रकारिताशालिबुद्धित्वस्यैव प्रतिबध्यतावच्छेदकत्वादिति वाच्यम्। तादृशप्रकारितात्वेन प्रतियोग्यसमानाधिकरणहेतुसमानाधि- करणाभावप्रतियोगितावच्छेदकत्वपर्याप्तावच्छेदकताकप्रकारित्वस्यापि प्रतिबध्यतावच्छेदकत्वात्। पर्याप्तिनिवेशो व्यर्थ इति तु न शंक्यम्। प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरण घटाभावप्रतियोगितानव- च्छेदकं वह्नित्वमित्यादिज्ञानवारकतया तत्सार्थक्यात् इति चेन्न। प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदक- वन्हित्वाभाववद्भूतलमित्यादिज्ञानानामनुमितिहेतुत्वापत्तेः। तथाहि- भूतलत्वावच्छिन्नविशेष्यतानिरूपिततादृशवन्हित्वत्वावच्छिन्नप्रकारता- शालिबुद्धित्वावच्छिन्नप्रतिबध्यतायाः वन्हित्वत्वावच्छिन्नविशेष्यता- निरूपिततादृशप्रतियोगितावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रकारि - त्वावच्छिन्नत्वात्।

यद्यपि साध्यतावच्छेदकनिष्ठमुख्यविशेष्यतानिरूपिततादृशावच्छे- दकत्वत्वपर्याप्तावच्छेदकताकप्रकारित्वावच्छिन्नत्वनिवेशान्नैष दोषः। तथापि प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगिता- वच्छेदकं वह्नित्वं घटाभाववदित्यादिज्ञानवारणाऽसंभवात्। तथाहि तादृशवह्नित्वत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताशा- लिबुद्धित्वावच्छिन्नप्रतिबध्यतायाः साध्यतावच्छेदकनिष्ठमुख्यविशेष्य- तानिरूपितप्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगि-

तावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रकारित्वावच्छिन्नत्वादिति संक्षेपः।

अनुगमस्तु प्रतियोगिताविशिष्टप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिज्ञानविषयत्वेनेति। प्रथमवैशिष्ट्यं च स्वतादात्म्य-स्वविशिष्टहेत्वधिकरणावृत्त्यभावीयत्वोभयसं०। स्ववैशिष्ट्यं च स्वावच्छेदकावच्छिन्नाधिकरणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकता-कप्रतियोगिताकभेदवत्त्वसं०। प्रकारितायां प्रतियोगितावै० स्वावच्छेदकत्वप्रकारिताव्यापकत्वसं०।

अनौपाधिकः संबन्धो व्याप्तिरित्याचार्याः। उपाधिश्च साध्यव्यापकत्वे सति साधनाव्यापकः। यथा धूमवान् वन्हेरित्यत्र आर्द्रेन्धनवत्त्वम्। सर्वत्र व्यभिचारिणि साध्यवद्भिन्नत्वप्रकारकप्रमाविशेष्यत्वाभाव उपाधिः। तथा च साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वे सति साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वम्। तथा चाऽनौपाधिकत्वे सति साध्यसंबन्धितावच्छेदकरूपत्वं फलितम्। साध्यसंबन्धितावच्छेदकरूपे स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तराघटितत्वं विशेषणीयम्, स्वं-साध्यसंबन्धितावच्छेदकत्वेनाभिमतम्। तेन नीलधूमत्वादेर्वारणम्। धूमप्रागभावत्वसंग्रहाय स्वसमानाधिकरणेति।

परन्तु अनौपाधिकत्वं न व्याप्तिर्व्यभिचारधीविरोधिधीविषयत्वाभावात्, अनौपाधिकत्वज्ञानस्य सोपाधिकत्वज्ञानविरोधित्वेपि सोपाधिकत्वज्ञानं न साक्षाद्व्याप्तिधीविरोधि, किन्तु व्यभिचारोन्नायकतया परमुखनिरीक्षकत्वेन विरोधित्वमस्य। एवं चानुमितेस्तत्कारणस्य साक्षाद्विरोधिन एव हेत्वाभासत्वात्। उपाधिधर्मिकसाध्यव्यापकत्वादिज्ञानस्य भिन्नधर्मिकतया हेतुधर्मिकसाध्यव्याप्तिज्ञानाविरोधित्वात्। उक्तं च न हि अन्यस्य साध्यव्यापकत्वादिज्ञानमन्यस्यव्याप्तिधीविरोधीति। एवं चाऽनौपाधिकत्वज्ञानं नानुमितिहेतुरिति सिद्धम्।

कात्स्न्र्येन संबन्धो व्याप्तिरिति वल्लभमतम्। तदपि न युक्तम्। कात्स्न्र्यं साधनस्य साध्यस्य वा। आद्येपि कृत्स्नसाधनसामानाधिकरण्यं साध्ये कृत्स्नेषु साधनेषु साध्यसामानाधिकरण्यं वा। तत्र न विकल्पद्वयम्, एकव्यक्तिहेतुके तदभावात्, नानाव्यक्तिहेतुकेपि सकलधूमसंबन्धस्य कस्मिन्नपि वन्हावभावात्। नापि सकलसाध्येन संबन्धो व्याप्तिः, कस्मिंश्चिदपि धूमे सकलवन्हिसंबन्धाभावात्। एवं कात्स्न्र्यं न साधनाश्रये साध्याश्रये वा साध्यसामानाधिकरण्ये साधनसामानाधिकरण्येवेत्यन्यतो द्रष्टव्यम्।

व्यभिचाराभावो व्याप्तिः, व्यभिचारश्च साध्याभाववदवृत्तित्वम्, तदभावश्च साध्याभाववदवृत्तित्वं व्याप्तिरित्यपि न युक्तम्। केवलान्वयिन्यभावात्।

यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिताश्रयसमानाधिकरणास्तत्त्वं व्याप्तिः। केवलान्वयिनि घटत्वेन वाच्यत्वाभावमादाय लक्षणसमन्वय इत्यपि न युक्तम्। व्यधिकरणधर्मावच्छिन्नाभावानंगीकारात्। तदुक्तम्—प्रतियोग्यवृत्तिश्चधर्मो न प्रतियोगितावच्छेदक इति। व्यधिकरणधर्मावच्छिन्नाभावे विप्रतिपत्तिस्तु वाच्यत्वादिमात्रप्रतियोगिकोऽभावः प्रतियोगितावच्छेदकताघटकसंबन्धेन वाच्यत्वाद्यवृत्तिधर्मावच्छिन्नप्रतियोगिताको न वेत्याकारिका। अत्र विधिकोटिर्व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगन्तृसौन्दडमतेन। निषेधकोटिस्तुतदनभ्युपगन्तृमतेन।

न चात्र प्रसिद्धाभावस्य पक्षत्वे विधिकोटेर्न संभवः, तत्र तदसत्वादिति वाच्यम्। पाकपक्षककृतिसाध्यत्वानुमितौ अप्रसिद्धपाकवदत्रापि अप्रसिद्धाभावरूपपक्षे एव साध्यस्य पर्यवसानात्।

न च समानाधिकरणधर्मावच्छिन्नाभावमादाय विधौ बाधः, निषेधे च सिद्धसाधनमिति वाच्यम्। पक्षतावच्छेदकसामानाधिकरणं न विधौ, निषेधे च तदवच्छेदेन साध्यसिद्धेरुद्देश्यत्वात्।

वाच्यत्वमात्रप्रतियोगिकाऽभावो निरुक्तसंबन्धेन वाच्यत्वाद्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकः वाच्यत्वाद्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन प्रत्यक्षविषयत्वात्, यो यदवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन प्रत्यक्षविषयः स तदवृत्तिधर्मावच्छिन्नप्रतियोगिताकः, यथा पटाऽवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन प्रत्यक्षविषयो घटत्वावच्छिन्नाभावः इति विधिकोटावनुमानप्रकारः।

निषेधकोटावनुमानप्रकारश्च वाच्यत्वादिमात्रप्रतियोगिकाभावो न वाच्यत्वाद्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकः वाच्यत्वाद्यवृत्तिधर्मप्रकारकनिश्चयं विना प्रत्यक्षविषयत्वात्, यो यत्प्रकारकयद्विशेष्यकनिश्चयं विना प्रत्यक्षविषयः स न तद्धर्मावच्छिन्न 'तद्वृत्ति' प्रतियोगिताकः यथा घटत्वावच्छिन्नाभावः।

न च परिमाणाभावादिसमनियतसंख्याभावादौ व्यभिचारः। समनियताभावयोरैक्यानुपगमादिति ध्येयम्।

अत्र प्रथमानुमाने व्यभिचारशङ्कानिराकरणानुकूलतर्काभावाद-

प्रयोजकत्वम् , स्वरूपासिद्धिश्च । द्वितीयानुमाने तु यद्ययं प्रतियोग्य-वृत्तिधर्मावच्छिन्नप्रतियोगिताकःस्यात्तदा प्रतियोगितावच्छेदकविशिष्ट-प्रतियोगिज्ञानजन्यो न स्यादित्यनुकूलतर्कः प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याऽभावलौकिकप्रत्यक्षहेतुत्वादिति भावः । तादृशज्ञानस्य हेतुत्वानंगीकारे निर्विकल्पकादपि घटो नास्तीति प्रत्ययस्यापत्तेः। एवं च तादृशकार्यकारणभावस्यावश्यकतया प्रकृते वाच्यत्वं समवायी त्यादिज्ञानाभावेन समवायित्वेन वाच्यत्वं नास्तीति प्रत्यक्षासंभवेन प्रथमानुमाने स्वरूपासिद्धिर्दुर्वारेति भावः।

न च वाच्यत्वं समवायीति भ्रमात्मकज्ञानसंभवेन तत्काले समवायितया वाच्यत्वं नास्तीत्यादि प्रत्यक्षं संभवत्येवेति वाच्यम् । वाच्यत्वं न समवायीति विशेषदर्शनदशायां वाच्यत्वं समवायीति भ्रमासंभवेन तदानीमनुभूयमानायाः समवायित्वेन वाच्यत्वं नास्तीति प्रतीतेर्वाच्यत्वे समवायित्वाभावविषयकत्वस्याऽऽवश्यकत्वे तादृशभ्रमकालेऽपि जायमानायास्तस्याः स एव विषयोऽस्तु किं प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वकल्पनेनेत्याशयात् । ननु दीधितिकृन्मते अभावबुद्धौ प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानं न हेतुः, इदन्त्वादिनाऽभावप्रत्यक्षे व्यभिचारात् , नापि अभावत्वप्रकारकप्रत्यक्षे मानाभावादिति चेदेवमपि विशेषणतावच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यावगाहिबोधहेतुत्वात् , यथा समवायिवाच्यत्ववदित्यादिविशिष्टवैशिष्ट्यबोधे वाच्यत्वे समवायीत्यादिज्ञानं हेतुः—तथा समवायित्वेन वाच्यत्वंनास्तीत्यादिबोधेपि तद्धेतुः तस्य विशिष्टवैशिष्ट्यबोधत्वादिति। एवं च घटत्वेन पटो नास्तीत्यादिप्रतीतेः पटे घटत्वाभावो विषयः। शशशृङ्गं नास्तीत्यादिप्रतीतेश्च शशे शृङ्गाभावः—शृङ्गे वा शशीयत्वाभावोविषय इति संक्षेपः।

अविनाभावो व्याप्तिरिति बौद्धाः। विना साध्येन विना साध्याभाववतीत्यर्थः। नञर्थस्याभावेऽन्वयः। वृत्त्यभाव इति यावत्। साध्याभाववद्वृत्त्यभाववत्त्वं फलितम्। अथ वा साध्याभाववत्त्वावच्छेदेन वृत्त्यभाव इत्यर्थः। साध्याभावव्यापकीभूताभावप्रतियोगित्वं हेतौ व्याप्तिरिति यावत्। अविनाभावः अव्यभिचारः व्याप्तिरिति पर्यायः। व्याप्तिज्ञाने सहचारग्रहः कारणम्। तदुक्तम्। व्यभिचारस्याऽग्रहोऽपि सहचारग्रहस्तथा। हेतुर्व्याप्तिग्रहे इति।

यत्र हेतुस्तत्र साध्यम् इत्यन्वयसहचारः, सपक्षवृत्तित्वमिति

यावत्। यत्र साध्याभावस्तत्रहेत्वभाव इति व्यतिरेकसहचारः, विपक्षावृत्तित्वमिति यावत्। तन्निश्चयो व्याप्तिज्ञाने हेतुरित्यर्थः। अत्र बौद्धाः। सपक्षवृत्तित्व–विपक्षावृत्तित्वनिश्चयेपि हेतुरस्तु साध्यं मास्तु इति व्यभिचारशंकाया अनिवृत्तेः। किन्तु वन्हिः कारणं धूमः कार्यमिति निश्चयानन्तरं तादृशशंकाया नोत्पत्तिः, कारणं विना कार्यानुत्पत्तेः। एवं स्वभावादपि व्याप्तिनिश्चयः। धूमस्यायं स्वभावः "वन्हि विनाऽनुत्पद्यमानता वन्हिसत्ताधीन सत्ता च। तदुक्तम्।

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमोऽदर्शनान्नदर्शनात्। अदर्शनान्नेति। साध्यहेत्वोरदर्शनान्नेत्यर्थः। व्यतिरेके सहचारग्रहान्नेति यावत्। दर्शनान्नेति। अन्वयसहचारग्रहान्नेत्यर्थं।

तदप्यसत्। कार्यकारणभावेपि अवश्यं भूयो दर्शनबलादेषाऽविनाभावग्रहणमिति मन्तव्यम्। अन्यथा देशान्तरे कालान्तरेवाऽग्निं विनापि धूमो भविष्यतीति शंका स्यात्। अग्निधूमयोः कार्यकारणभावावगतौ सत्यां कथमग्निं विना धूमस्य संभव, धूमस्य हेतुकत्वास्वीकारेणावश्यं स्वकारणादेवोत्पत्तिस्वीकरणीयत्वादिति चेत् सर्वो धूमोऽग्निकार्य इति ज्ञानमपि भूयोदर्शनं विना संभवतीति तदभ्युपगन्तव्यम्। न चाग्नेरसाधारणं कार्यं धूमः। तस्य धूमान्तरादपि उत्पत्तेरभ्युपगयात्।

किं च यत्र तादात्म्यतदुत्पत्ती तत्राऽव्यभिचार इति न व्याप्तिः, वन्हितो धूमोत्पत्तावपि धूमधर्मे पार्थिवत्वादौ वन्हिव्यभिचारेण पार्थिवत्वात्मकधूमे व्यभिचारात्, धर्मधर्मिणोरभेदात्। एवं वृक्षः शिंशपाया इत्यादौ सत्यपि शिंशपायां वृक्षतादात्म्ये वृक्षत्वे शिंशपाया व्यभिचारो बोध्यः। यदि यत्राऽव्यभिचारस्तत्र तादात्म्यतदुत्पत्तीत्युच्यते तर्हि अव्यभिचार एवास्तु गमकः, किं तादात्म्यतदुत्पत्तिभ्यामिति कन्दल्यां स्पष्टम्। कार्यादिव्यतिरेकेणापि अनुमानदर्शनाच्च। यथा अध्वर्युः सन्निहितहोतृकः ओश्रावयेति शब्दकर्तृत्वात् पूर्वावगताऽध्वर्युवत्। नचाध्वर्युः होतुः कार्यं कारणं वेति तत्रैव स्पष्टम्। चन्द्रोदयः समुद्रवृद्धेः कुमुदविकासस्य च लिङ्गम्, समुद्रस्य वृद्धिः अवयवोपचयः, स च स्वावयवेभ्यो निष्पद्यते न तु चन्द्रोदयात्। विकासश्चाऽनारंभकसंयोगप्रतिद्वन्द्वी अवयवानां विभागः, क्रियाकार्यः, न चन्द्रोदयस्येत्यादिभाष्ये स्पष्टमिति संक्षेपः।

एवं च साध्यतावच्छेदके हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वमेव व्यभिचारः, तदभावश्चाऽव्यभिचरितत्वं व्याप्तिरित्यभिधीयते।

द्विविधा चेयं व्याप्तिः, अत्यन्ताभावगर्भा अन्योन्याभावगर्भा च ।

अत्रोऽत्यन्ताभावगर्भव्याप्तौ असंभववारणाय हेतुसमानाधिकरणेति अत्यन्ताभावविशेषणम् । तदर्थश्च हेतुतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वम् । तेन सत्ताधिकरणगुणादौ द्रव्यत्वाभावसत्त्वेपि नाव्याप्तिः । सामान्यधर्मावच्छिन्नाधिकरणत्वानभ्युपगमे तु स्वाश्रयाधिकरणयन्निष्ठाधिकरणतानिरूपकतानवच्छेदकत्व, समान्यतोऽधिकरणतानिरूपकतावच्छेदकत्वोभयाभाववद्धेतुतावच्छेदकाश्रयाधिकरणं यत्तदेव हेत्वधिकरणेत्यनेन विवक्षितम् ।

कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिवारणाय प्रतियोगिव्यधिकरणेति, तदपि अभावविशेषणम् । तदर्थश्च प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यम्, तेन ज्ञानवान् द्रव्यत्वादित्यादौ द्रव्यत्वाधिकरणे घटे समवायेन ज्ञानाभावस्य विषयतया प्रतियोगिसामानाधिकरण्येपि नाभावान्तरमादायातिव्याप्तिः, न वा विशिष्टसत्तावान् जातेरित्यादौ जात्यधिकरणगुणादौ विशिष्टसत्ताभावस्य सत्तात्मकप्रतियोगिसमानाधिकरणत्वेपि अभावान्तरमादायाऽतिव्याप्तिः ।

नव्यास्तु संयोगि द्रव्यत्वादित्यत्रैव संयोगसामान्याभावमादायाऽव्याप्तिः । न च संयोगसामान्याभावो न वृक्षवृत्तिः प्रतियोग्यधिकरणावृत्तित्वादित्यनुमानेन संयोगसामान्याभावस्य लक्षणाघटकत्वात्कुतोऽव्याप्तिरिति वाच्यम् । स्वरूपासिद्धेः । संयोगसामान्याभावः प्रतियोग्यधिकरणवृत्तिः एककालावच्छेद्य-एकदेशावच्छेद्यप्रतियोग्यधिकरणवृत्तिताशून्यत्वादित्यनुमानसाम्राज्यात् । उक्तं चाऽवच्छेदकभेदेनैकत्र भावाभावयोः समावेशादिति ।

नह्येवं द्रव्यं संयोगसामान्याभाववदिति प्रत्यक्षापत्तिः, द्रव्यं यदि प्रत्यक्षविषयत्वे सति संयोगाभाववत्स्यात् तदा संयोगाभावप्रकारकप्रत्यक्षीय विशेष्यतावत्स्यादित्यापत्तिर्बोध्या । विशेष्यतासंबन्धेन संयोगाभावप्रकारकप्रत्यक्षं प्रति विशेष्यतासंयोगोपलब्धेः प्रतिबन्धकत्वात् इति वदन्ति । प्रत्यक्षाभावे न संयोगसामान्याभावस्य द्रव्येऽसिद्धेः ।

न च वृक्षः संयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादित्यनुमानादेव संयोगसामान्याभावसिद्धिरिति वाच्यम्, उक्तहेतोर्गुरुधर्मावच्छिन्नतया व्याप्यतानवच्छेदकत्वेन व्याप्यत्वासिद्ध-

त्वात्, अभाववत्वादित्यस्यैव सम्यक्त्वादिति भावः। व्यभिचारशङ्कानिराकरणानुकूलतर्करहितत्वाच्च, संयोगस्येष्टत्वादिति भावः। निर्गुणत्वादेरुपाधित्वाच्चेति ध्येयम्।

न च यो यदीय यावद्विशेषाभाववान् स तत्सामान्याभाववानिति सामान्यव्याप्तिरेवास्तु, सामान्यव्याप्तौ तु प्रकृतसाधने प्रकृतसाध्यव्याप्तिग्रहासत्वेपि साधनसजातीये साध्यसजातीयव्याप्तिग्रहात्प्रकृतपक्षे प्रकृतसाधनवत्तानिश्चयोत्तरं प्रकृतसाध्यवत्तानुमितिर्भवतीति नियम इति वाच्यम्—यत्तदर्थयोरननुगमात्, एकावच्छेदेन संयोगयावद्विशेषाभाववत्वस्योपाधित्वाच्चेति।

ननु यो यद्धर्मस्यानवच्छेदकः स तदभावस्यावच्छेदक इति सामान्यव्याप्त्यैव वृक्षत्वावच्छेदेन संयोगसामान्याभावः साधनीय इति चेन्न। गुणाद्यनवच्छेदकप्रमेयत्वादौ गुणाभावावच्छेदकत्वविरहेण व्यभिचारप्रसंगात्। वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेदकत्वादिति विशेषानुमानप्रसंगस्तु स्वरूपासिद्धत्वादनुपादेयः। एवं वन्हिमान् धूमादित्यादौ शिखरावच्छेदेन पर्वते वन्ह्यभावमादायाऽव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यदलम्। तच्च व्याप्यवृत्तिसाध्यकस्थले नोपादेयम्। व्याप्यवृत्तित्वं च साध्यतावच्छेदकसंबन्धेन यत्स्वाधिकरणं तद्वृत्यभावस्य तादृशसंबन्धावच्छिन्नप्रतियोगित्वाभाववत्वम्।

अथैवमपि कपिसंयोगाभावस्य गुणे प्रतियोगिव्यधिकरणतयाऽव्याप्तितादवस्थ्यम्। न च प्रतियोगिमद्वृत्तिभिन्नत्वप्रतियोगिव्यधिकरणशब्दार्थः। एवं कपिसंयोगाभावस्य प्रतियोगिमद्वृत्तिभिन्नत्वाभावेन 'प्रतियोगिमद्वृत्तित्वेनैव' लक्षणाघटकत्वान्नाव्याप्तिरितिवाच्यम्। तथा सति संयोगसाध्यकव्यभिचारिण्यतिव्याप्तिः अधिकरणभेदेनाभावभेदविरहेण संयोगाभावस्य प्रतियोगिमद्वृत्तिभिन्नत्वाभावात्, सामानाधिकरण्यवतो न तदभाववत्वमिति प्रतीतेः। संयोगाभावे गुणे न संयोगसामानाधिकरण्यमिति प्रतीतेस्तु संयोगाभावो गुणावच्छेदेन संयोगसामानाधिकरण्याभाववानिति नार्थः, संयोगाभावस्य प्रथमान्तत्वाभावात्। किन्तु संयोगाभावनिष्ठं संयोगसामानाधिकरण्यं न गुणावच्छेद्यम्, संयोगाभावनिष्ठसंयोगसामानाधिकरण्यावच्छेदकत्वाभाववान् गुण इति वार्थः। एवं चोक्ताव्याप्तिस्तदवस्थैवेति चेन्न। प्रतियोगिसामानाधिकरण्याभावविशिष्टाभावे

हेत्वधिकरणवृत्तित्वस्य विवक्षितत्वात्। एवं च संयोगसामानाधिकरण्याभाववविशिष्टसंयोगाभावे वृक्षवृत्तित्वविरहान्नाव्याप्तिः। ननु संयोगवद्वृत्तित्वाभावविशिष्टसंयोगाभावे कथं वृक्षानिरूपितवृत्तित्वाभावः, संयोगाभावे वृत्तितायाः सत्वेन विशिष्टधर्मावच्छिन्नाधेयत्वकेवलविशेष्यतावच्छेदकधर्मावच्छिन्नाधेयत्वयोरैक्यादिति चेन्न। वैशिष्ट्यावच्छिन्नाधेयत्वस्यातिरिक्तत्वोपगमात्। अनतिरिक्तत्वे तु प्रतियोगसामानाधिकरण्याभावविशिष्टस्याधिकरणं यद्धेत्वधिकरणं तद्वृत्तित्वमभावे वाच्यम्।

अत्र हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावविशिष्टस्याऽभावस्य विवक्षणात्संयोगाभावस्य हेत्वधिकरणगुणावच्छेदेन प्रतियोगिसामानाधिकरण्याभाववत्तया, कपिसंयोगाभावस्य च हेत्वधिकरणैतद्वृक्षावच्छेदेन प्रतियोगिसामानाधिकरण्यवत्तया नातिव्याप्त्यव्याप्त्योरवकाशः।

अत्र प्रतियोगिसामानाधिकरण्यानवच्छेदकं यद्धेत्वधिकरणं तद्वृत्तिर्योऽभाव इत्यर्थे सामानाधिकरण्यव्याप्यवृत्तितया तदवच्छेदकमप्रसिद्धम्, प्रतियोग्यधिकरणावृत्तित्वघटकवृत्तित्वनिवेशे गौरवं चातः स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं यद्धेत्वधिकरणं तद्वृत्त्यभावेपि अभावान्तमूलस्य निष्कृष्टार्थो बोध्यः।

तथा च यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकमित्यादि।

कालिकसंबन्धेन घटसाध्यकमहाकालत्वहेतौ कालिकेन प्रतियोगिव्यधिकरणाभावाप्रसिध्याऽव्याप्तिवारणाय संबन्धधर्मिकोभयाभावघटितकल्पः आदृतः।

कालिकेन गगनादेर्वृत्तिमत्वे तु प्रतियोगिताधर्मिकोभयाभावघटितकल्पः आदृतः।

वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वे तु यादृशप्रयोगितावच्छेदकानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नावच्छेदकत्वकल्पयद्धर्मावच्छेदकताकत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरुक्ता जगदीशेन। व्यभिचारिणि तु साध्यवत्सामान्याभावमादाय नातिव्याप्तिरित्यलम्।

—:०ॐ०:—

श्रीः

अथ

# सिद्धान्तलक्षणम्

## ।। सिद्धान्तलक्षणचिन्तामणिः ।।

**अत्रोच्यते प्रतियोग्यसमानाधिकरणयत्समा-**

---

लक्ष्मीः

यत्कारुण्यकणस्पर्शान्मूको वाचस्पतीयति ।
ब्रह्मोपेन्द्रशिवोपास्यां नत्वा वाचामधीश्वरीम् ।। १ ।।
नत्वा गुरुपदद्वन्द्वं ममाज्ञानतमोभिदम् ।
जगदीशवचोव्याख्यां व्याप्तिसिद्धान्तआरभे ।। २ ।।

ननु अनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिरित्यादिशंकायां सिद्धान्तमाह । **अत्रोच्यते इत्यादिना**—मयेत्यध्याहार्यम् । अस्मत्पदार्थो मणिकारः, तस्य समवेतत्वसम्बन्धेन तृतीयार्थकृतावन्वयः । तस्याश्च जन्यत्वसम्बन्धेन धात्वर्थव्यापारेऽन्वयः । धात्वर्थश्च ज्ञानानुकूलो व्यापारः । तस्य निरूपितत्वसम्बन्धेन कर्माख्यातार्थविषयतायामन्वयः । आख्यातार्थविषयतायाश्च स्वरूपसम्बन्धेन प्रथमान्तपदार्थव्याप्तौ अन्वयः ।

तथा च मणिकारसमवेतकृतिजन्यज्ञानानुकूलव्यापारनिरूपितविषयतावती जिज्ञासाविषयीभूता प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नभिन्नसाध्यसामानाधिकरण्याऽभिन्ना व्याप्तिरिति चिन्तामणिवाक्यार्थबोधः ।

**प्रतियोग्यसमानाधिकरणेति ।** स्वप्रतियोग्यसमानाधिकरणेत्यर्थः । स्वप्रतियोग्यधिकरणाऽवृत्तिरिति यावत् । इदञ्च अत्यन्ताभावविशेषणम् । अस्य प्रयोजनं कपिसंयोगी एतद्वृक्षत्वादित्यादिसंग्रहायाऽसमानाधिकरणान्तमित्यादिना स्वयमेव वक्ष्यति । यत्समानाधिक-

**नाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छि-न्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः ।**

---

रणेति । यत्पदं । हेतुपरम् , हेतुसमानाधिकरणेत्यर्थः । इदमपि अत्यन्ताभावविशेषणम् असंभववारणाय, वन्ह्यभावप्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वस्य वह्नावभावात्, तदुपादाने च वन्ह्याद्यभावस्य हेतु सामानाधिकरण्याभावान्न दोषः । यन्न भवति इत्यत्र यत्पदं साध्यपरम् । यत्पदोत्तरं नञः प्रतियोगितावच्छेदकावच्छिन्ने इत्यस्यान्वयात् प्रतियोगितावच्छेदकावच्छिन्नभिन्नं यत्साध्यमित्यर्थः । तेन । साध्येन । तस्य । हेतोः ।

तथाच प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नभिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति लक्षणम् । वह्निमान् धूमादित्यादौ प्रतियोग्यसमानाधिकरणो धूमसमानाधिकरणश्च योऽत्यन्ताभावः घटो नास्तीत्यभावस्तस्य प्रतियोगितावच्छेदकावच्छिन्नो घटस्तद्भिन्नसाध्यो वन्हिस्तत्सामानाधिकरण्यं धूमे इति लक्षणसमन्वयः । धूमवान् वन्हेरित्यत्र वन्ह्यधिकरणाऽयोगोलकवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्न एव धूम इति नातिव्याप्तिः ।

ननु अत्यन्तपदं किमर्थम्? हेतुसमानाधिकरणाभावेत्यादेरेव सम्यक्त्वादिति चेत्, "अत्यन्तपदञ्च" इत्यादिना अग्रे समाधास्यमानत्वात् । एतेन धूमसमानाधिकरणवह्निभेदस्य प्रतियोगिसमानाधिकरणत्वेनैव वारणादत्यन्तपदं व्यर्थं इति निरस्तम् ।

ननु हेतुसन्निष्ठाभावप्रतियोगिताश्रयभिन्नं तादृशप्रतियोगिताशून्यं वा यत्साध्यं तत्सामानाधिकरण्यं इत्यस्यैव सम्यक्त्वे अवच्छेदकावच्छिन्नत्वोपादानं व्यर्थमिति चेन्न । तत्सम्बन्धावच्छिन्नाभावप्रतियोगित्वं तेन सम्बन्धेन वृत्तिमत्येव प्रतियोगिनि स्वीक्रियते इति नियमात् समवायेन प्रमेयस्य साध्यतायां भावत्वहेतौ अतिव्याप्तिः, समवायेन प्रमेयाभावप्रतियोगितायाः समवेतप्रमेये एव सत्वेन

लक्ष्मीः

तादृशसमवेत[1] प्रमेयरूपप्रतियोगिभिन्नत्वस्य असमवेतप्रमेयरूपसाध्ये गगनादौ सत्वात् । प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशे तु समवायेन प्रमेयाभावप्रतियोगितावच्छेदकीभूतप्रमेयत्वावच्छिन्नत्वस्य समवेतप्रमेयवद्असमवेतप्रमेयेऽपि सत्वेन तद्भिन्नत्वस्य प्रमेयात्मकसाध्येऽसत्वान्नातिव्याप्तिः ।

---

दिव्या

१—नच तादृशसमवेतरूपप्रमेयभिन्नत्वस्याऽसमवेतप्रमेये सत्वेऽपि हेतौ साध्यतावच्छेदकसम्बन्धेन साध्यसामानाधिकरण्यविरहान्नातिव्याप्तिरिति वाच्यम् । सम्बन्धसामान्येन साध्यसामानाधिकरण्यस्य यदि चेत्यादिना अग्रे जगदीशेन प्रतिपादयिष्यमाणत्वात् । किञ्च उक्तस्थले समवायेन प्रमेयस्य भावत्वव्यापकत्वापत्तेस्तावताप्यनुद्धारात् । तथाविधव्याप्तिग्रहात् तत्रानुमित्यापत्तिरूपाऽतिव्याप्तिपदार्थस्याऽवारणाच्च ।

नच एतन्मतस्वीकारे समवायसम्बन्धावच्छिन्नप्रतियोगित्वातिप्रसक्ततया प्रमेयत्वं नावच्छेदकमिति प्रतियोगितावच्छेदकावच्छिन्नत्वोपादानेऽपि अतिव्याप्तितादवस्थ्यमिति वाच्यम् । तत्सम्बन्धावच्छिन्नप्रतियोगित्वाभाववान् यः तत्सम्बन्धेन वृत्तिमत्पदार्थः तद्वृत्तिधर्म-एव अतिप्रसक्तपदार्थः, तथाविधातिप्रसक्तत्वस्य प्रमेयत्वे विरहादिति । किंवा वह्निमान् धूमादित्यादौ वह्निघटोभयाभावमादायाव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेश इति ध्येयम् ।

अथवा हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नं साध्यमिति व्यभिचारज्ञानदशायां तादृशप्रतियोगिताशून्यसाध्यसामानाधिकरण्यमिति व्याप्तिज्ञानसम्भवादनुमित्यापत्तिरित्यपि कश्चित् ।

वस्तुतस्तु तद्व्यक्तित्वावच्छिन्नाभावमादायाव्याप्त्याऽनवच्छेदकत्वानुसरणस्यावश्यकतया चिन्तामणेस्तादृशबोधो न स्यात्, अस्माकन्तु निरूढलक्षणायाः शक्तितुल्यत्वेन वक्ष्यमाणरीत्या तस्यैवार्थतो लाभात् ।

अपरे तु अवच्छेदकावच्छिन्नत्वानुपादाने समवायेन द्रव्यसाध्यके व्यभिचारिण्यतिव्याप्तिः, तादृशाभावप्रतियोगित्वं समवेतद्रव्यस्यैव स्वीकारेण तच्छून्यत्वस्य गगनादौ सत्वात् । नच सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकप्रतियोगित्वाभावःसाध्यतावच्छेदके निवेशनीयः, द्रव्याभावप्रतियोगित्वाभावस्य द्रव्यत्वे विरहान्नातिप्रसंग इति वाच्यम् । गगनवान् तज्ज्ञानत्वादित्यादावव्याप्तेः, गगनव्यक्त्यभावप्रतियोगित्वाभावस्य साध्यतावच्छेदके विरहादित्याहुः ।

लक्ष्मीः

अथात्र "यद्धर्मावच्छिन्नवाचकपदोत्तरं नञादि पदं श्रूयते तेन तद्धर्मावच्छिन्नप्रतियोगिताकभेदावगाहनं क्रियते इति नियमात्' साध्यभेद एव प्रतियोगितावच्छेदकावच्छिन्ने वक्तुमुचितः।

न च मूलकारस्य तादृशनियमविपरीतार्थे कथं तात्पर्यं ज्ञायते इति वाच्यम्। 'वह्नित्वावच्छिन्नस्य सर्वस्यैव धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वाच्छिन्नत्वादिति' 'ग्रन्थस्वारस्येन यत्पदार्थे एव प्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वस्य विधेयत्वावगमादिति चेन्न।

---

दिव्या

१ न च तादृशनियमे मानाभाव इति वाच्यम्। पटभेदतात्पर्येण प्रयुक्ताद् घटः पटो नेति वाक्याद् घटभेदबोधस्यापि प्रमात्वापत्तेः। न च शाब्दबोधं प्रति तात्पर्यज्ञानस्यापि कारणतया कथं घटभेदबोधस्यापि प्रमात्वापत्तिरिति वाच्यम्। तादृशनियमास्वीकारे द्रव्यं न घट इति वाक्यस्य प्रमाणत्वापत्तेः। न च प्रतियोग्यवृत्ति धर्मस्यैव भेदानुयोगितावच्छेदकत्वात्। असति बाधके उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदेन विधेयान्वनियमाच्च न तादृश वाक्यस्य प्रामाण्यापत्तिरिति वाच्यम्। उभय भेदस्य केवलान्वयितया घटपटोभयं प्रमेयं नेति वाक्यस्य प्रामाण्यापत्त्या तादृशनियमस्वीकारादिति नव्याः।

न च नियमो व्याप्तिः तस्याः पक्षसाध्यादि सापेक्षतया प्रकृते तद्विरहेण कथं नियमत्वमिति वाच्यम्। यन्नञादिपदं यद्धर्मावच्छिन्नवाचकपदोत्तरत्ववत्, तत् तद्धर्मावच्छिन्नप्रतियोगिताकभेद बोधजनकत्ववदिति नियमात्।

किंवा एतेनाऽऽकाङ्क्षाज्ञानस्य कारणत्वं सूचितम्। तथा च प्रतियोगित्वसम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपित नञर्थनिष्ठविशेष्यताशालिबोधं प्रति तत्पदवत्त्वरूपाऽऽकाङ्क्षाज्ञानस्य कारणत्वम्। तत्पदवत्त्वाच स्वाव्यवहितोत्तरत्वसम्बन्धेन। न च घटानधिकरणं भूतलमिति प्रयोगे घटाधिकरणप्रतियोगिकभेदवद्भूतलमिति बोधो न स्यात्। घटाधिकरणरूपतत्पदवत्त्वात्मकाकाङ्क्षाज्ञानस्य तादृशनियमस्य चाऽसत्त्वादिति वाच्यम्। समासातिरिक्तस्थले एव तादृश नियमात्। अत्र केचित्। यद्धर्मावच्छिन्नवाचकपदोत्तरत्वेनानुसन्धीयमानं यद्भवति तत् तद्धर्मावच्छिन्नप्रतियोगिताकभेदप्रयोजकत्ववद् भवति इत्येव नियमः, अन्यथा घटत्वावच्छिन्नप्रतियोगिताकभेदतात्पर्येण घटः पटो नेति वाक्यात्तादृशशाब्दबोधो न स्यात्। एवं लक्षणवाक्येऽपि योजनया न

लक्ष्मीः

तादृशनियमानुरोधे सति तादृशप्रतियोगितावच्छेदकावच्छिन्नं यद्भिन्नं भवति तत्सामानाधिकरण्यमित्येव लक्षणशरीरं स्यात्, तथाच धूमवान् वह्नेरित्यादावतिव्याप्तिः, तादृशप्रतियोगितावच्छेदकावच्छिन्ने घटे धूमभेदसत्वात्। अतः तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वावच्छेदेन साध्यभेदो निवेशनीयः। तदर्थञ्च तादृशप्रतियोगितावच्छेदकावच्छिन्नत्व-व्यापको यो यद्भेदस्तत्सामानाधिकरण्यम्। एवञ्च धूमवान् वह्नेरित्यत्र तादृशप्रतियोगितावच्छेदकावच्छिन्ने धूमे साध्यभेदविरहान्नातिव्याप्तिः। न च व्यापकत्वनिवेशे गौरवमिति वाच्यम्। भवन्मतेऽपि प्रतियोगितावच्छेदकावच्छिन्नघटभेदस्य सत्वादतिव्याप्तिवारणाय व्यापकत्वार्थकवीप्सादरात्[१]।

न च विलक्षणप्रतियोगितासम्बन्धेन तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वावच्छिन्नप्रतियोगिताकभेदनिवेशो न तु सामान्याभावनिवेश इति वाच्यम्। अन्यूनवृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वमिति नियमात् प्रतियोगितावच्छेदकावच्छिन्नत्वानुयोगिताकसाध्यभेदस्यैव निवेशात्। नचोभयभेदस्य केवलान्वयितया साध्यघटोभयभेदस्य प्रति-

---

दिव्या

नियमाविरोध इति प्राहुः।

अथवा यत्तत्पदघटितस्थले एव तादृशनियमः, अन्यथा यो यो न वह्निमान् स स न धूमवान् इति व्यतिरेक्युदाहरणवाक्यात्, एवं न तद्दण्डवानिति वाक्याच्च वह्निमद्भेदव्यापकधूमवद्भेदवान् एवं तद्दण्डवद्भेदवानिति शाब्दबोधानुपपत्तेः। तथा च प्रकृतेऽपि यत्तत्पदघटितत्वान्नोक्तनियमावसरः।

यद्वा नीलो भवति घट इति वाक्ये भूधात्वर्थस्तादात्म्यं, तिङर्थं आश्रयत्वम्, तथाच नीलतादात्म्याश्रयो घट इति बोधः। नीलो न भवति घट इत्यादावपि नीलतादात्म्याभाववान् घट इति बोधः, तथाच नञ् रहिते स्थले मुख्यविशेष्यत्वं यस्य नञ् सत्वे मुख्यविशेष्यत्वं तस्यैवेति व्युत्पत्तिः, क्रियासमभिव्याहारस्थले न तादृशनियमः, अत्रापि यदर्थस्यैव विशेष्यत्वादिति ध्येयम्।

१ वीप्सादरादिति। तथाच हेतुसमानाधिकरणो यो योऽभावस्तत्प्रतियोगितानवच्छेदकत्वम्। अनुगमस्तु हेत्वधिकरणवृत्त्यभावविशिष्टान्यत्वं साध्यतावच्छेदके वाच्यम्। वै० स्वप्रतियोगितावच्छेदकत्वसम्बन्धेन। अभावे वृत्तित्वञ्च-स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वसम्बन्धेन। स्वं-अभावः।

लक्ष्मीः

योगितावच्छेदकावच्छिन्ने सत्वादतिव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदस्यैव निवेशात्। एवञ्च प्रमेयवान् वाच्यत्वादित्यत्र प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाऽप्रसिद्ध्याऽव्याप्तिरिति। तादृशप्रतियोगितावच्छेदकावच्छिन्ने यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदस्तद्धर्मावच्छिन्नसामानाधिकरण्यमित्युक्तौ प्रमेयत्वसमानाधिकरणवाच्यत्वत्वावच्छिन्नप्रतियोगिताकभेदस्य प्रसिद्धतयाऽव्याप्तिविरहेपि तादृशलक्षणस्योदन्तरत्वात्* क्लिष्टकल्पनापत्तेश्चेत्यतो नञ् व्यत्यासः कृतः।

ननु नञ् व्यत्यासेपि तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वावच्छिन्नप्रतियोगिताकभेदनिवेश आवश्यकः, अन्यथोभयभेदमादाय व्यभिचारिमात्रेऽतिव्याप्तिः स्यात्। तथा च समवायेन प्रमेयसाध्यकभावत्वहेतुकव्यभिचारिणि प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिध्याऽभावान्तरमादायातिव्याप्तेरपि संभवे तद्व्यक्तिर्नास्तीत्यभावमादायाव्याप्तिमात्रदानमसङ्गतमिति चेन्न। तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नाऽनुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्साध्यसामानाधिकरण्यमित्यर्थेऽदोषात्। वस्तुतस्तु ये यत्र दोषाः संभवन्ति ते न सभायां सर्वे समुद्भाव्याः, किन्तु यथा काममेक इति सत्प्रतिपक्षलिखनस्वरसादेकदोषोप्याद्रणीयः।

---

दिव्या

* एतेन यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटनिवेशोपि निरस्तः। नञ् सत्वे येन रूपेण यस्योपस्थितिस्तद्रूपावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तस्यान्वयः 'न तु तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वेनेति' नियमविरोधात्।

अथ भवति पदं मूलेऽनर्थकम्, अत एव "क्रियारहितं वाक्यमप्रमाणमिति प्राचां प्रवादो निर्युक्तिकत्वादश्रद्धेय" इत्युक्तं जगदीशेनेति चेद् अत्र केचित्। अव्याप्यवृत्तिमद्भेदस्याऽव्याप्यवृत्तित्वे कपिसंयोगवतस्तादात्म्येन साध्यतायां हेतुमन्निष्ठाभावप्रतियोगितावच्छेदककपिसंयोगावच्छिन्नप्रतियोगिताकभेदस्य मूलावच्छेदेन वृक्षे सत्वादव्याप्तिरतस्तत्पदम्।

भवति पदोपादाने तु भूधात्वर्थस्याऽसाधारणधर्मरूपत्वेन निरुक्तप्रतियो-

—सिद्धान्तलक्षणदीधितिः—

प्रतियोग्यसमानाधिकरणेति । प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं

---

[ सिद्धान्तलक्षणजागदीशी ]

वह्नित्वावच्छिन्नस्य सर्वस्यैव धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वावच्छिन्नत्वादव्याप्तिरिति, अन्यथा व्याचष्टे । प्रतियोगितानवच्छेदको यो धर्म इति ।

---

लक्ष्मीः

मूलोक्तलक्षणस्य वन्हिमान् धूमादित्यादावव्याप्तिमाह वह्नित्वावच्छिन्नसर्वस्यैवेति । सर्वस्यैव वन्हेरित्यर्थः । अस्य तत्तद्व्यक्तित्वावच्छिन्नत्वादित्यनेनाऽन्वयः । तत्तद्व्यक्तित्वावच्छिन्नत्वादिति । तत्तद्व्यक्तित्वावच्छिन्नभिन्नत्वाभावादित्यर्थः । अव्याप्तिरिति । तथाच वन्हिमान् धूमादित्यत्र धूमाधिकरणे पर्वते महानसीय "वन्हि" व्यक्तिर्नास्ति महानसे च पर्वतीय "वन्हि" व्यक्तिर्नास्तीति रीत्या चालनीयन्यायेन तत्तद्व्यक्त्यभावमादाय सर्वेषामेव वन्हीनां प्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वावच्छिन्नत्वेन तत्तद्व्यक्तित्वावच्छिन्नभिन्नत्वाभावादव्याप्तिरित्यर्थः ।

अन्यथा व्याचष्टे इति । शक्यार्थं परित्यागेन तात्पर्यविषयार्थप्रतिपत्त्यनुकूलप्रतियोगितानवच्छेदको यो धर्म इत्यादि ग्रन्थाभिन्नव्यापारानुकूलकृतिमानित्यर्थः । साध्ये प्रतियोगिभेदमुपेक्ष्य साध्यतावच्छेदके प्रतियोगितावच्छेदकभेदं निर्देशयतीति यावत् । सामानाधिकरण्यमिति । व्याप्तिरित्यनेनान्वयः ।

---

दिव्या

गितावच्छेदकावच्छिन्नवृत्त्यसाधारणधर्माभावस्य वाक्यार्थतया वृक्षत्वादेरपि तादृशधर्मत्वेन तदभावस्याऽसत्वान्नाव्याप्तिरिति ।

तथाच प्रतियोगितानवच्छेदकेत्यस्य भावप्रधाननिर्देशतयाऽवच्छिन्नपदस्याऽवच्छिन्नप्रतियोगिताकपरतया तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभिन्नत्वं लभ्यते इति मूले नावच्छिन्नपदस्य वैयर्थ्यमिति ध्येयम् ।

---

लक्ष्मीः

तथा च हेतुमन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति । वह्निमान् धूमादित्यादौ धूमसमानाधिकरणो यः तद्व्यक्तिर्नास्तीत्यभावस्तत्प्रतियोगितावच्छेदकं तद्व्यक्तित्वं तद्भिन्नं साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्नसाध्यो वह्निस्तत्सामानाधिकरण्यस्य धूमे सत्वाल्लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ वह्निसमानाधिकरणधूमाभावप्रतियोगितावच्छेदकधूमत्वभेदस्य साध्यतावच्छेदकेऽसत्वान्नातिव्याप्तिः ।

नन्वेवमपि धूमवान् वह्नेरित्यादावतिव्याप्तिः, वह्निसमानाधिकरणघटाभावप्रतियोगितावच्छेदकघटत्वभेदस्य धूमत्वघटोभयभेदस्य च धूमत्वे सत्वात् इति चेत् प्रतियोगितानवच्छेदकमित्यनेन प्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदसामान्यनिवेशात् । तदर्थश्च प्रतियोगितावच्छेदकत्वेतरधर्मानवच्छिन्नत्वे सति प्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदः, अत एव प्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति इति मूलेऽवच्छिन्नपदं व्यर्थं, प्रतियोगितावच्छेदकं यन्न भवति इत्यस्यैव सम्यक्त्वादिति पूर्वपक्षः समाहितः, अवच्छिन्नपदस्य तादृशार्थपरत्वादित्याह **तथाचेति** । अनवच्छेदकत्वानुसरणे चेत्यर्थः ।

**प्रतियोगितावच्छेदकपदस्येति** । प्रतियोगितावच्छेदकावच्छिन्नेति मूले प्रतियोगितावच्छेदकपदस्येत्यर्थः । **भावप्रधाननिर्देशतया** । प्रतियोगितावच्छेदकत्वपरतया । **अवच्छिन्नपदस्य** । मूलस्थस्य । **तादृशेति** । हेतुसमानाधिकरणाभावेत्यर्थः । **इति** । अतः ।

ननु रूपवान् पृथिवीत्वादित्यादौ विषयितासम्बन्धेन रूपत्वविशिष्टाभावमादायाऽव्याप्तिवारणायाग्रे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया तद्व्यक्तित्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटकीभूत—समवायसम्बन्धावच्छिन्नत्वविरहेण तद्तद्व्यक्तित्वावच्छिन्ना-

लक्ष्मीः

भावमादायाव्याप्तिविरहादनवच्छेदकत्वानुसरणं व्यर्थम् ।

न च तद्व्यक्तित्वं तद्व्यक्तिगतरूपमेव, तथा च वह्निसमवेतरूपनिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटकीभूतसमवायसम्बन्धावच्छिन्नत्वसत्वादव्याप्तिरिति वाच्यम् । वह्नौ उत्पत्तिकालावच्छेदेन रूपस्याऽसत्वादुत्पत्तिकालावच्छेदेन तद्व्यक्तित्वं नास्तीति प्रत्ययप्रसङ्गात् ।

न च तथापि प्रकृते तद्व्यक्तित्वं तद्वह्न्यनुयोगिकसमवायेन वह्नित्वमेवेति तद्व्यक्तित्वावच्छिन्नाभावमादायाव्याप्तिसंगतिरिति वाच्यम् । साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्येतरवारकपर्याप्तिनिवेशेनैव तद्वारणात् । अन्यथाऽनवच्छेदकत्वानुसरणेपि तद्दोषतादवस्थ्यम् । तादृशाभावप्रतियोगितावच्छेदकत्वस्य वह्नित्वे सत्वात् ।

न च मूललक्षणे प्रतियोगितावच्छेदकताघटकसम्बन्धेनैव प्रतियोगितावच्छेदकावच्छिन्नत्वं निवेशनीयम् । तावतापि रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टज्ञानभिन्नत्वस्य साध्ये रूपे सत्वेनाव्याप्तिवारणसंभवे साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं न निवेशनीयमिति वाच्यम् । स्वरूपसम्बन्धेन गुणकर्मभेदविशिष्टसत्वस्य समवायेन साध्यतायां जातेर्हेतुत्वे सामानाधिकरण्यसम्बन्धेन गुणकर्मभेदविशिष्टसत्वस्याभावमादायाव्याप्तिवारणाय तन्निवेशस्यावश्यकतया व्यर्थमेवानवच्छेदकत्वानुसरणमिति चेत् । वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ हेतुसमानाधिकरणशुद्धसमवायेन वह्नित्व विशिष्टाभावीय प्रतियोगितावच्छेदकताया अपि साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वादव्याप्तिरिति तद्वारणाय, एवं समवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ हेतुसमानाधिकरणवह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टाभावमादायाव्याप्तिवारणाय च न्यूनेतरवारक पर्याप्ती निवेश्ये । तथा च साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति यदवच्छेदकत्वं तादृशावच्छेदकत्वाभाव इत्यर्थः । एवञ्च वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां धूमादिहेतौ तत्सम्बन्धावछिन्नावच्छेदकत्वाप्रसिध्याऽव्याप्तिवार-

लक्ष्मीः

णाय स्वानवच्छेदकसम्बन्धावच्छिन्नत्व, स्वसामानाधिकरण्योभयसंबन्धेन, साध्यतावच्छेदकताविशिष्टान्यत्वमवच्छेदकतायां साध्यतावच्छेदकघटकसम्बन्धावच्छिन्नत्वम्। तथा च रूपत्वनिष्ठावच्छेदकताया-मुभयसत्वाद्विषयितया रूपत्वविशिष्टाभावमादाय नाव्याप्तिः। तद्व्यक्तित्वनिष्ठावच्छेदकतायां स्वसामानाधिकरण्यविरहेण तद्व्यक्त्यभावमादायाव्याप्तिसंगतिश्च।

केचित्तु वह्नित्वावच्छिन्नवान् धूमादित्यत्राऽव्याप्तिः, अत्र साध्यतावच्छेदकताघटकसम्बन्धः स्वरूपः तत्सम्बन्धावच्छिन्नत्वस्य तद्व्यक्त्यभावप्रतियोगितावच्छेदकतायां सत्वात्। स्वरूपसम्बन्धस्य साध्यतावच्छेदकतावच्छेदकतालाभाय वह्नेः सर्वस्यैवेत्यनुक्त्वा वह्नित्वावच्छिन्नत्वेनोपादानम्. अन्यथाऽग्रे साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशस्य ध्रौव्ये तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावस्यातथात्वेनाऽव्याप्तिदानासंगतेः। विशेषरूपेण संसर्गताविरहेण वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्यकाव्याप्तिविरहेण पारिभाषिकार्थकरणस्यानावश्यकत्वादित्याहुः। तच्चिन्त्यम्। महानसीयवह्न्यभावमादायाऽव्याप्तितादवस्थ्यमित्यत्र तादवस्थ्यपदोपादानासंगतिः, यद्धर्मावच्छिन्नहेतुक यद्धर्मावच्छिन्नसाध्यकस्थले पूर्वं लक्षणासत्वं, तद्धर्मावच्छिन्नहेतुकतद्धर्मावच्छिन्नसाध्यकस्थलेऽव्याप्तेरेव तादवस्थ्य शब्दार्थत्वात्। यद्धेतुकस्थले पूर्वमव्याप्तिरभिहिता तद्धेतुस्थलेऽव्याप्तेस्तादवस्थ्यशब्दार्थत्वे प्रमेयाश्रयवान् धूमादित्यत्र तादवस्थ्यानुक्तौ ग्रन्थन्यूनता स्यात्। यत्पदोपस्थाप्येऽव्याप्तिरुक्ता, तस्य तत्पदोपस्थाप्ये लक्षणासत्वं तादवस्थ्यशब्दार्थः, वह्नित्वावच्छिन्नपदोपस्थाप्यत्वञ्च वह्नित्वावच्छिन्नत्वावच्छिन्नस्य, वह्नित्वावच्छिन्नस्य च वर्तते इति नव्याः।

अन्ये तु वह्नौ तद्व्यक्तित्वावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगित्वं, वह्नित्वावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगित्वाभावश्चेत्यभिप्रायकं हेतुसमानाधिकरणाभावप्रतियोगिताशून्यसाध्यसामानाधिकरण्यरूपसार्वभौमीयलक्षणं, तद्दूषणायैव वह्नित्वावच्छिन्नेत्युपादानम्। तेन प्रतियोगितायाः व्याप्यवृत्तित्वं प्रतिपादितम्। वह्नित्वावच्छेदेन प्रतियोगित्वाभावस्य वह्नावसत्वादनवच्छेदकत्वानुसरणमिति प्राहुः।

लक्ष्मीः

यद्वा व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशवृत्तिपदार्थस्य भेदस्वीकारे वह्निधूमोभयं न हेतुमन्निष्ठाभावप्रतियोगीति प्रतीत्या धूमेऽपि द्वित्वावच्छेदेन वह्निमन्निष्ठाभावप्रतियोगिभेदसत्वादतिव्याप्तिरतः साध्यतावच्छेदकमात्रावच्छिन्नानुयोगिताकतादृशभेदवत्वं विवक्षणीयम्। तादृशभेदाऽसत्वप्रदर्शनायैव वह्नित्वावच्छिन्नस्येत्युक्तम्[1]।

सर्वपदं नानाव्यक्तिसाध्यकस्थलेऽव्याप्तिप्रदर्शनार्थम्, अन्यथा तद्व्यक्त्यनुयोगिकसमवायेन वह्नित्वविशिष्टसाध्यकस्थले तद्व्यक्त्यभावस्य प्रतियोगिव्यधिकरणत्वाभावेनाऽव्याप्तिविरहाद्व्याप्तिदानाऽसंगतेः।

ननु असंभवसंभवेऽव्याप्तिदानमसंगतम्। न च तद्रूपवान् तद्रसादित्यत्र तद्व्यक्तित्वावच्छिन्नाभावस्य लक्षणाघटकत्वेन नाव्याप्तिरिति वाच्यम्। तद्रूपघटोभयाभावस्य पूर्वक्षणवृत्तित्वविशिष्टतद्रूपाभावस्य च लक्षणघटकत्वादिति चेदत्रकेचित्। साध्यतावच्छेदकातिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य हेतुमन्निष्ठाभावप्रतियोगितायां विशेषणत्वमित्यभिप्रायेणाव्याप्तेरभिधानादित्याहुः। अत्रेदं चिन्त्यते। कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यस्यावश्यमुपादेयतया पूर्वक्षणवृत्तित्वविशिष्टतद्रूपाधिकरणतायास्तद्घटेऽपि विद्यमानतया तद्रूपघटोभयत्वावच्छिन्नाधिकरणतायाश्चाऽप्रसिद्धत्वेन तदभावस्यापि लक्षणाऽघटकत्वात्। न च तद्रूपवान् तद्रसादित्यत्र तद्रूपघटोभयाभावस्य घटरूपोभयत्वावच्छिन्नाधिकरणतायाः कपाले प्रसिद्धतया प्रतियोगिव्यधिकरणत्वेन तमादायाव्याप्तिरिति वाच्यम्। तादात्म्येन तद्रूपवतः साध्यतायां तद्रसादिहेतुत्वे तादात्म्यसम्बन्धावच्छिन्नतद्रूपवद् घटोभयत्वावच्छिन्नाधिकरणाऽप्रसिद्धेरभावान्तरमादाय लक्षणसमन्वयसंभवान्नासंभवो विहितो जगदीशेनेति।

यद्यपि तदवयवानुयोगिकसमवायेन वह्नेः साध्यतायां तदवयवत्वादिहेतौ साध्यतावच्छेदकीभूततदवयवानुयोगिकसमवायसम्बन्धावच्छिन्न-

---

दिव्या

१—वस्तुतो वह्निपदस्य वह्नि, वह्नित्व, समवायोपस्थापकत्वात्समवायेन वह्नित्वविशिष्टमात्रप्रदर्शनेन न्यूनता स्यात् सम्बन्धसामान्येन वह्नित्वविशिष्टस्थलाव्याप्तिसत्वे सामानाधिकरण्येन दोषदानाऽसंगतिः स्यात्।

लक्ष्मीः

घटत्वावच्छिन्नाधिकरणत्वाप्रसिद्धिनिबन्धनाव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाभावोऽवश्यं निवेशनीयः, एवञ्चात्रापि कालिकसम्बन्धावच्छिन्नतद्रूपघटोभयत्वावच्छिन्नाधिकरणत्वस्य प्रसिद्धतया साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेन तदभावस्य हेत्वधिकरणेऽपि सत्वेन लक्षणं नैव घटते। तथापि शुद्धसाध्यतावच्छेदककस्थले प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वस्य निवेशनीयतया उभयत्वस्य धीविशेषविषयत्वरूपतया तद्रूपघटोभयाभावप्रतियोगितावच्छेदकताया उभयत्वत्वावच्छिन्नत्वेन लक्षणाघटकत्वान्नासंभवः। एवं तादात्म्येन गगनस्य साध्यतायां तद्व्यक्तित्वादिहेतौ साध्यघटितविशिष्टाभावोभयाभावस्य प्रतियोगिवैयधिकरण्यविरहेण तत्र लक्षणसमन्वयसंभवान्नासंभवो विहित इति ध्येयम्।

ननु प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानिरूपितो यस्तदभाववत्साध्यतावच्छेदकावच्छिन्न-सामानाधिकरण्यमित्यस्यैव सम्यक्त्वेऽवच्छेदकतात्वेनावच्छेदकत्वोपादानं व्यर्थमिति चेन्न। प्रमेयवान् वाच्यत्वादित्यत्र घटाभावीयप्रतियोगितानिरूपिता या प्रमेयत्वत्वावच्छिन्नाऽऽधेयता तस्याः प्रमेयत्वे सत्वादव्याप्तिः वह्निमान् धूमादित्यादौ घटाद्यभावीयप्रतियोगितानिरूपितो यो घटाभावस्तस्य वह्नित्वे सत्वादव्याप्तेश्च, अभावप्रतियोगिनोः परस्परं निरूप्यनिरूपकभावात्।

ननु तथापि तादृशप्रतियोगितानवच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यस्यैव सम्यक्त्वे साध्यतावच्छेदकप्रवेशो व्यर्थ इति चेन्न। व्यभिचारिमात्रेऽतिव्याप्त्यापत्तेः, तादृशप्रतियोगितानवच्छेदकं यत् प्रमेयत्वं तदवच्छिन्नसाध्यसामानाधिकरण्यसत्वात्। निर्धर्मिकानवच्छेदकत्वज्ञानस्य व्यभिचारनिश्चयाप्रतिबध्यतया तद्विषयस्य व्याप्तित्वानुपगमाच्च व्यभिचारधीविरोधिधीनिश्चयस्यैव व्याप्तित्वादिति ध्येयम्।

अनवच्छेदकत्वानुसरणे तद्व्यक्त्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणेऽपि महानसीयवन्ह्यभावमादायाऽव्याप्तिस्तदवस्थैवेत्याशंकते। **न चेति।** अस्य तादवस्थ्यमित्यनेनान्वयः **पर्वते।**

न च पर्वते महानसीयवह्निर्नास्ति इत्यादि प्रतीतिसिद्धस्य हेतुमन्निष्ठाभावस्य प्रतियोगितावच्छेदकमेव वह्नित्वमित्यव्याप्तितादवस्थ्यम्। साध्यतावच्छेदकतदितरोभयावच्छेद्यभिन्नाया एव प्रतियोगिताया अनवच्छेदकत्वस्य विवक्षितत्वाददोषः।

लक्ष्मीः

हेतुभूतधूमाधिकरणे। **प्रतीतिसिद्धस्येति।** विशेषाभावकूटातिरिक्तस्य सामान्याभावस्य सविवादेऽपि विशेषाभावे नास्ति विवादलेशोपि इति सूचनार्थं प्रतीतिसिद्धस्येत्युक्तम्। **प्रतियोगितावच्छेदकमेवेति।** न तु प्रतियोगितानवच्छेदकमित्यर्थः। **अव्याप्तितादवस्थ्यमिति।** अतिरिक्तसामान्याभावोऽस्तु मा वा, उभयथापि धूमाधिकरणपर्वतवृत्तिर्यो-महानसीयवह्न्यभावः तत्प्रतियोगितावच्छेदकत्वस्य वह्नित्वे सत्वाद-व्याप्तिरिति भावः।

नन्वत्र महानसीयत्वं यदि वह्नौ महानसवृत्तित्वं तदाऽग्रे विवक्षणीयस्य प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य[1] विरहेण कथं तादृशाभावो लक्षणघटक इति चेन्न। महानसीयत्वं महानसानुयोगिकसंयोगः तन्निष्ठावच्छेदकत्वस्य समवायसम्बन्धावच्छिन्नतयाऽव्याप्तिसंभवात्। तार्णत्वादेर्जातित्वमते तार्णवन्ह्यभावमादायैवाऽव्याप्तिसंभवादिति।

ननु कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यं विवक्षणीयम्। तदर्थञ्च यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेकमित्यादि।

एवञ्च महानसीयवन्ह्यभावप्रतियोगितावच्छेदकीभूतवन्हित्वावच्छिन्नाधिकरणत्वस्यैव पर्वते सत्वेन कथं महानसीयवन्ह्यभावः प्रतियोग्यधिकरण इति चेन्न। तार्णवन्हिमान् धूमादित्यत्र वन्हित्वावच्छिन्ननिरूपकताकाधिकरणत्वस्य हेतुमति सत्वेन तार्णवह्यभावस्य

दिव्या

१ प्रतियोगितावच्छेदकता स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व सम्बन्धेन स्वरूपत्वसमवायत्वगतद्वित्वे वर्तते—साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतसमवायत्वगतैकत्वे विरहादिति भावः।

लक्ष्मीः

लक्षणाघटत्वादतिव्याप्तिः ।[1]

अतः प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यनेन स्वप्रतियोगितात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वं निरूपकतायां विवक्षणीयम् । रूपवृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । एवं निरूपकता । एवञ्च महानसीयवह्न्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं महानसीयत्ववन्हित्वगतद्वित्वं तद्वृत्तिनिरूपकताकाधिकरणत्वाभावस्य हेतुमति पर्वते सत्वात्तस्य लक्षणघटकत्वा दव्याप्ति[2] संगतिः ।

---

दिव्या

१ न च तार्णाभावमादाय नातिव्याप्तिः, शुद्धवन्हित्वस्यानवच्छेदकत्वेऽपि तदवच्छिन्नविधेयताकानुमितेरिष्टत्वादिति वाच्यम् । यद्धर्मे व्यापकतावच्छेदकत्वं गृह्यते तद्धर्मावच्छिन्नविधेयताकानुमितिर्भवतीति । तद्धर्मावच्छिन्नविधेयताया इतरवारकपर्याप्तिनिवेशेन वन्हित्वेऽनवच्छेदकत्वज्ञानादेव तार्णत्ववन्हित्वोभयधर्मावच्छिन्नविधेयताकानुमित्यापत्तिसंभवात् । न च वन्हिमान् धूमादित्यत्र वह्नित्वेऽनवच्छेदकत्वज्ञानान्महानसीय वन्हिमानित्यनुमितिः स्यादितिवाच्यम् । तत्र महानसीय वन्ह्यभावस्यापि लक्षणघटकतया वन्हित्वेऽनवच्छेदकत्वज्ञानस्यैवाऽसंभवात् ।

२ नचैतादृशनिवेशे तादृशहेतुमन्निष्ठाभाव प्रतियोगितावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगिता-नवच्छेदकं यत्साध्यतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्विशिष्टावच्छिन्नसाध्यसामानाधिकरण्यमित्यस्यैव सम्यक्त्वे अलं साध्यतावच्छेदकतदितरोभयधर्मानवच्छिन्नत्वनिवेशेनेति वाच्यम् । जगदीशेनाऽव्यासज्यवृत्तिधर्मप्रतियोगिकपर्याप्तेरस्वीकारेण वन्हित्वनिष्ठावच्छेदकताया अव्यासज्यवृत्तितया तत्प्रतियोगिकपर्याप्तेरप्रसिद्धतया वन्हिमान् धूमादित्यादौ तादृशरूपाप्रसिध्याऽव्याप्तिः । एवं पर्याप्तिघटितप्रतियोगिवैयधिकरण्यनिर्वचने धूमत्वगतैकत्वस्य पर्याप्तिविरहेण धूमाभावस्य लक्षणाघटकतयाऽभावान्तरमादायाऽतिव्याप्तिः । एकत्वप्रतियोगिक - पर्याप्त्यंगीकारे तु उक्तनिरुक्तेर्निर्दोषत्वात् । परन्तु असमान प्रकारकज्ञानस्याप्रतिबन्धकत्वे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं साध्यतावच्छेदकमिति व्यभिचारज्ञानकाले तादृशपर्याप्तिघटितव्याप्तिज्ञानादनुमित्यापत्तिरतस्तन्निवेशयितुं न शक्यते ।

ननु महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीत्यभावमादाय अव्याप्तिवारणाय शुद्धसाध्यतावच्छेदककस्थले प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वनिवेशस्यावश्यकतया तेनैव महानसीयवह्न्यभाववारणसंभवः। नच वह्नित्वनिष्ठावच्छेदकताया निरवच्छिन्नत्वात्कथं तस्य वारणम्। सावच्छिन्नावच्छेदकताभिन्नावच्छेदकतायाः निरवच्छिन्नत्वरूपत्वात् महानसीयवह्निवृत्तित्वविशिष्टजातिनिष्ठावच्छेदकतायाः सावच्छिन्नत्वात् वारणात्, प्रकृतेच वह्नित्वनिष्ठावच्छेदकतायास्तथात्वादिति वाच्यम्। महानसीयवह्निवृत्तित्वविशिष्टजातिमद्वह्निर्नास्तीत्यभावमादायाऽव्याप्तेः। तद्वारणाय सावच्छिन्नावच्छेदकत्वानिरूपितत्वमेव निरवच्छिन्नावच्छेदकतानिरूपितत्वम्। तथाच कथं महानसीयवन्ह्यभावमादायाव्याप्तिः। न च तादृशजातिमद्वह्न्यभावप्रतियोगिता जातित्वावच्छिन्नावच्छेदकताकेति वाच्यम्। महानसीयवह्न्यभावमादायाव्याप्तिवारणार्थमेव तादृशार्थकरणे बाधकाभावादिति चेन्न। तार्णवह्न्यभावप्रतियोगितायां तार्णत्व, वह्नित्वोभयनिष्ठनिरवच्छिन्नावच्छेदकताकत्वस्य सत्वेन तन्निरूपकाभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य सार्थक्यादिति।[1]

वस्तुतस्तु प्रतियोगितायां सावच्छिन्नावच्छेदकत्वानिरूपकत्वनिवेशे कालो गोमान् सृष्टिकालत्वादित्यत्र प्रलयवृत्तित्वविशिष्टगोत्वाभावस्यैव हेतुसमानाधिकरणतया तदीय प्रतियोगितायां सावच्छिन्नावच्छेदकतानिरूपकतत्वसत्वेन तादृशप्रतियोगितानिरूपकाभावाप्रसिद्ध्याऽव्याप्तिः। एवं कालो घटवान् महाकालत्वादित्यादौ महाकालान्यत्वविशिष्टघटाभावेत्यादिग्रन्थाऽसंगतिश्च स्यादतः साध्यतावच्छेदकनिष्ठसावच्छिन्नावच्छेदकत्वानिरूपकत्वस्यैव तदर्थताध्रौव्येण महानसीयवन्ह्यभावोऽपि लक्षणघटक इत्यवधेयम्।

---

दिव्या

१ न च तार्णत्वं वह्नित्वव्याप्यजातिविशेषः तथा च तादृशाभावप्रतियोगितावच्छेदकता तार्णत्वे एव स्वीकारान्नाव्याप्तिशंकेति वाच्यम्। विषयितया वह्निसाध्यकतज्ज्ञानत्वहेतौ विषयितासम्बन्धावच्छिन्नप्रतियोगिताकतार्णवन्ह्यभावप्रतियोगितावच्छेदकत्वस्य केवलतार्णत्वे स्वीकारे तार्णविषयकज्ञाने तार्णवह्निर्नास्तीति प्रतीत्यनुपपत्तेः। तार्णत्वावच्छिन्नाधिकरणतायास्तत्र सत्वात्। अतस्तादृशाभावप्रतियोगितावच्छेदकतायास्तार्णत्ववह्नित्वोभयत्रैव स्वीकरणीयत्वादिति।

लक्ष्मीः

**अव्याप्तिमपाकरोति** । साध्यतावच्छेदकतदितरेति । उभयावच्छेद्यभिन्नायाः । **प्रतियोगितायाः** । हेतुमन्निष्ठाभावप्रतियोगितायाः । **अनवच्छेदकत्वस्येति** । साध्यतावच्छेदकेति शेषः । **विवक्षितत्वादिति** । तथाच साध्यतावच्छेदकतदितरोभयानवच्छिन्ना[1] या हेतुमन्निष्ठाभावप्रतियोगिता तदनवच्छेदकं यत्साध्यतावच्छेदकमित्यादि । महानसीयवन्ह्यभावप्रतियोगिता तु साध्यतावच्छेदकं वन्हित्वं, तदितरत् महानसीयत्वमेतदुभयधर्मावच्छिन्नैवेति घटाभावमादाय लक्षणसमन्वयः ।

अत्र साध्यतावच्छेदकानवच्छिन्नत्वमात्रोक्तौ व्यभिचारिमात्रेऽतिव्याप्तिः । साध्याभावस्य लक्षणाघटकत्वात् । साध्यतावच्छेदकेतरानवच्छिन्नत्वमात्रोक्तौ सद्धेतुमात्रेऽसंभवः । उदासीनघटाद्यभावप्रतियोगितायाः साध्यतावच्छेदकेतरानवच्छिन्नत्वाभावात् ।

उभयानवच्छिन्नत्वमात्रोक्तौ वन्हिधूमोभयवान् वन्हेरित्यादावतिव्याप्तिः । साध्याभावप्रतियोगितायाः वन्हित्वधूमत्वोभयधर्मावच्छिन्नत्वेन साध्याभावस्य लक्षणाघटकत्वात् । न च धूमाभावमादाय नातिव्याप्तिरिति वाच्यम् । उभयत्वस्यानवच्छेदकत्वेन तदवच्छिन्नविधेयताकानुमित्यापत्तिसंभवात् ।

ननु उभयाभावमादायाऽसंभव एव वक्तुमुचित इति चेन्न । यदभावप्रयुक्तोभयाभावस्तन्मात्रवृत्तिधर्मस्यैव प्रतियोगितावच्छेदकत्वात् वन्हिघटोभयाभावप्रतियोगितावच्छेदकत्वं घटत्वादेरेव न तु वन्हित्वादेरिति असंभवाभावात् ।

---

दिव्या

१ ननु उभयानवच्छिन्नत्वं यदि उभयनिष्ठावच्छेदकत्वानिरूपकत्वम्, तदाऽसंभवः । यदि स्वावच्छिन्नत्व, स्वेतरधर्मावच्छिन्नत्वोभयसंबन्धेन धर्मविशिष्टान्यत्वं तदित्युच्यते तदा महानसीयवह्निमान् धूमादित्यादावतिव्याप्तिरिति चेत् । अनुपदमेव वक्ष्यमाणत्वात् ।

ननु हेत्वधिकरणनिरूपितवृत्तितावच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यमेव निवेशयतां अनवच्छेदकतानुसरणं तदितरोभयानवच्छिन्नत्वविशेषणञ्च व्यर्थमेव इति चेन्न । महानसीयवह्निभिन्नवह्निमान् धूमादित्यादावति-

लक्ष्मीः

साध्यतावच्छेदकातिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य तादृशप्रतियोगिताविशेषणत्वोपगमान्नासंभवः किन्तु अव्याप्तिरेव इत्यपरे ।

---

दिव्या

व्याप्तेः, हेत्वधिकरणमहानसनिरूपिता या महानसीयभेदावच्छिन्ना "महानसीयभेदवन्निष्ठा" वह्नित्वावच्छिन्ना च या वृत्तिता तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात् । न च महानसीयवह्निभेदरूपेण वह्नित्वेन च धूमहेतुकस्थले व्यापकत्वविशिष्टमेव, महानसीयवह्निभेदविशिष्टवह्नित्वेन चावच्छिन्नायाः वृत्तितायाः हेत्वधिकरणमहानसनिरूपितत्वाभावान्नातिव्याप्तिरिति वाच्यम् । वृत्तिताया आधेयभेदेन भिन्नत्वेन, पर्वतनिरूपितधूमत्वावच्छिन्नवृत्तिताया अवच्छेदकत्वस्य वह्नित्वे विरहाद् वह्निमान् धूमादित्यादावव्याप्तेरिति दिक् ।

अथ हेत्वधिकरणनिरूपितवृत्तिताभिन्नवृत्तितावदभावप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमित्येव कथं नोक्तम् ? तद्व्यक्त्यभावनिष्ठवृत्तितायाः एवं महानसीयवह्न्यभावनिष्ठवृत्तितायाश्च भिन्ना या वन्ह्यभावनिष्ठवृत्तिता तद्वदभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति चेन्न । गुरूरूपेण साध्यतायां साध्याभावत्वावच्छिन्नावृत्तित्वाऽप्रसिध्द्याऽव्याप्त्यापत्तेः । धूमवान् वन्हेरित्यादौ हेत्वधिकरणीभूतायोगोलकनिरूपितवृत्तिताभिन्नत्वस्य जलादिनिरूपितधूमाभावत्वावच्छिन्नवृत्तितायां सत्वादतिव्याप्त्यापत्तेश्चेति ध्येयम् ।

अथ प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावभिन्नाभावप्रतियोगितावत् साध्यसामानाधिकरण्यमित्येव कथन्नोक्तम् । तत्तद्व्यक्त्यभावभिन्नत्वस्य महानसीयवन्ह्यभावभिन्नत्वस्य च वह्न्यभावे सत्वादिति चेन्न । धूमवान् वन्हेरित्यादौ तादृशाभावभिन्नद्रव्याभावप्रतियोगित्वस्य धूमे सत्वादतिप्रसंगात् ।

न च तादृशाभावभिन्नाभावप्रतियोगितावच्छेदकं यत्साध्यतावच्छेदकमित्युक्तावेव तत्रातिव्याप्तिवारणसंभवः, द्रव्याभावप्रतियोगितावच्छेदकत्वस्य धूमत्वे विरहादिति वाच्यम् । तादृशाभावभिन्नस्य जातिमान्नास्तीत्यभावस्य प्रतियोगितावच्छेदकत्वस्य निखिलजातौ सत्वेन धूमत्वेऽपि सत्वादुक्तातिव्याप्तितादवस्थ्यात् । न च तादृशाभावभिन्नाभावीयप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वं निवेशनीयम्, जातिमान्नास्तीत्यभावप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वविरहेण नातिव्याप्तिरिति वाच्यम् । हेतुसमानाधिकरणसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावभिन्नत्वस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकधू-

दिव्या

माभावे सत्वेनाऽतिव्याप्तितादवस्थ्यात् । नच कालिकेन धूमाभावस्यापि हेतुसमानाधिकरणतया तद्भिन्नत्वाभावेन नातिव्याप्तिः, तादृशाभावभिन्नाभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेन वा तद्वारणमिति वाच्यम् । एवमपि वाच्यं ज्ञेयत्वादित्यादौ तादृशाभावभिन्नाभावीयस्वरूपसम्बन्धावच्छिन्न वाच्यत्वनिष्ठप्रतियोगित्वाप्रसिध्याऽव्याप्तिः स्यादिति ।

अथ साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यविवक्षयापि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावस्य निरूक्ताभावभिन्नत्वाभावान्नातिव्याप्तिः, प्रतियोगिता च साध्यतावच्छेदकसम्बन्धावच्छित्वेन न निवेशनीया, एवञ्च वाच्यं ज्ञेयत्वादित्यादौ संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावमादाय लक्षणसमन्वयः ।

न च महानसीयवन्हिमान् धूमादित्यादावतिव्याप्तिः, तादृशाभावभिन्नो यो वन्ह्यभावस्तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति वाच्यम् । तादृशाभावभिन्नाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यत्साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्विशिष्टावच्छिन्नसामानाधिकरण्यस्य विवक्षितत्वात् ।

नन्वेमपि गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे प्रमेयवन्हिमान् धूमादित्यादौ तादृशाभावभिन्नवन्ह्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य साध्यतावच्छेदकगतरूपे विरहादव्याप्तिः । न च विषयितासम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयवन्ह्यभावस्य 'प्रतियोगिव्यधिकरणत्वाभावेन' तादृशाभावभिन्नतया तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वान्नाव्याप्तिरिति वाच्यम् । विषयितासम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति चेन्न । निरूक्ताभावभिन्नाप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमेदकूटवत् तद्धर्मावच्छिन्नसामानाधिकरण्यनिवेशेनैव वारणात् । नचैतादृशरीत्या धूमवान् वन्हेरित्यादौ तादृशभिन्नाभावप्रतियोगितावच्छेदकवन्हित्वे धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य सत्वेनातिव्याप्तिरिति वाच्यम् । यद्धर्मसामानाधिकरण्यमपि भिन्नाभावप्रतियोगितावच्छेदके विशेषणं देयम्, तथा च वन्हित्वे धूमत्वसामानाधिकरण्यविरहात्तद्धर्मपदेन धूमत्वस्य धर्तुमशक्यत्वान्नातिव्याप्तिरिति चेत् तस्य लक्षणान्तरत्वादिति ध्येयम् ।

## दिव्या

केचित्तु घटाभावभिन्नं घटत्वादित्यादौ साध्याभावस्य घटाभावात्मकतया प्रतियोगिव्यधिकरणहेतुसमानाधिकरणघटाभावभिन्नत्वस्य साध्याभावे विरहेणाऽव्याप्तिप्रसंगात् । न च हेत्वधिकरणवृत्तितावच्छेदकीभूतानुयोगिताभिन्नानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वं साध्यतावच्छेदके विवक्षणीयम्, हेत्वधिकरणवृत्तितावच्छेदकघटाभावस्वरूपानुयोगिताभिन्नत्वस्य साध्याभावस्वरूपानुयोगितायां सत्त्वान्नदोष इति वाच्यम् । संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावभिन्नं वाच्यत्वादित्यादौ वाच्यत्वाभावस्य साध्यताघटकस्वरूपसम्बन्धेन प्रतियोगिवैयधिकरण्यविरहेण तादृशानुयोगिताभिन्नत्वस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावस्वरूपानुयोगितायां सत्त्वेन तन्निरूपितप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादतिव्याप्तेः, वाच्यत्वाभावस्वरूपानुयोगित्वस्य साध्याभावात्मकत्वादित्याहुः ।

ननु हेतुमन्निष्ठाभावप्रतियोगिताभिन्नप्रतियोगिताश्रयसामानाधिकरण्यमित्येवोच्यताम्, वह्निमान् धूमादित्यादौ वह्नित्वमात्रावच्छिन्नप्रतियोगितायां तादृशप्रतियोगिताभिन्नत्वस्य सत्त्वेन दोषाभावादलमनवच्छेदकत्वाद्यनुसरणेनेति चेन्न । धूमवान् वन्हेरित्यादौ तादृशप्रतियोगिताभिन्नद्रव्याभावीयप्रतियोगिताश्रयत्वस्य धूमादौ सत्त्वेनाऽतिव्याप्तेः । न च भिन्नप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके निवेशादेवातिव्याप्तिवारणसंभव इति वाच्यम् । एवमपि तादृशप्रतियोगिताभिन्नजातिमान्नास्तीत्यभावीय प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादतिव्याप्तितादवस्थ्यात् । न च तादृशप्रतियोगिताभिन्न-प्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकत्वस्यैव साध्यतावच्छेदके निवेशान्नातिव्याप्तिरिति वाच्यम् । हेतुसमानाधिकरणसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावीय प्रतियोगिताभिन्नत्वस्य कालिकसंबन्धावच्छिन्नधूमत्वावच्छिन्नप्रतियोगितायां सत्त्वेनाऽतिव्याप्तितादवस्थ्यात् । न च यद्धर्मावच्छिन्नप्रतियोगितात्वावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगिताभेदोऽस्ति तद्धर्मावच्छिन्नसामानाधिकरण्यं वक्तव्यम्, तथाच धूमत्वावच्छिन्न प्रतियोगितात्वव्यापकत्वं न तादृशप्रतियोगिताभेदस्येति न दोष इति वाच्यम् । व्यापकत्वनिवेशे लाघवविरहात् । प्रमेयवह्निमान् धूमादित्यादौ गुरुधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्धयाऽव्याप्तेश्च । न च विषयितासम्बन्धावच्छिन्नप्रमेयवन्हित्वावच्छिन्नप्रतियोगितायां तद्भिन्नत्वसत्त्वेन लक्षणसंगतिरिति वाच्यम् । विषयिताया वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धया तद्दोषतादवस्थ्यादिति ध्येयम् ।

## दिव्या

ननु यद्रूपावच्छिन्नाधिकरणं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं तद्धर्मावच्छिन्नसामानाधिकरण्यमित्येव कथं नोक्तमिति चेन्न। महानसीयवन्ह्यभावप्रतियोगितावच्छेदकवन्हित्वावच्छिन्नाधिकरणभेदस्य साध्यतावच्छेदकवन्हित्वावच्छिन्नाधिकरणे विरहादव्याप्तिप्रसङ्गात्। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकतेत्यादिरीत्या प्रतियोगितावच्छेदकतायाः पर्याप्तिनिवेशे एकत्वादेः पर्याप्त्यस्वीकारे धूमवान् वन्हेरित्यादावतिव्याप्तिः स्यात्। एवं महानसीय वन्हिमान् धूमादित्यादौ अतिव्याप्तिवारणाय साध्यतावच्छेदकतायाः पर्याप्तिनिवेशे वन्हिमान् धूमादित्यादावव्याप्तिः। एकत्वादेः पर्याप्त्यस्वीकारात्। एवं सामान्यधर्मावच्छिन्नाधिकरणतायाः अस्वीकारेऽपीति ध्येयम्।

अथ स्वप्रतियोगिकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन साध्यविशिष्टान्यो यो हेतुसमानाधिकरणोऽभावस्तद्प्रतियोगिसाध्यसामानाधिकरण्यस्यैव सम्यक्त्वेऽनवच्छेदकत्वानुसरणं साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वविशेषणं निरवच्छिन्नत्वनिवेशश्च व्यर्थं एव। असंभववारणाय स्वप्रतियोगित्वदलम्। व्यभिचारिण्यतिव्याप्तिवारणाय स्वसामानाधिकरण्यदलम्। न च यस्य स्वप्रतियोगिकत्वं तस्य स्वसामानाधिकरण्यविरहेण महानसीयवन्ह्यभावे साध्यविशिष्टान्यत्वसत्वादव्याप्तिरिति वाच्यम्। स्वाश्रयप्रतियोगिकत्व, स्वाश्रयसामानाधिकरण्योभयसम्बन्धेन साध्यतावच्छेदकविशिष्टान्यत्वस्य विवक्षणीयत्वादिति। इदञ्च अधिकरणभेदेनाऽभावभेदमङ्गीकृत्य। तेन संयोगी सत्वादित्यादौ हेत्वधिकरणगुणवृत्तिसंयोगाभावे स्वप्रतियोगिकत्वसत्वेऽपि न स्वसामानाधिकरण्यम्। न च कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभावे साध्यतावच्छेदकविशिष्टान्यत्वविरहेण तस्य लक्षणा घटकत्वात्प्रतियोगिवैयधिकरण्यप्रवेशो व्यर्थ इति वाच्यम्। प्रमेयवान् वाच्यत्वादित्यादौ निखिलाभावे प्रमेयत्वाश्रयघटप्रतियोगिकत्वस्य प्रमेयत्वाश्रयपटसामानाधिकरण्यस्य च सत्वेन साध्यतावच्छेदकविशिष्टत्वात्तादृशविशिष्टान्याभावाप्रसिद्ध्याऽव्याप्तिवारणाय सामानाधिकरण्यघटकवृत्तित्वं स्वरूपेण निवेशनीयम्। तथा च घटाभावाभावमादाय लक्षणसमन्वयः, घटाभावाभावस्य घटस्य संयोगेनैव सत्वेन स्वरूपेण साध्यसामानाधिकरण्याभावात्साध्यतावच्छेदकविशिष्टान्यत्वस्य तत्राऽक्षतत्वात्। एवञ्च कपिसंयोगाभाववान् मेयत्वादित्यादौ साध्यतावच्छेदकविशिष्टान्यत्वस्य साध्याभावे सत्वात्तमादायाव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यसार्थक्यात्।

दिव्या

किंच धूमवान् वह्नेरित्यादौ धूमाभावस्य पर्वते उत्पत्तिकालावच्छेदेनाऽव्याप्यवृत्तितया साध्यतावच्छेदकविशिष्टान्यत्वविरहेणाऽतिव्याप्तिवारणाय निरवच्छिन्नस्वरूपेण स्वाश्रयसामानाधिकरण्यं विवक्षणीयम्, तथा च कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिवारणाय तत्सार्थक्यम् ।

न च प्रतियोगिवैयधिकरण्यं प्रतियोगितावच्छेदकसम्बन्धेन निवेश्यम् । तथा च वन्हिमान् धूमादित्यादौ द्रव्यत्वाभावाभावमादाय व्याप्त्यभावात्स्वप्रतियोगिकत्वादलं व्यर्थमिति वाच्यम् । समवायेन पर्वतावृत्तित्वावच्छिन्नाभावं चत्वरावृत्तित्वावच्छिन्नाभावञ्चादाय वह्निमान् धूमादित्यादावव्याप्ति, पर्वतावृत्तित्वावच्छिन्नाभावस्य पर्वतत्वात्मकतया तस्य स्वरूपेण वृत्तित्वविरहात्तस्य लक्षणघटकत्वात् । अतः प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेश आवश्यकः । एवञ्च संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य भावात्मकतया स्वाश्रयसामानाधिकरण्यसम्बन्धेन साध्यतावच्छेदकविशिष्टतया तदन्याभावाप्रसिद्ध्याऽव्याप्तिवारणाय स्वप्रतियोगित्वदलमिति चेन्न । घटत्वाभावपटत्वाभावान्यतरवान् द्रव्यत्वादित्यादौ घटे घटत्वाभावाभावं पटे पटत्वाभावाभावं चादायाऽव्याप्त्यापत्तेः । घटत्वाभावाभावादेः स्वरूपेणावर्तमानतया तादृशान्यतरत्वरूपसाध्यतावच्छेदकविशिष्टान्यत्वात् । तादृशाभावप्रतियोगिभिन्नत्वस्य साध्ये विरहात् । न च स्वरूपसमवायान्यतरसम्बन्धेन स्वाश्रयसामानाधिकरण्यं विवक्षणीयम् । एवञ्च तादृशाभावस्य साध्यतावच्छेदकविशिष्टान्यत्वविरहान्नाव्याप्तिरिति वाच्यम् । गगनाभावभिन्नमभाववादित्यादौ गगनाभावरूपसाध्याभावस्य साध्यतावच्छेदकविशिष्टान्यत्वविरहेणाभावान्तरमादायातिव्याप्तेः । न च तादृशान्यतरसाध्यकेऽव्याप्तिवारणायाऽनुसरणं क्रियते इति वाच्यम् । तथासति कपिसंयोगाभाववान् मेयत्वादित्यत्राव्याप्त्यापत्तेः, कपिसंयोगाभावाभावस्य कपिसंयोगात्मकस्य स्वरूपेणावृत्त्या कपिसंयोगाभावस्वरूपसाध्यतावच्छेदकविशिष्टान्यत्वेन लक्षणघटकत्वात् ।

अथ साध्यवद्वृत्तित्व जगद्वृत्तिभिन्नत्वोभयाभाववत्त्वं हेतुसमानाधिकरणाभावे निवेश्यतामलमनवच्छेदकत्वाद्यनुसरणेन । सर्वत्रसद्धेतौ व्यधिकरणस्वरूपादिसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभावमादाय "साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यम् इत्यभिप्रायेण" लक्षणसमन्वयः। व्यभिचारिण्यतिव्याप्तिवारणाय साध्यवद्वृत्तित्वदलम् । असंभववारणाय जगद्वृत्तिभिन्नत्वदलम् । न च व्यधिकरणसम्बन्धेन साध्याभावस्य जगद्वृत्तितया तादृशाभावमादाव्यभिचारिणि अतिव्याप्तिविरहे साध्यवद्वृत्तित्वदलस्य वैयर्थ्यमिति वाच्यम् ।

लक्ष्मीः

अथ किमिदं साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वम्। तच्च यदि साध्यतावच्छेदकतदितरोभयनिष्ठावच्छेदकत्वानिरूपकत्वम्, तदाऽप्रसिद्धिः अवच्छेदकताया अवच्छेदकभेदेन भिन्नतया महानसीयवन्ह्यभावप्रतियोगितानिरूपितावच्छेदकता एका वह्नित्वनिष्ठा-निरवच्छिन्ना, एका च महानसीयत्वनिष्ठा सावच्छिन्ना, न कापि साध्यतावच्छेदकतदितरोभयनिष्ठा एका इत्यसंभवप्रसंगात्।

नापि साध्यतावच्छेदकतदितरोभयत्वाश्रयनिरूपितवृत्तितावदवच्छेदकत्वानिरूपकत्वम् तत्। घटाभावनिरूपितप्रतियोगितावच्छेदकत्वस्यापि वह्नित्वघटत्वोभयत्वाश्रयनिरूपितवृत्तित्वेनाऽसंभवापत्तिरिति चेत्, साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्व, तदितरनिष्ठावच्छेदकतानिरूपकत्वोभयाभावस्य विवक्षितत्वात्। साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपिका सती तदितरनिष्ठावच्छेदकतानिरूपिका या प्रतियोगिता तदन्यत्वमिति यावत्। एवञ्च प्रमेयाश्रयवान् धूमादित्यत्र

---

दिव्या

समवायेन प्रमेयसाध्यकव्यभिचारिणि वाच्यत्वादिहेतौ अतिव्याप्तिवारणाय तदावश्यकत्वात्। न च संयोगेन द्रव्यस्याव्याप्यवृत्तितया संयोगेन महानसीयवन्ह्यभावे जगद्वृत्तित्वसत्वेनोभयाभावसत्वादव्याप्तिरिति वाच्यम्। जगद्वृत्तित्वस्य निरवच्छिन्नस्वरूपेण निवेशात्। न च धूमाभावे जगद्वृत्तिभिन्नत्वस्य कालिकेन साध्यवद्वृत्तित्वस्य चोभयस्य सत्वेन धूमाभावस्य लक्षणाघटकत्वादतिव्याप्तितादवस्थ्यम् इत्युच्यते तदा निरवच्छिन्नस्वरूपेणैव निवेशनीयम्।

अनुगमस्तु स्वसमानकालीननिरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नजगद्वृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व, निरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नसाध्याधिकरणवृत्तित्व उभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसम्बन्धेन यत्किंचिदभावविशिष्टहेत्वधिकरणवृत्तिर्योऽभावस्तत्प्रतियोगिनाशून्यसाध्यसामानाधिकरण्यम्। स्वं अभाव इति चेन्न।

घटत्वाभावपटत्वाभावान्यतरवान् घटत्वपटत्वान्यतरस्मादित्यादौ घटत्वरूपाभावस्य स्वरूपसम्बन्धेन साध्यवद्वृत्तित्वविरहेण तत्प्रयुक्तोभयाभावसत्वादव्याप्तिप्रसंगात्। न च तद्दोषवारणायानवच्छेदकत्वानुसरणं क्रियतामिति वाच्यम्। अभाववान् प्रमेयत्वादित्यादौ घटाभावाभावमादायाव्याप्तेर्दुर्वारत्वादिति ध्येयम्।

न च प्रमेयाश्रयवान् धूमादित्यादावव्याप्तिः। साध्यतावच्छेदकेतरस्याप्रसिद्धेरिति वाच्यम्। तदितरपदेन तद्विषयित्वाव्यापक विषयिताकत्वस्य येन रूपेण साध्यतावच्छेदकत्वं तेन रूपेण तदनवच्छिन्नप्रकारतावच्छेदकत्वस्य वा विवक्षितत्वात्।

---

लक्ष्मीः

साध्यतावच्छेदकीभूतप्रमेयेतराऽप्रसिध्द्याऽव्याप्तिमाशंकते। **न चेति।** **अव्याप्तिरिति।** धूमाधिकरणे पर्वते प्रमेयाश्रयस्य वह्नेः संयोगेन सत्वात्सद्धेतुतया तत्र साध्यतावच्छेदकेतराऽप्रसिद्धयाऽव्याप्तिरित्यर्थः। **समाधत्ते। तदितरपदेनेति।** साध्यतावच्छेदकेतरपदेनेत्यर्थः। **तद्विषयित्वाव्यापकविषयिताकस्येति।** साध्यतावच्छेदकविषयित्वाऽव्यापकविषयितानिरूपकस्येत्यर्थः। **विवक्षितत्वादिति।** तथा च तदितरपदं न साध्यतावच्छेदकभिन्नार्थकम्, येनोक्तस्थले प्रमेयेतराऽप्रसिद्ध्याऽव्याप्तिः स्यात्। तथा च प्रमेयाश्रयवान् धूमादित्यत्र साध्यतावच्छेदकीभूतप्रमेयविषयितायाः अव्यापकत्वस्य घटत्वादिविषयितायां सत्त्वेन तन्निरूपकत्वस्य घटत्वादावक्षततया तस्य निरुक्तपारिभाषिकसाध्यतावच्छेदकेतरपदेन धर्तुं शक्यतया नाप्रसिद्धिनिबन्धनाव्याप्तिरिति भावः।

इतरपदमन्तरार्थकम्, अन्तरपदस्य च स्वानवच्छिन्नप्रकारतावच्छेदके लक्षणा। स्वमत्र साध्यतावच्छेदकम्। प्रमेयानवच्छिन्नप्रकारत्वाऽप्रसिद्ध्या तद्दोषतादवस्थ्यमिति अतो येन रूपेणेत्यादि। अवच्छिन्नत्वं तृतीयार्थः। तस्य साध्यतावच्छेदकत्वेऽन्वयः। यद्रूपावच्छिन्नं साध्यतावच्छेदकत्वमित्यर्थः। साध्यतावच्छेदकतावच्छेदकं यद्रूपं तद्रूपविशिष्टानवच्छिन्नप्रकारतावछेदकमित्यर्थः। साध्यतावच्छेदकतावच्छेदकधर्मावच्छिन्ना या साध्यतावच्छेदकनिष्ठावच्छेदकता तद्निरूपिका या प्रकारता तदवच्छेदकधर्म एव साध्यतावच्छेदकेतरपदेन विवक्षितः। प्रमेयाश्रयवान् धूमादित्यत्र साध्यतावच्छेदकतावच्छेदकं प्रमेयत्वं तदवच्छिन्ना या प्रमेयात्मकसाध्यतावच्छेदकनिष्ठाऽवच्छेदकता तदनिरूपिका या घटवानिति ज्ञानीयघटनिष्ठाप्रकारता तदवच्छेदकघटत्वादेरेव पारिभाषिकप्रमेयेतरत्वसंभवान्न साध्यतावच्छेदकीभूतप्रमेयेतराऽप्रसिध्या अव्याप्तिः। घटवानिति ज्ञानीय घटनिष्ठप्र-

### लक्ष्मीः

कारताया घटत्वात्मकप्रमेयनिष्ठावच्छेदकतानिरूपकत्वेपि प्रमेयत्वावच्छिन्नप्रमेयनिष्ठावच्छेदकत्वानिरूपकत्वात् । घटत्वनिष्ठावच्छेदकताया निरवच्छिन्नत्वेन प्रमेयत्वरूपसाध्यतावच्छेदकतावच्छेदकानव-¹च्छिन्नत्वात् ।

---

### दिव्या

१ ननु साध्यतावच्छेदकेतरत्वं साध्यतावच्छेदकसामानाधिकरणभेदप्रतियोगित्वम् । तस्य च घटत्वादौ सौलभ्यादलं गुरुतरनिवेशेनेति चेन्न । महानसीयवह्निमान् धूमादित्यादौ साध्यतावच्छेदकत्वस्य वह्नित्वे महानसीयत्वे च सत्त्वेन तत्समानाधिकरणभेदप्रतियोगित्वस्य प्रातिस्विकरूपेण महानसीयत्वे वह्नित्वे च सत्त्वात् साध्याभावस्य लक्षणाऽघटकत्वादतिव्याप्तिरतस्तदुपेक्षितम् ।

यद्यपि प्रमेयाश्रयवान् धूमादित्यत्र घटत्वपटत्वादेः सर्वस्यैव धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वम्, तथापि वह्नित्वरूपप्रमेये घटत्वादिरूपप्रतियोगितावच्छेदकभिन्नत्वस्य सत्त्वाल्लक्षणसमन्वयः ।

ननु इतरपदेन साध्यतावच्छेदकतावच्छेदकं यद्रूपं तद्रूपविशिष्टानवच्छिन्नप्रकारतावच्छेदकविवक्षणेऽपि साध्यतावच्छेदकतावच्छेदकं यत्प्रमेयत्वं तद्विशिष्टत्वस्य निखिलपदार्थे सत्त्वेन तद्विशिष्टानवच्छिन्नप्रकारताप्रसिद्ध्या तद्दोषतादवस्थ्यमिति चेन्न । साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकत्वानिरूपकप्रकारतावच्छेदकस्य तादृशविशिष्टानवच्छिन्नप्रकारतावच्छेदकेत्यनेन विवक्षितत्वात् । तथा च घटवानिति ज्ञानीयनिरवच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रकारतायास्तादृशत्वान्नाऽप्रसिद्ध्यवकाशः ।

न च तथापि घटाभावीय प्रतियोगितायां साध्यतावच्छेदकघटत्वात्मकप्रमेयनिष्ठावच्छेदकतानिरूपकत्वस्य तदितरत् यद्घटत्वादिनिष्ठावच्छेदकतानिरूपकत्वस्य च सत्त्वेन साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्योक्ताऽव्याप्तितादवस्थ्यमिति वाच्यम् । विशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपकत्वमित्यनेन साध्यतावच्छेदकतावच्छेदकीभूत धर्मावच्छिन्नावच्छेदकत्वानिरूपकत्वस्यैव विवक्षितत्वात् । घटत्वादिनिष्ठावच्छेदकतायां प्रमेयत्वावच्छिन्नत्वविरहेण घटाभावप्रतियोगितायां तदितरोभयानवच्छिन्नत्वसत्त्वात्तन्निरूपकाभावमादाय लक्षणसमन्वयात् ।

अथ एतादृशविवक्षणे वन्हित्ववद्वान् धूमादित्यादौ महानसीयवन्ह्यभावप्रतियोगितायां वन्हित्वत्वावच्छिन्नावच्छेदकतानिरूपकत्वविरहेण निरुक्ततदि-

दिव्या

तरोभयानवच्छिन्नत्वसत्त्वात्तन्निरूपकाभावमादायाऽव्याप्तिरिति चेत् ।

साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्व-साध्यतावच्छेदकतावच्छेदकनिष्ठावच्छेदकत्वानिरूपितप्रकारतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वोभयाभाववत्त्वस्य विवक्षितत्वात् । तथा च महानसीयवन्ह्यभावप्रतियोगितायामुभयसत्त्वान्नाऽव्याप्तिः । एवं प्रमेयाश्रयवान् धूमादित्यादौ साध्यतावच्छेदकपदेन यदि घटत्वात्मकप्रमेयस्य धारणं तदा घटनिष्ठावच्छेदकतानिरूपकत्वस्य इतरघटत्वनिष्ठावच्छेदकतानिरूपकत्वस्य चैक्येनोभयत्वविरहाद्, घटत्वनिष्ठावच्छेदकतानिरूपकत्व-तदितरनिष्ठावच्छेदकतानिरूपकत्वोभयाभावस्य घटाभावप्रतियोगितायां सत्त्वाल्लक्षणसमन्वयात् ।

ननु साध्यतावच्छेदकतावच्छेदकरूपानवच्छिन्नप्रकारतावच्छेदकमेव तदितरपदेन विवक्षणीयम्, किं तादृशरूपावच्छिन्नावच्छेदकत्वानिरूपकत्वनिवेशेन इति चेन्न । साध्यतावच्छेदकतावच्छेदकं यन्महानसीयत्वत्वं तदनवच्छिन्नत्वस्य महानसीयवह्नित्वावच्छिन्नप्रकारतायां सत्त्वात्तदितरपदेन साध्यतावच्छेदकस्यापि धर्तुं शक्यत्वेन महानसीयवह्निमान् धूमादित्यादावतिव्याप्तिरस्तन्निवेशः । तथाच महानसीयत्वत्वावच्छिन्नावच्छेदकतानिरूपकत्वस्यैव प्रतियोगितायां सत्त्वान्नातिव्याप्तिः ।

एतेन साध्यतावच्छेदकतावच्छेदकरूपानवच्छिन्नप्रकारताश्रयत्वनिवेशोपि प्रत्युक्तः । उक्तातिव्याप्तितादवस्थ्यात, साध्याभावीयप्रतियोगितायां तद्रूपानवच्छिन्नवन्हिरिति ज्ञानीयप्रकारताश्रयवन्हित्वावच्छिन्नत्वसत्त्वेनोभयाभावविरहात्। न च महानसीयाभावमादाय नातिव्याप्तिः, तदीयप्रतियोगितायां तद्रूपावच्छिन्नप्रकारताश्रयमहानसीयत्वावच्छिन्नत्वसत्त्वेनोभयाभावसत्त्वादिति वाच्यम् । एवमपि महानसीयवह्निभिन्नवह्निमान् धूमादित्यादौ साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकतावच्छेदकं यन्महानसीयवन्हिभिन्नत्वत्वादिकं तदनवच्छिन्नवन्हिरिति ज्ञानीयप्रकारताश्रयवन्हित्वनिष्ठावच्छेदकतानिरूपकत्वस्य साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वस्य च सत्त्वादतिव्याप्तेः । नच प्रकारतावच्छेदकत्वनिवेशेपि वन्हिमानिति ज्ञानीयप्रकारतावच्छेदकत्वस्य वन्हित्वे सत्त्वात्तद्दोषतादवस्थ्यमिति वाच्यम् । तादृशरूपविशिष्टानवच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति अवच्छेदकतानिरूपकत्वघटितोभयाभावस्य विवक्षितत्वात् । रूपवृत्तित्वं चावच्छेदकतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ।

ननु वन्हित्ववद्वान् धूमादित्यत्राव्याप्तिः, वन्हित्वत्वावच्छिन्नावच्छेदकत्वानिरू-

### लक्ष्मीः

ननु महानसीयवन्हिवृत्तित्वविशिष्टजातिमान्नास्तीत्यभावमादायाऽव्याप्तिवारणार्थमग्रे प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वनिवेशो व्यर्थः। तादृशाभावस्य व्युदासात्। तथाहि साध्यतावच्छेदकवन्हित्वनिष्ठावच्छेदकतानिरूपकत्वस्य साध्यतावच्छेदकताविशिष्टान्यजातित्वावच्छिन्नावच्छेदकतानिरूपकत्वस्य तादृशाभावीयप्रतियोगितायां सत्वेनोभयाभावविरहादिति चेन्न। एतादृशनिवेशे लाभायैव तत्।

---

### दिव्या

पिका या प्रकारता सा न महानसीयवन्हित्ववद्वानितिज्ञानीयप्रकारता "तस्या वन्हित्वत्वावच्छिन्नावच्छेदकतानिरूपकत्वात्" किन्तु अन्यैव, तन्निरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं न महानसीयत्ववन्हित्वगतसमुदायत्वं किन्तु अन्यदेव, तादृशावच्छेदकतानिरूपकत्वस्य साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वस्य च द्वयोरभावेन महानसीयवन्हित्ववदभावस्य लक्षणघटकत्वात्। यद्यपि विशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वनिवेशेन तादृशाभावव्युदासंभवः, तथापि तादृशवन्हित्ववदभावस्य लक्षणघटकत्वादव्याप्तिरिति चेद् अत्रोच्यते—साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्व, साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपकत्वोभयाभावस्य विवक्षितत्वात्। वै० स्वसामानाधिकरण्य स्वसाजात्योभयसंबन्धेन। साजात्यं च निरवच्छिन्नत्व-सावच्छिन्नत्वान्यतररूपेण। तादृशवन्ह्यभावमादायाव्याप्तिवारणाय स्वसामानाधिकरण्य निवेशः। तन्मात्रोक्तौ प्रमेयाश्रयवान् धूमादित्यादौ साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वाप्रसिध्द्याऽव्याप्तिरतः साजात्यनिवेशः। तत्रापि निरवच्छिन्नत्वमात्रोक्तौ तद्दोषतादवस्थ्यम्, साध्यतावच्छेदकनिष्ठनिरवच्छिन्नावच्छेदकत्वाप्रसिद्धेः। सावच्छिन्नत्वमात्रोक्तौ वह्निमान् धूमादित्यादावप्रसिद्धिः।

१. अथैतन्निवेशे समवायसम्बन्धावच्छिन्न-प्रतियोगिताकवन्ह्यभावमादायाऽव्याप्तिवारकं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशो व्यर्थः। यतः समवायसम्बन्धावच्छिन्नवह्निनिष्ठप्रतियोगितायां साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकतानिरूपकत्व, साध्यतावच्छेदकताविशिष्टान्यसमवायनिष्ठावच्छेदकतानिरूपकत्वोभयसत्वेन तादृशाभावस्य लक्षणाघटकत्वेनाऽव्याप्तिविरहादिति चेन्न। धूमवान् वन्हेरित्यादौ संयोगेन धूमाभावीयप्रतियोगितायां धूमत्वनिष्ठावच्छेदकतानिरूपकत्व, तद्विशिष्टान्यसंयोगनिष्ठावच्छेदकतानिरूपकत्वोभयोः सत्वेन लक्षणाघटकत्वादतिव्याप्तिरतो विशिष्टान्यावच्छेदकतायां यत्किञ्चित्सम्बन्धावच्छिन्नत्वस्यावश्यकतया न ग्रन्थासंगतिः।

लक्ष्मीः

ननु हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणभिन्नत्वं- हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वाभाववत्वं वा साध्यतावच्छेदके निवेश्यताम्, तावतैव महानसीयवन्ह्यभावमादायाव्याप्तिवारणसंभवात्। तथा हि महानसीयवन्ह्यभावप्रतियोगितावच्छेदकतायाः पर्याप्तिसंबन्धेनाधिकरण "महानसीयत्व-वह्नित्वोभय" भिन्नत्वस्य साध्यतावच्छेदके वह्नित्वे सत्वादि-

---

दिव्या

नचोक्तातिव्याप्तिवारणाय धर्मसम्बन्धसाधारणसाध्यतावच्छेदकताविशिष्टान्यत्वस्यैव वक्तव्यतया संयोगनिष्ठावच्छेदकतायां साध्यतावच्छेदकताविशिष्टान्यत्वविरहान्नातिव्याप्तिः, तथैव समवायेपीति ग्रन्थासंगतिस्तदवस्थैवेति वाच्यम्। एवं सति समवायनिष्ठावच्छेदकतायामपि परम्परया साध्यतानिरूपितत्वस्य सत्त्वेन साध्यतानिरूपितधर्मसम्बन्धसाधारणावच्छेदकताविशिष्टान्यत्वस्य समवायनिष्ठावच्छेदकतायां विरहात्समवायेन वन्ह्यभावस्य लक्षणघटकतया तमादायाव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्य सार्थक्यसंभवात्। न च साध्यतानिरूपितत्वं साक्षादेव निवेशनीयम्, तथाच वन्हित्वप्रतियोगिकसमवायनिष्ठावच्छेदकतायां साक्षात्साध्यनिरूपितत्वविरहात्साध्यतावच्छेदकताविशिष्टान्यत्ववत्वादव्याप्तिविरहेण साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वपरस्य 'अत्र ग्राह्यसामानाधिकरण्ये' इत्यादिग्रन्थस्याऽसंगतिस्तदवस्थैवेति वाच्यम्। संयोगिनः कालिकेन साध्यतायां स्पन्दत्वादिहेतौ संयोगेन संयोग्यभावमादायाऽव्याप्तिः, तत्प्रतियोगितायां साध्यतावच्छेदकताविशिष्टान्यघटत्वनिष्ठावच्छेदकतानिरूपकत्वासत्वेनाभयाभावसत्वादतः साध्यतावच्छेदकताविशिष्टान्यघटकविशिष्टावच्छेदकता किञ्चित्सम्बन्धावच्छिन्ना ग्राह्या। तथा च तादृशविशिष्टावच्छेदकतापदेन संयोगसंसर्गनिष्ठावच्छेदकतायाः ग्रहीतुमशक्यतया विशिष्टान्या या संयोगसंसर्गनिष्ठावच्छेदकता तन्निरूपकत्व, संयोगनिष्ठावच्छेदकतानिरूपकत्वोभयोः सत्त्वेनाभावान्तरमादाय नाव्याप्तिः। एवं संयोगिनः संयोगेन साध्यतायां व्यभिचारिणि साध्यतावच्छेदकताविशिष्टान्यसंयोगसंसर्गनिष्ठावच्छेदकतानिरूपकत्व, साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वोभयोः सत्वात्साध्याभावस्य लक्षणाऽघटकत्वादतिव्याप्तिरतो विशिष्टान्यावच्छेदकतापि किञ्चित्सम्बन्धावच्छिन्ना वाच्या। तथा च समवायसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावमादायाव्याप्तिवारणाय प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेश इति न ग्रन्थाऽसंगतिः।

हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतायाः पर्याप्त्यधिकरणभिन्नत्वं साध्यतावच्छेदकस्य वाच्यमित्यपि कश्चित्। तन्न। प्रत्येकमुभयत्र पर्याप्तिसंबन्धेनाऽसतोऽवच्छेदकत्वस्योभयत्र पर्याप्तिसंबन्धेन सत्त्वायोगात्।

---

लक्ष्मीः

त्याह। **हेतुसमानाधिकरणेति**। अयंभावः। एतन्मते व्यासज्यवृत्तिधर्मप्रतियोगिकपर्याप्तेरव्याप्यवृत्तितया तत्संबन्धेन तदधिकरणत्वस्याप्यव्याप्यवृत्तितया महानसीयवन्ह्यभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वस्य वन्हित्वे द्वित्वावच्छेदेन सत्वेपि वह्नित्वगतैकत्वावच्छेदेन महानसीयवन्ह्यभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वाभावस्यापि सत्वेन लक्षणसमन्वयात्, अवच्छेदकभेदेन तत्, तदभावयोरेकत्र समावेशे बाधकाभावात्। न च महानसीयवह्निमान् धूमादित्यादौ साध्यतावच्छेदके महानसीयवन्ह्यभावप्रतियोगितावच्छेदकतायाः महानसीयत्ववन्हित्वगतद्वित्वावच्छेदेन सत्वेपि वन्हित्वगतैकत्वावच्छेदेन तदभावसत्वे बाधकाभावेनाऽतिव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छेदेनैव तादृशाभावस्य लक्षणे प्रवेशादतिव्याप्तेरभावादिति।

व्यासज्यवृत्तिधर्मप्रतियोगिकपर्याप्तेर्व्याप्यवृत्तितया तत्संबन्धेन तदधिकरणत्वस्यापि व्याप्यवृत्तितया तदभावस्यावच्छेदकभेदेनाप्यसत्वेनोक्तदोषवारणमित्यस्वरससूचनाय कश्चिदिति। अस्वरसं स्वयमाह। **तन्नेति**। **प्रत्येकं**। प्रत्येकस्मिन् केवले महानसीयत्वे वह्नित्वे च। **असतः**। अवर्तमानस्य। **अवच्छेदकत्वस्य**। प्रतियोगितावच्छेदकत्वस्य। **उभयत्र**। महानसीयत्ववह्नित्वोभयोः। सत्वायोगादिति।

तथा च महानसीयत्व-वह्नित्वोभयस्मिन् यदि महानसीयवह्न्यभावप्रतियोगितावच्छेदकता पर्याप्तिसंबन्धेन वर्तते तदा प्रत्येकं महानसीयत्वे वह्नित्वे च तस्याः पर्याप्तिसंबन्धेन सत्वमवश्यमङ्गीकार्यम्, तत्संबन्धेन प्रत्येकावृत्तिधर्मस्य तत्संबन्धेन समुदायावृत्तित्वनियमात्, एवं च महानसीयवन्ह्यभावप्रतियोगितावच्छेदकत्वं यदि पर्याप्तिसंबन्धेन वह्नित्वनिरूपितवृत्तित्वाभाववत्स्यात् तदा महानसीयत्ववह्नित्वोभयनिरूपितवृत्तित्वाभाववत्स्यादिति प्रथमत आपत्तिः, तत आपाद्याभावहेतुना आपादकाभावसिद्धिः। यथा महानसीयवन्ह्यभावप्रतियो-

लक्ष्मीः

गिनावच्छेदकत्वं वह्नित्वनिरूपितवृत्तितावत्, महानसीयत्वंवह्नित्वोभयनिरूपितवृत्तितावत्त्वादित्यनुमानेन वन्हित्वे महानसीयवन्ह्यभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वसिद्धिः। एवं च महानसीयवन्ह्यभावप्रतियोगितावच्छेदकतायाः पर्याप्त्यधिकरणं वन्हित्वमपीति तद्भिन्नत्वस्य वन्हित्वेऽभावाद्व्याप्तिरिति भावः[1]।

---

दिव्या

१. न च निरुक्तप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपभिन्नसाध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपविशिष्टावच्छिन्नसामानाधिकरण्यमित्येवास्तु किमेतत्कल्पपरित्यागेनेति वाच्यम्। एकत्वादेः पर्याप्त्यस्वीकारेण वह्निमान् धूमादित्यादौ साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाप्रसिद्धयाऽव्याप्तेः। धूमवान् वन्हेरित्यादौ साध्यतावच्छेदकगततादृशरूपाप्रसिद्ध्याभावान्तरमादायातिव्याप्तेश्च।

न च प्रतियोगिवैयधिकरण्ये विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताभावस्य सत्तारूपप्रतियोगिसमानाधिकरणतयाऽभावान्तरमादायाऽतिव्याप्तिवारणाय स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपताकाधिकरणत्वाभाववद्धेत्वधिकरणमिति पर्याप्तिनिवेश आवश्यकः, रूपवृत्तिवञ्च निरूपकतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। तथा च एकत्वप्रतियोगिकपर्याप्त्यस्वीकारे उक्तातिव्याप्तितादवस्थ्यमिति वाच्यम्। प्रतियोगिव्यधिकरणपदेन स्वप्रतियोगितावच्छेदकतात्वसमनियतनिरूपकताकाधिकरणत्वाभावस्य विवक्षितत्वात्। व्यापकताघटकसम्बन्धश्च स्वनिरूपितावच्छेदकतावत्त्वरूपः। स्वं० निरूपकता। अवच्छेदकतावत्ता च प्रसिद्धचतुष्टयसम्बन्धेन।

वस्तुतस्तु महानसीयवह्निभिन्नवह्निमान् धूमादित्यत्र प्रत्येकाभावस्य लक्षणाघटकतया साध्याभावस्य प्रतियोगिसमानाधिकरणतयाऽभावान्तरमादायाऽतिव्याप्तिवारणाय पर्याप्तिनिवेश आवश्यकः। परन्तु जगदीशमते हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं साध्यतावच्छेदकमिति व्यभिचारज्ञानकाले निरुक्तपर्याप्तिघटितव्याप्तिज्ञानादनुमित्यापत्तिभिया साध्यतावच्छेदकतादितरोभयानवच्छिन्नत्वं निवेशितम्, तन्मतेऽसमानप्रकारकज्ञानस्याऽप्रतिबन्धकत्वात्। गदाधरेण तादृशज्ञानस्य प्रतिबन्धकत्वं स्वीकृत्य पर्याप्तिनिवेशः कृतः। एकत्वपर्याप्तिरुभयमतेऽस्तीत्यास्तां विस्तरः।

साध्यतावच्छेदकभिन्नो यः साध्यनिष्ठोधर्मस्तदनवच्छेद्या प्रतियोगिता तु न निवेश्या ।

---

लक्ष्मीः

महानसीयवन्ह्यभावमादायाऽव्याप्तिं प्रकारान्तरेण वारयतां मतं दूषयितुमुपन्यस्यति । साध्यतावच्छेदकभिन्नो य इति । तथा च हेतुसमानाधिकरणाभावीया या साध्यतावच्छेदकभिन्नो यः साध्यनिरूपितवृत्तितावान् धर्मस्तदनवच्छिन्ना प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः पर्यवसिता । महानसीय वह्निनिष्ठाप्रतियोगिता तु साध्यतावच्छेदकभिन्नो यः साध्यनिष्ठो धर्मः महानसीयत्वं तदवच्छिन्नैव, तदनवच्छिन्नत्वविरहात्तादृशप्रतियोगिताको महानसीयवन्ह्यभावो न लक्षणघटकः, अपि तु साध्यतावच्छेदकभिन्नसाध्यनिष्ठमहानसीयत्वादि[1]धर्मानवच्छिन्नघटादिनिष्ठ—प्रतियोगिताको घटाद्यभाव एव तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्वान्न महानसीयवन्ह्यभावमादायाऽव्याप्तिः ।

अत्र साध्यतावच्छेदकभिन्नो य इत्यनुक्तौ व्यभिचारमात्रेऽतिव्याप्तिः, साध्याभावीयप्रतियोगितायाः धूमात्मकसाध्यनिष्ठधूमत्वरूपधर्मावच्छेद्यत्वात् । साध्यतावच्छेदकभिन्नधर्मानवच्छिन्नत्वमात्रोक्तौ 'वह्निमान् धूमादित्यादौ' सर्वत्रासम्भवः, घटाद्यभावीयप्रतियोगितायाः वह्नित्वातिरिक्तघटत्वाद्यवच्छिन्नत्वादतः । साध्यनिष्ठेति । साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकसमानाधिकरणवृत्त्यवच्छेदकत्वानिरूपकत्वमिति यावत् ।

अथात्र धर्मे साध्यनिष्ठत्वं यदि यत्किञ्चित्सम्बन्धेन तदा 'वह्निमान् धूमादित्यादौ तादृशसाध्यनिष्ठधर्मानवच्छिन्नप्रतियोगित्वाप्रसिद्धिः, घटत्वादेरपि कालिकेन साध्यवृत्तित्वात् । अथ साध्यतावच्छेदकताघटकसम्बन्धेन साध्यनिष्ठत्वनिवेशे न दोषः, समवायेन घटत्वादेः साध्यनिष्ठत्वाभावात् । न च महानसीयत्वस्य महानसवृत्तित्वरूपतया साध्यतावच्छेदकताघटकसमवायेन साध्यवृत्तित्वविरहेण महानसीयवह्न्यभावमादायाऽव्याप्तितादवस्थ्यमिति वाच्यम् ।

---

टिप्पणी

१. घटत्वं न तादृशो धर्मस्तस्य साध्यतावच्छेदकभिन्नत्वेपि साध्यनिष्ठत्वाभावात् ।

तथा सति तादृश प्रतियोगिताशून्यसाध्यसामानाधिकरण्यस्यैव व्याप्तित्वसंभवे

लक्ष्मीः

महानसीयत्वस्य महानसानुयोगिकसंयोगरूपतया समवायेन साध्यवृत्तितया तादृशाभावस्य लक्षणाघटकत्वेनाऽव्याप्त्यभावादिति चेन्न। तथा सति वह्निमान् धूमादित्यादौ तद्व्यक्तित्वादौ साध्यतावच्छेदकताघटकसमवायेन वह्निनिष्ठत्वविरहेण तद्व्यक्तित्वावच्छिन्नाभावमादायऽनवच्छेदकत्वानुसरणस्य आवश्यकत्वेन तद्वैयर्थ्यस्याऽसंगतिः स्यात्, एवं प्रमेयवान् वाच्यत्वादित्यादौ साध्यतावच्छेदकताघटकस्वरूपेण घटत्वादेरवृत्तितया तदवच्छिन्नप्रतियोगितायां साध्यतावच्छेदकभिन्नसाध्यवृत्तिधर्मानवच्छिन्नत्वस्य सत्वेन तन्निरूपकाभावमादाय लक्षणलमन्वयसंभवेऽप्रेऽप्रसिध्द्याऽव्याप्तिकथनासंगतिश्च। वह्नित्वप्रतियोगिकसमवायेन वह्नित्वस्य साध्यतावच्छेदकक स्थले साध्यतावच्छेदकताघटकतादृशसमवायेन साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिधर्मस्याऽप्रसिध्द्याऽव्याप्तिः।

एवं कालिकस्वरूपान्यतरसम्बन्धेन प्रमेयत्वसाध्यतावच्छेदककस्थले साध्यतावच्छेदकताघटकान्यतरसम्बन्धेन वस्तुमात्रस्यैव साध्यवृत्तितया साध्यवृत्तिधर्मानवच्छिन्नप्रतियोगित्वाप्रसिध्द्याऽव्याप्तिश्चातः प्रतियोगितावच्छेदकताघटकसम्बन्धेन साध्यनिष्ठत्वं वाच्यम्। तेन नासंगतिरिति ध्येयम्।

न चैवमपि साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्ना या साध्यनिष्ठा प्रतियोगिता तदन्यत्वमेव प्रतियोगितायां निवेश्यम्, एवं साध्यनिष्ठत्वं प्रतियोगितायां स्वरूपेणैवेति लाघवमपीति वाच्यम्। वह्निमान् धूमादित्यत्र वह्निघटोभयाभावमादायाव्याप्तेः। प्रतियोगितायाः प्रतियोगिभेदेन भिन्नत्वात्। न च साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्ना या साध्यनिष्ठा प्रतियोगिता तदनिरूपकत्वमभावे निवेश्यमिति वाच्यम्। तद्रूपवान् तद्रसादित्यत्र समनियताभावयोरैक्यमते तद्रसाभावमादायाव्याप्तेः।

**तथा सति**। साध्यतावच्छेदकभिन्नो यः साध्यनिष्ठो धर्मस्तदनवच्छिन्नत्वनिवेशे सति। **तादृशप्रतियोगिताशून्येति**। साध्यतावच्छेदकातिरिक्तसाध्यनिष्ठधर्मानवच्छिन्नप्रतियोगिताशून्येत्यर्थः। **साध्यसामानाधिकरण्यस्यैवेति**। एवकारव्यवच्छेद्यं स्पष्टयति।

साध्यतावच्छेदकस्य तदनवच्छेदकत्वानुसरणवैयर्थ्यापत्तेरिति ध्येयम् ।

अपि च प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिः, तथाहि साध्यतावच्छेदकातिरिक्तं यत्साध्यवृत्तिघटत्वादिकं तदनवच्छेद्यप्रतियोगिताकस्य हेतुसमानाधिकरणाभावस्य अप्रसिद्धेरिति तु नव्याः ।

लक्ष्मीः

साध्यतावच्छेदकस्य तदनवच्छेदकत्वानुसरणेति । साध्यतावच्छेदके प्रतियोगितानवच्छेदकत्वानुसरणेत्यर्थः । वैयर्थ्यापत्तिरिति । तद्व्यक्तिनिष्ठप्रतियोगितायाः साध्यतावच्छेदकातिरिक्तसाध्यवृत्तितद्व्यक्तित्वावच्छिन्नत्वेन तद्व्यक्त्यभावस्य लक्षणाघटकतया घटाभावस्यैव लक्षणघटकतया तत्प्रतियोगिताशून्यत्वस्य साध्ये वह्नौ सत्त्वात् अव्याप्त्यभावादनवच्छेदकत्वानुसरणवैयर्थ्यापत्तेरिति भावः ।

अनवच्छेदकत्वानुसरणवैयर्थ्ये इष्टापत्तौ दोषान्तरमाह । अपि चेति । तथा च घटत्वपटत्वादेः सर्वस्यैव साध्यतावच्छेदकीभूतप्रमेयत्वातिरिक्तप्रमेयवृत्तिधर्मतया तदनवच्छिन्नप्रतियोगिताको हेतुसमानाधिकरणाभावोऽप्रसिद्ध एवेति भावः।

केचित्तु समवायेन जातिविशिष्टस्य तादात्म्येन साध्यतायां सत्तादिहेतौ हेतुसमानाधिकरणानां चालनीन्यायेन 'द्रव्यं न, गुणो नेति भेदानां' प्रतियोगिताशून्यत्वस्य साध्ये विरहादव्याप्तिवारणायाऽनवच्छेदकत्वानुसरणमावश्यम्, तथा च तादृशभेदप्रतियोगितानवच्छेदकत्वस्य जातौ सत्त्वान्नाव्याप्तिरतो दोषान्तरमाह । अपिचेत्याहुः । तच्चिन्त्यम् ।

दिव्या

१. न चाऽनवच्छेदकत्वानुसरणेऽपि उक्तस्थले जातिमद्घटो नेति भेदमादायाऽव्याप्तितादवस्थ्यमिति वाच्यम् । साध्यतावच्छेदकतारूपभिन्नं यत्साध्यवृत्तिरूपं तद्वृत्तित्वस्य प्रतियोगितायां विवक्षणात्, रूपे साध्यवृत्तित्वञ्च स्वाश्रयाश्रयत्व सं० । प्रतियोगितायामवृत्तित्वघटकवृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व सं० । तथा च तादृशरूपातिरिक्तं यत्सत्ताघटत्वगतं द्वित्वं तद्वृत्तित्वस्य सत्तावद्घटाभावीयप्रतियोगितायां विरहेण तस्य लक्षणाघटकत्वेनाऽव्याप्तिविरहात् । न च घटत्वावच्छिन्नाभावीयप्रतियोगितायां तादृशरूपातिरिक्तं यद्घटत्वगतैकत्वं तद्वृत्तित्वस्य विरहेणाभावाप्रसिद्ध्याऽव्या-

वह्निमान् धूमादित्यादौ धूमादिनिष्ठतत्तद्व्यक्तित्वावच्छिन्नसामानाधिकरण्यस्य वह्नित्वावच्छिन्नानिरूपितत्वादाह, तद्धर्मावच्छिन्नेनेति।

लक्ष्मीः

साध्यतावच्छेदकभिन्नेत्यस्य प्रमेयाश्रयवान् धूमादित्यादावव्याप्तिवारणाय अवश्यं येन रूपेण साध्यतावच्छेदकत्वं तेन रूपेण तदनवच्छिन्नप्रकारतावच्छेदकभिन्नार्थकतया द्रव्यं नेत्यादिभेदीयप्रतियोगितावच्छेदकद्रव्यत्वादेरपि जातित्वेन जात्यनवच्छिन्नद्रव्यवानिति ज्ञानीयप्रकारतावच्छेदकतया पारिभाषिकसाध्यतावच्छेदकेतरत्वेन द्रव्यादिरूपसाध्यवृत्तिधर्मत्वेन साध्यतावच्छेदकातिरिक्तसाध्यनिष्ठधर्मानवच्छिन्नत्वस्य द्रव्यादिनि- प्रतियोगितायामसत्त्वेन द्रव्यादिभेदस्य लक्षणाघटकत्वेनानवच्छेदकत्वानुसरणमनावश्यकमेवेति।

**हेतुसमानाधिकरणाभावस्याऽप्रसिद्धेरिति।** अथ प्रमेयवान् वाच्यत्वादित्यत्र साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिधर्मानवच्छिन्नप्रतियोगित्वाप्रसिद्धेरित्येव कथं नोक्तम्। न च सांसर्गिकप्रतियोगिताया- मेव प्रमेयत्वावच्छिन्नत्वस्य प्रसिद्धिसंभवात् प्रतियोगित्वाप्रसिद्धिर्नोक्तेति वाच्यम्। तथा सति अभावे प्रतियोगितानिरूपकत्वस्यैवाऽप्रसिद्धेर्वक्तव्यत्वापातादिति चेन्न। स्वरूपसमवायादिसम्बन्धावच्छिन्नप्रमेयनिष्ठप्रतियोगितायामेव तत्प्रसिद्धिसौलभ्यात्। अत एवाऽभावाप्रसिद्धेरित्यनुक्त्वा हेतुसमानाधिकरणाभावस्याप्रसिद्धेरित्युक्तमिति ध्येयम्।

केचित्तु कालिकसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताया- मेव साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वसम्भवात्प्रतियोगित्वाप्रसिद्धिर्नोक्ता। अभावप्रसिद्धिकथनेन च कालिकसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावे प्रतियोगिवैयधिकरण्यस्यासत्त्वादभावाप्रसिद्धिरित्युक्तमिति प्राहुः।

वस्तुतो ध्वंसीयप्रतियोगितायां किञ्चिद्धर्मावच्छिन्नत्वाभावेन तादृशप्रतियोगिताया एव तथाविधत्वादभावपर्यन्तानुधावनम्। तादृश-

दिव्या

द्धिरिति वाच्यम्। तादात्म्येन गगनवान्नेति भेदस्यैव प्रसिद्ध्या लक्षणघटकत्वेन तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वेन नानुपपत्तिः।

सिद्धान्तलक्षणदीधितिः—

**तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थः ।**

---

द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्य धूमसामान्ये वा तत्तद्वह्निव्याप्यत्वस्य वारणार्थं विशिष्य लक्ष्य निर्दिशति । तद्रूपविशिष्टस्येत्यादिना ।

---

लक्ष्मीः

धर्मानवच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावा-प्रसिद्धिः सूचितेति तत्त्वम् ।

**दीधितौ । यद्रूपविशिष्टस्येति** । हेतुतावच्छेदकावच्छिन्नस्येत्यर्थः । तस्य प्रयोजनं वक्ष्यति—**इत्थञ्चेत्यादिना । यो धर्मः** । साध्यताव-च्छेदक इत्यर्थः । **तद्धर्मावच्छिन्नेन** । साध्यतावच्छेदकावच्छिन्नेन । **येन केनापि समम्** । साध्येन समम् । सामानाधिकरण्यमित्यस्य व्याप्तिरित्यनेनान्वयः । व्याप्तेर्लक्षणमित्यर्थः । लक्ष्यभूतां व्याप्तिमाह । **तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपितेति** । तत्पदं हेतुपरम् । षष्ठ्यर्थो निष्ठत्वम् । द्वितीयतत्पदं साध्यपरम् । तथा च हेतुतावच्छेद-कावच्छिन्नहेतुनिष्ठा साध्यतावच्छेदकावच्छिन्नसाध्यनिरूपिता व्याप्ति-र्लक्ष्या इति भावः । एतेन सामानाधिकरण्यपर्यन्तं लक्षणम्, लक्ष्या व्याप्तिः, सा च यदि सामानाधिकरण्यरूपा लक्ष्यलक्षणभावश्च तादात्म्येन तदा इतरभेदानुमाने उपनयवाक्यात् 'स्वेतरभेदव्याप्यहेतु-व्यापकसाध्यसामानाधिकरण्यत्ववत्तादृशसाध्यसामानाधिकरण्यमि-त्याकारकात्' शाब्दबोधानुपपत्तिः, पक्षतावच्छेदकहेतोरैक्यादित्याक्षेपः समाहितः ।

अत्र तस्य तन्निरूपितेत्यनेनैव सामञ्जस्येऽलं तद्रूपविशिष्टस्ये-त्यादिनेत्यत आह । **द्रव्यत्वादिरूपेणेति** । अत्र तृतीयार्थोऽवच्छिन्न-त्वम्, तस्य धूमेऽन्वयः । धूमपदोत्तरसप्तम्या लिङ्गकत्वमर्थः । तस्य व्याप्यत्वघटकवन्ह्यनुमितावन्वयः । वह्निव्याप्यत्वं च वन्ह्यनुमिति-जनकतायां विषयविधयाऽवच्छेदकत्वम् । **वारणार्थमिति** । लक्ष्यता वारणायेत्यर्थः । द्रव्यत्वावच्छिन्नलिङ्गकवह्नित्वावच्छिन्नविधेयता-शाल्यनुमितिजनकतावच्छेदकस्य पक्षत्ववारणायेति समुदितार्थः ।

तथा च तद्धर्मावच्छिन्नहेतुकतादृशधर्मावच्छिन्नविधेयताकानुमितिजनकतायां विषयविधयाऽवच्छेदिका इति तदर्थः। तेन व्याप्तिपदेनापि तादृशसामानाधिकरण्योक्त्या न पौनरुक्त्यम्।

---

लक्ष्मीः

धूमसामान्ये इत्यस्य धूमत्वावच्छिन्नलिङ्गकतत्तद्व्यक्तित्वावच्छिन्नविधेयताशाल्यनुमितिजनकतावच्छेदकस्य च लक्ष्यतावारणायेत्यर्थः। **विशिष्य**। हेतुतावच्छेदकं साध्यतावच्छेदकं च विशेषतो निवेश्य। **लक्ष्यम्**। अनुमितिजनकतावच्छेदकरूपपक्षम्। **निर्दिशति**। ज्ञापयतीत्यर्थः।

तथा च तद्धर्मावच्छिन्नलिङ्गकतद्धर्मावच्छिन्नविधेयताशाल्यनुमितिजनकतावच्छेदिका स्वेतरभिन्ना तद्धर्मावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यादित्यत्र तल्लिङ्गकत्वोक्तौ द्रव्यत्वावच्छिन्नधूमलिङ्गकवह्नित्वावच्छिन्नविधेयताशाल्यनुमितिजनवच्छेदकस्यापि पक्षान्तर्गततया तादात्म्येन धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यरूपव्याप्तेरसत्त्वाद् भागासिद्धिरतस्तद्धर्मावच्छिन्नलिङ्गकेति एवं धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यस्य तादात्म्येन धूमत्वावच्छिन्नहेतुकतद्वह्नित्वावच्छिन्नविधेयताशाल्यनुमितिजनकतावच्छेदके पक्षान्तर्गतेऽसत्त्वात्तद्दोषतादवस्थ्यमतो विधेयतायां तद्धर्मावच्छिन्नत्वं निवेशितम्। तदेवाह **तथा चेति**। भागासिद्धिवारणाय हेतुतावच्छेदकसाध्यतावच्छेदकयोर्विशिष्य निवेशे च **तद्धर्मावच्छिन्नहेतुकेति**। हेतुतावच्छेदकावच्छिन्नहेतुकेत्यर्थः। **तद्धर्मावच्छिन्नविधेयताकानुमितेः**। साध्यतावच्छेदकावच्छिन्नविधेयताकानुमितेः। **जनकतायामिति**। तथाविधव्याप्तिज्ञाननिष्ठायामित्यर्थः। **विषयविधयेति**। व्याप्तिज्ञानांशे व्याप्तेर्विशेषणत्वेनाऽवच्छेदकत्वादिति भावः। **तदर्थः**। तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावनिरूपितेत्यर्थः। **तेन**। निरुक्तव्याप्तिज्ञाननिष्ठानुमितिकारणतायां विषयिता-

महानसीयवन्हिसामानाधिकरण्यस्यैव निखिलवन्हिव्याप्तित्वमिति व्याप्तेः सामान्यरूपतालाभाय यावदिति पूर्वत्र येनकेनापीति च ।

ननु दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तिः चालनीन्यायेन दण्डमात्रस्यैव

लक्ष्मीः

सम्बन्धेन विशेषणीभूयावच्छेदिका इत्यर्थकरणेन । **व्याप्तिपदेनापीति ।** सामानाधिकरण्यं व्याप्तिरिति दीधितौ व्याप्तिपदेनापीत्यर्थः । अपिना सामानाधिकरण्यसमुच्चयः । यथा सामानाधिकरण्यपदस्य सामानाधिकरण्यार्थकत्वम् , तथा च व्याप्तिपदेनापि सामानाधिकरण्योक्तौ । **न पौनरुक्त्यमिति ।** उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्यमिति भावः । निरुक्तानुमितिजनकतावच्छेदकस्यैव लक्ष्यीभूतव्याप्तिपदार्थत्वात् ।

ननु अनुमितिजनकतायां विषयविधयाऽवच्छेदकस्य व्याप्तिपदार्थत्वे द्रव्यत्वावच्छिन्नहेतुकवह्नित्वावच्छिन्नविधेयकानुमितिजनकतावच्छेदकस्याप्रसिद्धतया न भागासिद्धिसम्भवः । न च धूमवदनुयोगिकसंयोगेन द्रव्यत्वावच्छिन्नलिङ्गकानुमितिजनकतावच्छेदकस्य प्रसिद्धिरिति वाच्यम् । तत्रोक्तसामानाधिकरण्यस्य सत्त्वेन भागासिद्धिविरहादिति चेन्न; धूमत्वावच्छिन्नलिङ्गकवह्नित्वावच्छिन्नविधेयताशाल्यनुमितिजनकतानतिरिक्तवृत्तिविषयित्वं स्वेतरभिन्नं धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यनिरूपितत्वादित्यत्र तात्पर्यात् । विषयिता च भ्रमप्रमासाधारणीति नाप्रसिद्धिरिति ।

व्याप्तेः । **सामान्यरूपतालाभायेत्यर्थः ।** व्याप्तेरैक्यलाभायेत्यर्थः । तथा चैतस्यैव भावं सामान्याधिकरण्यव्यक्तीनां भेदेऽपीत्यादिना । वस्तुतस्तु इत्यादिना व्यापकसामानाधिकरण्यविशिष्टधूमत्वादिकं व्याप्तिरिति भावं वक्ष्यति ।

आशङ्कते । **नन्विति ।** दण्डिसंयोगादित्यत्र दण्डिसंयोगपदं दण्डिप्रतियोगिकत्वविशिष्टसंयोगपरम्, तथा च संयोगस्य द्विष्ठतया दण्डिन्यपि वर्तमानत्वेन तत्र दण्ड्यात्मकसाध्यविरहेपि न सद्धेतुत्वव्याघातः, स्वप्रतियोगिकत्वविशिष्टस्य स्वस्मिन्नसत्वात् । अनुयोगितासंबन्धेन वा दण्डिसंयोगस्य हेतुता बोध्या । तथाच तेन संबन्धेन

हेतुसमाधिकरणाभावप्रतियोगितावच्छेदकत्वात् ।

न च प्रतियोगितानवच्छेदकत्वमित्यत्रावच्छेकत्वं शुद्धसाध्यतावच्छेदककस्थले निरवच्छिन्नमिव विशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नं ग्राह्यम् ।

---

## लक्ष्मीः

तस्य दण्डव्यधिकरणे एव सत्वात्तत्र च साध्यस्य दण्डिनः संयोगेन सत्वान्न व्यभिचारः । **चालनीयन्यायेनेति** । तत्तद्दण्डव्यधिकरणेऽपरतत्तद्दण्ड्यभावमादायेत्यर्थः । **दण्डमात्रस्यैव** । सकलदण्डस्यैव । एव कारेण यत्किंचिद्दण्डव्यावृत्तिः । **हेतुसमानाधिकरणाभावेति** । हेतुभूत दण्डिसंयोगाधिकरणवृत्तितत्तद्दण्डीनास्तीति प्रतीतिसिद्धाभावेत्यर्थः । अव्याप्तिमपाकर्तुं शङ्कते । **न चेति** । वाच्यमितिपरेणान्वयः । **शुद्धसाध्यतावच्छेदककस्थले इति** । शुद्धं किंचिद्धर्माविशेषितं साध्यतावच्छेदकं यत्र तादृशस्थले इत्यर्थः । यत्र साध्यतावच्छेदकं अनुल्लिख्यमानजातिस्वरूपमखण्डोपाधिरूपं वा तत्रेति यावत् । **निरवच्छिन्नमिति** । तथाच शुद्धसाध्यतावच्छेदककस्थले निरवच्छिन्ना या हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकता तच्छून्यत्वं निरवच्छिन्ना याऽवच्छेदकतातन्निरूपिका प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितातदनवच्छेदकत्वं वा साध्यतावच्छेदके वक्तव्यमितिभावः । निरवच्छिन्नत्वं च न किञ्चिन्निष्ठावच्छेदकत्वानिरूपकत्वम्, अवच्छेदकतामात्रस्यैव संबन्धावच्छिन्नत्वेन निरवच्छिन्नावच्छेदकत्वाप्रसिद्धेः । किन्तु किञ्चित्संबन्धावच्छिन्नावच्छेदकत्वानिरूपकत्वम् । एतेन निरवच्छिन्नत्वस्य निरवच्छिन्नावच्छेदकतानिरूपकत्वार्थकत्वरूपयथाश्रुतार्थकत्वे महानसीयवह्निवृत्तित्वविशिष्टजातिमद्वह्निर्नास्तीत्यभावमादायाऽव्याप्तिरपि समाहिता, तत्र वह्निनिष्ठप्रतियोगितायाः निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपकत्वेऽपि किंचित्संबन्धावच्छिन्नावच्छेदकत्वानिरूपकत्वस्याभावात् । वस्तुतः साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकतानिरूपकत्व, साध्यतावच्छेदकताविशिष्टान्यजातित्वावच्छिन्नावच्छेदकतानिरूपकत्वोभयस्यैव प्रतियोगितायां सत्वेन तादृशाभावमादायाव्याप्तिशंकैव नोदेतीति ।

अन्यथा पर्वतेनमहानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीत्यादिप्रतीत्या विशिष्टवह्नित्वस्य[1] तादृशाभावप्रतियोगितावच्छेदकतया वह्निमान् धूमादित्यादाविव जातिमद्वान् घटत्वादित्यादावव्याप्तिप्रसंगात् ।

---

लक्ष्मीः

**विशिष्टसाध्यतावच्छेदककस्थले** । यत्र साध्यतावच्छेदकमुल्लिख्यमानजातिस्वरूपं न वाऽखण्डोपाधिरूपं तादृशस्थले । किञ्चिद्धर्मविशेषितसाध्यतावच्छेदककस्थले इति यावत् । **ग्राह्यमिति** । प्रतियोगितानवच्छेदकमित्यत्रावच्छेदकत्वमित्यादिः । तथाच साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्ना या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकता तच्छून्यत्वं तादृशाभयधर्मानवच्छिन्ना याऽवच्छेदकता तन्निरूपिका या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिता तदनवच्छेदकत्वं वा साध्यतावच्छेदके वाच्यमिति । **अन्यथा** । शुद्धसाध्यतावच्छेदककस्थलेऽवच्छेदकतायां निरवच्छिन्नत्वानिवेशे । महानसीयवह्निवृत्तित्वविशिष्टजातिः वह्नित्वं तद्वान्महानसीयवह्निरेव तदभावस्य पर्वते सत्वात्तादृशाभावप्रतियोगियोगितावच्छेदिका महानसीयवह्निवृत्तित्वविशिष्टवह्नित्वजातिस्तदन्यत्वस्य साध्यतावच्छेदके शुद्धवह्नित्वेऽसत्वादव्याप्तिरितिभावः । निरवच्छिन्नत्वनिवेशेतु महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकताया तादृशवैशिष्ट्यजातित्वोभयधर्मावच्छिन्नतया किंचित्संबन्धावच्छिन्नावच्छेदकत्वानिरूपकत्वविरहेण तादृशाभावस्य लक्षणाघटकत्वात्[1] । **वह्निमान् धूमादित्यादाविवेति** । वह्निमान् धूमादित्यादौ यथाऽव्याप्तिस्तथेत्यर्थः । विशिष्टसाध्यतावच्छेदककस्थले प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वं निवेशनीयम् । अनिवेशे त्वाह । **अव्याप्तिप्रसंगादिति** । हेत्वधिकरणे घटे जातिमतोरूपादेः समवायेन सत्वात्सद्धेतुतयाऽव्याप्तिप्रसंगादित्यर्थः । अत्र समवायेन जातिमतस्तादात्म्येन साध्यतायां हेत्वधिकरणे घटे द्रव्यघटभेदासत्वेन द्रव्यत्वघटत्वयोरेव तादृशप्रतियोगितानवच्छेदकत्वेन लक्षणसमन्वय एव यात,एवं संयोगेन साध्यतायामपीति समवायेनैव तथात्वमिति भावः ।

घटे पटसमवेतत्वविशिष्टजातिमान्नास्तीति इत्यादिप्रतीत्या विशिष्टजातेस्तादृशाभावप्रतियोगितावच्छेदकत्वात् ।

---

लक्ष्मीः

अव्याप्तिं योजयति । **घटे इति** । हेत्वधिकरणे इत्यादिः । **विशिष्टजातेः** । पटसमवेतत्वविशिष्टजातेः । **तादृशाभावेति** । पटसमवेतत्वविशिष्टजातिमदभावेत्यर्थः । **प्रतियोगितावच्छेदकत्वादिति** प्रतियोगितावच्छेदकीभूतविशिष्टजातिभिन्नत्वस्य शुद्धजातावभावादित्यर्थः । निवेशे तु नाव्याप्तिः, साध्यतावच्छेदकतावच्छेदकं जातित्वं तदितरत् पटसमवेतत्ववैशिष्ट्यमेतदुभयावच्छिन्नत्वात्तादृशाभावस्य-लक्षण-घटकत्वादिति ।

नन्वेवमपि समवेतत्वविशिष्टजातिमद्वान् घटत्वादित्यत्र पटसमवेतत्वविशिष्टजातिमद्भावमादायाव्याप्तिरिति चेन्न । अवच्छेदकतावच्छेदकपटस्यापि तत्र घटकत्वान्नाव्याप्तिः । परन्तु अवच्छेदकतावच्छेदकसाधारणावच्छेदकतास्वीकारे विशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकपर्यन्तानुधावनं व्यर्थम्, साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्यैव सम्यक्त्वात् । पटसमवेतत्वविशिष्टजातिमद्भावप्रतियोगिताया साध्यतावच्छेदकतावच्छेदकं यज्जातित्वं तस्यापि साध्यतावच्छेदकतया तदितरो यः पटसमवेतत्ववैशिष्ट्यरूपो-धर्मः तदुभयधर्मावच्छिन्नतया तदुभयधर्मानवच्छिन्नत्वाभावात्, अतः 'अवच्छेदकतावच्छेदकसाधारणावच्छेदकत्वास्वीकारात्' साध्यसाधनभेदेनव्याप्तेर्भेदाद्यत्र साध्यतावच्छेदकतावच्छेदकं प्रसिद्धं तत्राभावीयप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतावच्छेदकेतरधर्मावच्छिन्नावच्छेदकत्वानिरूपकत्वं निवेशनीयम्, तथा च समवेतत्वविशिष्टजातिमद्वान् घटत्वादित्यत्र साध्यतावच्छेदकतावच्छेदकस्य समवेतत्वस्य प्रसिद्धतया तदापि तादृशपरिष्कारः कर्तव्य एव, तथा च पटसमवेतत्वविशिष्टजातिमद्भावमादाय नाव्याप्तिरिति ध्येयम् ।

ननु तादृशाभावप्रतियोगितानवच्छेदकत्वस्य घटत्वादिजातौ सत्वात्कथमव्याप्तिरितिचेन्न । साध्यतावच्छेदकसमवायसम्बन्धेन घटे द्रव्यमात्रस्याऽसत्वेन घटाभावस्यापि लक्षणघटकत्वात् । एवं सत्तावद्-घटाभावमादाय सत्ताया अवच्छेदकत्वं बोध्यम् ।

लक्ष्मीः

ननु आत्माभावस्य प्रतियोगिवैयधिकरणाभावादेव न लक्षणघटकता, आत्माऽभावीयप्रतियोगितावच्छेदकाऽऽत्मत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेरिति चेन्न। अभावान्तरीयप्रतियोगितानवच्छेदकत्वस्याऽऽत्मत्वे सत्वेऽपि तदवच्छिन्नसामानाधिकरण्याप्रसिद्ध्याऽव्याप्ति संगतिः।

अत्र पटसमवेतत्ववैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन, न तु स्वरूपेण तथा सति गुणत्व-रूपत्व रसत्वादीनां जातीनामनवच्छेदकत्वादव्याप्त्यसंगतिः स्यात्। नच घटपटगतद्वित्ववृत्तिद्वित्वत्वजातावपि पटसमवेतत्ववैशिष्ट्यसम्बन्धेन तादृशजातिमत्त्वस्याभावात् घटेऽसत्वाद्द्वित्वत्वजातेरनवच्छेदकत्वेनाऽव्याप्त्यसंगतिरिति वाच्यम्। यादृशघटे 'पटसमवेत' द्वित्वमेव कारणाभावान्नोत्पन्नं तादृशघटत्वस्य हेतुत्वे तात्पर्यात्। तथाच तादृशाभावस्य लक्षणघटकत्वाद्ग्रंथसंगतेः[२]।

नच पाकजस्पर्शत्वजातौसामानाधिकरण्यसम्बन्धेन पटसमवेतत्ववैशिष्ट्यविरहेण तस्याऽपि घटत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वेनाऽव्याप्त्यसंगतिस्तदवस्थैवेति वाच्यम्। अवयविनि पाकानभ्युपगमेन-पाकजस्पर्शत्वे घटत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्यैव सत्वादिति ध्येयम्।

ननु प्रथमोपस्थितमहानसीयवह्निवृत्तित्वविशिष्टजातिमदभावः कथं परित्यक्त इति चेन्न। गन्धत्वजातौ महानसीयवह्निवृत्तित्ववैशिष्ट्यविरहेण तस्याऽपि घटत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वेनाऽव्याप्त्यनवकाशापत्तिरतः पटसमवेतत्वविशिष्टजात्यवच्छिन्नाभावानुधावनम्। घटे गन्धत्वावच्छिन्नाभावासत्वेपि पटसमवेतत्वविशिष्टजात्यवच्छिन्नाभावानुधावनम्। घटे गन्धत्वावच्छिन्नाभावासत्वेऽपि पटसमवेतत्वविशिष्टजातिमतो गन्धस्य 'पटे सत्वेन' घटे तदभावसत्वाद् भवत्यव्याप्तिरिति।

अत्रोभयानवच्छिन्नत्वमात्रोक्तौ महानसीयवह्निवृत्तित्वविशिष्ट जातिमद्वान् धूमादित्यादावतिव्याप्तिः साध्याभावीयप्रतियोगितायामुभयानवच्छिन्नत्वविरहात्। साध्यतावच्छेदकत्तावच्छेदकानवच्छिन्नत्वमात्रोक्तौ 'उक्तस्थले' विशिष्टसाध्यतावच्छेदकव्यभिचारिमात्रेऽतिव्याप्तिः, साध्याभावस्य लक्षणाघटकत्वात्[३]।

नच प्रमेयस्य साध्यतावच्छेदकतावच्छेदकत्वे साध्यतावच्छेदक-

वच्छेदकेतराप्रसिद्धिरिति वाच्यम्। साध्यतावच्छेदकतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्व, तद्विशिष्टान्यावच्छेदकतानिरूपकत्वोभयाभावस्य विवक्षितत्वात्। वै० पूर्ववत्। साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वनिवेशपक्षे साध्यतावच्छेदकतावच्छेदकनिष्ठावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वमेव तत्।

नचोभयत्रावच्छेदकतायां निरवच्छिन्नत्वमेव निवेश्यतां तावतैव जातिमद्वान् घटत्वादित्यत्राव्याप्तिवारणं संभवति, पटसमवेतत्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकताया निरवच्छिन्नत्वाभावादिति वाच्यम्। तथा सति दण्डिमान् द्रव्यत्वादित्यादौ साध्याभावप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वविरहेण साध्याभावस्य लक्षणाघटकत्वादतिव्याप्तिःस्यात्। नच व्यभिचारिणः सर्वलक्षणस्यालक्ष्यतया शुद्धसाध्यतावच्छेदककस्थलीयलक्षणस्य दण्डिमान् द्रव्यत्वादित्यादौ दण्डावच्छिन्नप्रतियोगिताया निरवच्छिन्नावच्छेदकत्वानिरुपकत्वाभावात्साध्याभावस्य लक्षणाघटकत्वादभावान्तरमादायातिव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकतायामपि निरवच्छिन्नत्वस्य विशेषणीयत्वात्। एवं च तादृशप्रतियोगितायाः अनवच्छेदकं यत्साध्यतानिरुपितनिरवच्छिन्नावच्छेदकतावत्साध्यतावच्छेदकं तदवच्छिन्नेत्यादिपर्यवसितलक्षणे नातिव्याप्तिरिति ध्येयम्। न चोभयत्र साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वमेव निवेश्यतामिति वाच्यम्। वह्निमान् धूमादित्यत्रैव साध्यतावच्छेदकतावच्छेदकाप्रसिध्याऽव्याप्तेः[१]।

---

दिव्या

१ अथ महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावप्रतियोगितायां साध्यतावच्छेदकवह्नित्व तदितरद्रव्यत्वोभयनिष्ठजातित्वावच्छिन्नावच्छेदकताकत्वस्य सत्वात्तदितरोभयानवच्छिन्नत्वविरहेण नाव्याप्तिरिति चेन्न। वन्हित्वप्रतियोगिकसमवायसंबन्धावच्छिन्ना या महानसीयवन्हिनिरूपिता वृत्तिता तद्विशिष्टजातिमदभावप्रतियोगितावच्छेदकत्वस्य वह्नित्वमात्रे सत्वेन तदितरोभयानवच्छिन्नत्वस्य तदीयप्रतियोगितायां सत्वात्तमादायाव्याप्तिदाने तात्पर्यात्।

किंच तादृशाभावप्रतियोगितावच्छेदकता एकैव वह्नित्वे द्रव्यत्वेचास्तीति तथाच 'तदितरनिष्ठ' साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपकत्वविरहेण तदितरोभयानवच्छिन्नत्वसत्व.त्तादृशाभावस्य लक्षणघटकत्वाद्यथाश्रुतमेव सम्यक्।

दिव्या

केचित्तु महानसीय वह्निवृत्तित्वविशिष्टवह्नित्ववान्नास्तीत्यभावमादायाव्याप्तिदाने तात्पर्यमित्याहुः।

ननु तथापि साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकताकत्व, तदन्यतादृशवैशिष्ट्य 'जातित्व' निष्ठावच्छेदकताकत्वोभयोः सत्वादव्याप्तिविरह इति चेन्न। महानसीय कालीन 'वह्निमान् धूमादित्यादौ महानसीय वन्ह्यभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादव्याप्तिवारणाय साक्षात्साध्यताविशिष्टान्यावच्छेदकताकत्वघटितोभयाभावनिवेशस्यावश्यकतया यत्र महानसीयवह्नित्ववद्वान् धूमादित्यादौ महानसीयत्ववैशिष्ट्य' समानाधिकरण्यसंबन्धेन वह्नित्वांशे भासते तत्र साक्षात्साध्यतावच्छेदकता वह्नित्वनिष्ठावच्छेदकतैव तद्विशिष्टान्यमहानसीयत्वनिष्ठावच्छेदकतानिरूपकत्वघटितोभयाभावस्य प्रतियोगितायां विरहेण महानसीयकालीनवन्ह्यभावस्य लक्षणाघटकत्वेनाभावान्तरमादायातिव्याप्तिवारणाय साक्षात्साध्यताविशिष्टान्यसाक्षादवच्छेदकतानिरूपकत्वघटितोभयाभावनिवेश आवश्यकः। तन्निवेशे च प्रमेयकालीनघटवन्नित्यज्ञानत्वादित्यादौ नित्यज्ञानान्यत्वविशिष्टघटाभावीय प्रतियोगितायां पटाभावीय प्रतियोगितायां च साक्षात्साध्यताविशिष्टान्यसाक्षादवच्छेदकताअन्तर्गत वैशिष्ट्यनिष्ठावच्छेदकतानिरूपकत्व साध्यतावच्छेदकप्रमेयनिष्ठावच्छेदकतानिरूपकत्वोभयोः सत्वादुभयाभाववत् प्रतियोगित्वाप्रसिद्धयाऽव्याप्तिरतः साध्यतानिरूपितसाक्षादवच्छेदकतानिरूपकत्वघटितोभयाभावनिवेश आवश्यकः। तथाच महानसीय वन्हिवृत्तित्वविशिष्टजातिमदभावीय प्रतियोगितायां साक्षात्साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वसत्वेऽपि साक्षात्साध्यतावच्छेदकताविशिष्टान्यसाक्षादवच्छेदकतानिरूपकत्वविरहेणोभयाभावसत्वात्तादृशाभावमादायाव्याप्तिवारणायावच्छेदकतायां निरवच्छिन्नत्वनिवेशः।

नन्वेवं जातित्वावच्छिन्नावच्छेदकताया अपि जातिभेदेन नानात्वे साक्षाद्वन्हित्वनिष्ठावच्छेदकताकत्वतद्विशिष्टान्यद्रव्यत्वनिष्ठसाक्षादवच्छेदकतानिरूपकत्वयोः सत्वेन लक्षणाघटकत्वेन पुनरसंगतिरिति चेन्न। एकधर्मावच्छिन्नावच्छेदकताया ऐक्योपगमान्नासंगतिः।

नन्वेवमपि महानसीयवन्हिवृत्तित्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकीभूतवन्हित्वावच्छिन्ननिरूपकताकाधिकरणत्वस्य पर्वतादौ सत्वात्तादृशाभावे प्रतियोगिवैयधिकरण्यासंभवेन कथं तमादायाव्याप्तिः। यदि च महानसीयवन्हिवृत्तित्वविशिष्टजातिमद्वान् धूमादित्यादौ उक्तयुक्त्या साध्याभावस्य लक्षणाघटक-

त्वादभावान्तरमादायातिव्याप्तिवारणाय यादृशप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणत्वाभावस्य विवक्षणीयतयाऽव्याप्तिसंगतिः। वृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसं० इत्युच्यते। तदापि महानसीयवन्हिवृत्तित्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं वन्हित्वगतैकत्वमपि, जातिगतसमुदायत्वस्य तथात्वेऽलीकत्वापत्तेरिति कथमयमभावः प्रतियोगिव्यधिकरण इति तु न शंक्यम्। साक्षात्परम्परासाधारणावच्छेदकतास्वीकारात्। हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं यत्साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्विशिष्टावच्छिन्नसाध्यसामानाधिकरण्यम्, तथाच महानसीयवन्हिवृत्तित्ववैशिष्ट्यस्य, जातेः जातित्वस्यापि तादृशपर्याप्त्यनुयोगितावच्छेदकतया तद्वृत्तिनिरूपकताकाधिकरणताया महानसे एव सत्वेन तस्याः पर्वते अभावेन तादृशाभावे प्रतियोगिवैयधिकरण्य संभवेनाऽतिव्याप्तिविरहेपि तुल्ययुक्त्याऽव्याप्तिवारणाय निरवच्छिन्नत्वनिवेश आवश्यकः। यद्यपि पूर्वोक्तरीत्या साध्यतावच्छेदके निरवच्छिन्नत्वनिवेशादव्याप्तिविरहात्प्रतियोगिवैयधिकरण्यनिवेशो व्यर्थः। तथापि तार्णवन्हिमान् धूमादित्यादावतिव्याप्तिवारणार्थं तन्निवेश इति ध्येयम्। साक्षात्परंपरासाधारणावच्छेदकत्वानभ्युपगमे तु प्रतियोगितावच्छेदकताविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वं निवेश्यम्। वै० स्वतादात्म्य स्वनिरूपितावच्छेदकतात्वैतदन्यतर सं०। वै० पूर्ववत्।

एकत्वादेः पर्याप्त्यस्वीकारादितिचेन्न। असमानप्रकारकज्ञानस्याऽप्रतिबन्धकत्वं जगदीशमते तन्मते साध्यतावच्छेदकतदितरेत्यादिनिवेशः। एकत्वपर्याप्तिस्तूभयमतेप्यस्तीति। वस्तुतस्तु प्रतियोगिताविशिष्टनिरूपकताकाधिकरणत्वाभाव एव प्रतियोगिवैयधिकरण्यम्। वै० स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्व, स्ववृत्तित्वोभय सं०। स्ववृत्तित्वंच स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्व सं०। उभयत्र वै० प्रसिद्धचतुष्टय सं०। एवं चैकत्वपर्याप्त्यस्वीकारेपि न क्षतिरिति ध्येयम्।

२ नच पटसमवेतत्वविशिष्टद्वित्वत्वावच्छिन्नाधिकरणता पटे एवास्तीति वाच्यम्। निरूपकांशे वैशिष्ट्यस्य यदा मानं तदैव विशिष्टधर्मावच्छिन्नाधिकरणताया वैलक्षण्यम्। यथा समानाधिकरणवृत्तित्वसंबन्धेन यदि गुणकर्मान्यत्व वैशिष्ट्यं सत्तात्वे भासते तदा तादृशभेदविशिष्टसत्तात्वावच्छिन्नाधिकरणतायाः

शुद्धसत्तात्वावच्छिन्नाधिकरणतायाश्च न वैलक्षण्यम् । तथा प्रकृतेऽपि । परन्तु अयं विशेषः सामानाधिकरण्यघटित सामानाधिकरण्यसंबन्धेन गुणकर्मभेद-वैशिष्ट्यस्य सत्तात्वे भासमाने तादृशधर्मावच्छिन्नाधिकरणताया वैलक्षण्यमेव । नच व्यासज्यवृत्तितानवच्छेदकपटसमवेतत्वविशिष्टजातिमद्भावमादायाव्याप्तिरिति वाच्यम् । तथा सति तादृशप्रतियोगितानवच्छेदकत्वस्य द्वित्वत्वजातौ सत्त्वेनाव्याप्तिविरहात् ।

वस्तुतो व्यासज्यवृत्तितावच्छेदकजातिभिन्नजातिमद्वान् घटत्वादित्यत्राव्याप्तिदाने तात्पर्यात् । न च तथापि पटसमवेतत्वविशिष्टजातिमद्भावप्रतियोगितानवच्छेदकत्वस्य घटत्वे सत्त्वेन कथमव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकसमवायसंबन्धेन तदवच्छिन्नसामानाधिकरण्यविरहेणाव्याप्तितादवस्थ्यादिति ।

परे तु जातिमतस्तादात्म्येन साध्यतायामेवाव्याप्तिः । पटनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताविशिष्टत्वस्य तादृशद्वित्वजातौ सामानाधिकरण्यसंबन्धेन सत्त्वेऽपि साध्यतावच्छेदकतादात्म्यसंबन्धेन तद्वद्भेदस्य घटे सत्त्वेन प्रतियोगिव्यधिकरणाऽसंभवशंकापि नास्तीति वदन्ति ।

३ अथ साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वमेव निवेश्यतां किमुभयानवच्छिन्नत्वनिवेशेन । नच संयोगेन धूमविशिष्टस्य तादात्म्येन साध्यतायां तत्पर्वतत्वादिहेतौ संयोगेन घटविशिष्टभेदीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वेऽपि साध्यतावच्छेदकतावच्छेदकेतरघटत्वावच्छिन्नत्वेन साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वाप्रसिद्ध्याऽव्याप्तिवारणाय तन्निवेश आवश्यक इति वाच्यम् । वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य साध्यतायां तादृशसंबन्धावच्छिन्नावच्छेदकत्वाप्रसिद्ध्याऽव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्व, साध्यतावच्छेदकनिष्ठत्वोभयाभाववत्वं साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वमित्यस्यार्थः । तथा चोक्तस्थलेऽपि घटभेदीयप्रतियोगितावच्छेदकतायामेव तादृशावच्छेदकत्वप्रसिद्धेः, तस्याः निरवच्छिन्नत्वेन साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वाच्चेति चेन्न । घटत्वत्वेन घटत्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्व हेतौ स्वरूपतो घटत्वविशिष्टस्य विषयितयाऽभावमादायाऽव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां किंचिद्धर्मावच्छिन्नत्वं निवेशनीयम्, तथा च किंचिद्धर्मावच्छिन्नप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वाभावेन दण्डिमान् दण्डिसंयोगादित्यादावव्याप्तिवारणायोभयाभावपर्यन्तनिवेशः ।

वस्तुतः सखण्डसाध्यतावच्छेदकस्थले घटत्वत्वस्यैव साध्यतावच्छेदकत्वात्, साध्यतावच्छेदकेतरानवच्छिन्नत्वमेव निवेशनीयम् । अत एव पटसमवेतत्व-

तथा च तद्दण्डवान्नास्तीत्यादि प्रतीत्या तत्ताविशिष्ट दण्डव्यक्तेरेवावच्छेदकत्वावगाहनात् शुद्धदण्डव्यक्तीनां दण्डत्व तदितरोभयानवच्छिन्नं यद्धेतु समानाधि-

---

लक्ष्मीः

जातिमद्वान् घटत्वादित्यादावव्याप्तिवारणार्थं साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशस्यावश्यकत्वे तेनैव दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तिं वारयति। तथाचेति। विशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशे सति इत्यर्थः। तद्दण्डवान्नास्तीत्यादिप्रतीत्येति। अत्र तत्त्वं दण्डांशे विशेषणम्, न तु दण्ड्यंशे, तथा सति साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशेनैव तद्वारणात्। तत्ताविशिष्टदण्डव्यक्ते-

---

दिव्या

विशिष्टवान्नास्तीत्यभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वसत्त्वेन अव्याप्तितादवस्थ्यमि' ति पूर्वपक्षोपि निरस्तः।

४ अथ अवच्छेदकत्वसंबन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकत्वाभाववद्धर्मानवच्छिन्ना या प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकता-तच्छून्यसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यस्यैव सम्यक्त्वे निरवच्छिन्नत्वस्योभयानवच्छिन्नत्वस्य च निवेशो व्यर्थः। वह्निमान् धूमादित्यादौ अवच्छेदकत्वसंबन्धस्य वह्नि वनिष्ठसाध्यतावच्छेदकताया व्यधिकरणतया तत्संबन्धावच्छिन्नवह्नित्वनिष्ठसाध्यतावच्छेदकत्वाभावस्य जातित्वादौ सत्वेन तादृशमहानसीय वह्निवृत्तित्वविशिष्टजातित्वानवच्छिन्नाऽवच्छेदकता न महानसीयवह्निवृत्तित्वविशिष्टजातिनिष्ठा' किन्तु घटो नास्तीत्यभावीय घटत्वनिष्ठा किंचिद्धर्मानवच्छिन्नाऽवच्छेदकता तच्छून्यत्वस्य वन्हित्वे सत्वाल्लक्षणसमन्वयः। एवं जातिमद्वान् घटत्वादित्यत्र जातित्वे जातिनिष्ठावच्छेदकतायाः सत्वेऽपि पटसमवेतत्ववैशिष्ट्ये अवच्छेदकतासंबन्धेन जातिनिष्ठसाध्यताया असत्वेन तादृशवैशिष्ट्यानवच्छिन्ना या घटो नास्तीत्यभावीय घटत्वनिष्ठा निरवच्छिन्ना प्रतियोगितावच्छेदकता तच्छून्यत्वस्य साध्यतावच्छेदके रूपत्वादिजातौ सत्वाल्लक्षणसमन्वय इति चेन्न। प्रमेयविशिष्टप्रमेयाश्रयस्य तादात्म्येन साध्यतायां तद्व्यक्तित्वहेतावव्याप्ति प्रसगांत्। साध्यतावच्छेदकप्रमेयनिष्ठावच्छेदकताया अवच्छेदकतासंबन्धेन प्रमेयमात्रे सत्वेन तादृशसंबन्धेन साध्यतावच्छेदकत्वाभावाप्रसिद्धेरिति ध्येयम्।

करणाभावप्रतियोगितावच्छेदकत्वं तदभावसत्वान्नाव्याप्तिरिति वाच्यम्।

प्रमेयदण्डवान्नास्तीत्यादौ प्रमेयत्वोपलक्षितस्यैव तद्दण्डवान्नास्तीत्यादावपि तत्वोपलक्षितदण्डव्यक्तिमात्रस्यैवावच्छेदकत्व कल्पनात्, केवलस्यावच्छेदकत्वाऽसंभवे

---

लक्ष्मीः

**रेवावच्छेदकत्वावगाहनादिति।** तत्ताविशिष्टदण्डव्यक्तेरेव प्रतियोगितावच्छेदकत्वविषयीकरणादित्यर्थः। एवकारेण शुद्धदण्डस्य प्रतियोगितावच्छेदकत्वव्यावृत्तिः। **शुद्धदण्डव्यक्तीनां।** साध्यतावच्छेदकीभूतानां। निष्ठत्वं षष्ठ्यर्थः। अस्य तदभावसत्वादित्यनेनान्वयः। तथा च शुद्धदण्डव्यक्तौ प्रतियोगितावच्छेदकत्वाभावसत्वादिति भावः। एवंच तद्दण्डी नास्तीत्यभावीय तद्दण्डनिष्ठप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकदण्डत्वतदितरतत्त्वोभयधर्मावच्छिन्नत्वसत्वात्तादृशाभावस्य लक्षणाघटकत्वात् अभावान्तरीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदकीभूतशुद्धदण्डे विरहान्नाव्याप्तिरिति शंकार्थः। **प्रमेयदण्डवान्नास्तीत्यादौ प्रमेयत्वोपलक्षितस्यैवेति।** प्रमेयदण्डवान्नास्तीत्यभावप्रतियोगितावच्छेदकतायाः दण्डमात्रनिष्ठत्वेऽविवादात्तस्य दृष्टान्तयोल्लेखः।

**तद्दण्डवान्नास्तीत्यादावपि तत्त्वोपलक्षितदण्डमात्रस्यैवाऽवच्छेदकत्वकल्पनादिति।** अपिना प्रमेयदण्डवान्नास्तीत्यस्य समुच्चयः। तथा च यथा प्रमेयदण्डवान्नास्तीत्यभावप्रतियोगितावच्छेदकत्वं दण्डस्यैव, नतु प्रमेयत्वविशिष्टदण्डस्य, प्रमेयत्वस्योपलक्षणत्वे उपलक्षणस्य अभावप्रतियोगितावच्छेदककोटौ भानानियमात्।

तथा तद्दण्डवान्नास्तीत्यभावप्रतियोगितावच्छेदकत्वं दण्डमात्रस्यैव तत्वन्तु दण्डांशे उपलक्षणमिति भावः। तथा चोक्तनिवेशेपि तद्दण्डीनास्तीत्यभावमादायाव्याप्तितादवस्थ्यमिति भावः। ननु एवं दण्डिमति तद्दण्डीनास्तीति प्रतीत्यनुपपत्तिः, तद्दण्डीनास्तीतिप्रतीतौ तत्वोपलक्षितदण्डस्यावच्छेदकत्वोक्तौ परिशेषेण दण्डत्वेनैव तस्यावच्छेदकत्वं प्राप्तम्, एवं च तद्दण्डवान्नास्ति दण्डवान्नास्तीति प्रतीत्योः समानविषयकत्वादिति चेन्न। तद्व्यक्तेः स्वरूपतो भानमिति मतेनायं ग्रन्थः। तथाच तद्दण्डवान्नास्तीत्यत्र तद्दण्डव्यक्तेरेवावच्छेदकत्वं युक्तम्, तत्वो-

दण्डयादौ साध्ये परम्परासंबद्धं दण्डत्वादिकमेवावच्छेद-

एव विशिष्टस्य तथात्वस्वीकारात् । अन्यथा प्रमेयत्वविशिष्टदण्डादेरपि तथात्वापत्तेरत-आह दण्डयादाविति ।

लक्ष्मीः

पलक्षितदण्डव्यक्तेरेवानतिप्रसक्ततया तत्तांशस्य दण्डत्वस्य चावच्छेदकान्तर्भावे गौरवात् । दण्डवान्नास्तीत्यादौ च सकलदण्डव्यक्तेरेवावच्छेदकत्वाद्विशेषः । एवं च तत्त्वस्योपलक्षणत्वे दण्डत्वस्याप्युलक्षणत्वमिति हृदयम् । महानसीयवह्न्यभावप्रतियोगितायां वह्नित्वादेरतिप्रसक्ततया महानसीयत्वादेरप्यवच्छेदकान्तर्भावात् । एतदेवाह । **केवलस्येति** । तथाच यत्र शुद्धस्य विशेष्यस्यातिप्रसक्तत्वं तत्रैव तद्विशेषणस्यावच्छेदकत्वं स्वीक्रियते, यथा विशिष्टसत्तावद्भेदे शुद्धसत्ताया अतिप्रसक्तत्वात् सामानाधिकरण्यसम्बन्धेन गुणकर्मान्यत्ववैशिष्ट्यस्य अवच्छेदकत्वं स्वीक्रियते । **अन्यथा** । केवलस्यावच्छेदकत्वासंभवेपि विशिष्टस्यावच्छेदकत्वस्वीकारे ।

**तथात्वापत्तेरिति** । अवच्छेदकत्वापत्तेरित्यर्थः । तथा च विशिष्टसाध्यतावच्छेदककस्थले दण्डिमान् दण्डिसंयोगादित्यत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशेऽपि अव्याप्तिस्तदवस्थैव, तद्दण्डीनास्तीत्यभावप्रतियोगितावच्छेदकतायाः दण्डमात्रनिष्ठायाः साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वात्, तद्दण्डीनास्ति, एतद्दण्डी नास्तीत्यादेरभावस्य लक्षणघटकत्वेन तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके दण्डे सत्वादिति भावः ।

**दीधितौ-दण्ड्यादौ** । **साध्ये** । दण्डिमान् दण्डिसंयोगादित्यत्र । **परंपरासंबद्धं** । स्वाश्रयाश्रयत्वरूपपरंपरासंबन्धवत् । स्वं-दण्डत्वं । **दण्डत्वादिकमेवेति** । एवकारेण दण्डस्य व्यावृत्तिः। **अतः** । दण्डत्वस्य साध्यताच्छेदकत्वात् । तथाच तत्तद्दण्ड्यभावप्रतियोगितावच्छेदकताया दण्डमात्रे सत्वेऽपि तादृशावच्छेदकताशून्यत्वस्य साध्यतावच्छेदके दण्डत्वे सत्वान्न दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तिरितिभावः ।

**कमतो नाव्याप्तिः ।**

---

हेतुमति दण्डसामान्याभावसत्वाद्दण्डत्वमपि तादृशावच्छेदकमेवेत्यत उक्तं परंपरासंबद्धमिति । तथाच स्वाश्रयाश्रयत्वलक्षणपरम्परासम्बन्धेन दण्डत्ववतो दण्डिनः साधनवति अभावविरहान्नाव्याप्तिः । साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नाया एव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायाः प्रवेशात्, अन्यथा रूपत्वविशिष्टज्ञानादेः समवायेनाभावस्य घटादौ हेतुमति सत्वाद्रूपवान् पृथिवीत्वादित्यादावव्याप्तिप्रसंगादिति भावः ।

---

लक्ष्मीः

ननु लाघवात् साक्षात्संबन्धेन दण्डत्वस्य साध्यतावच्छेदकत्वं वाच्यमत आह । **हेतुमतीति** । दण्डिसंयोगाधिकरणे इत्यर्थः । **दण्डत्वमपि** । अपिना दण्डस्य समुच्चयः । **तादृशावच्छेदकमेवेति** । प्रतियोगितावच्छेदकमेवेत्यर्थः । तथाच दण्डिसंयोगाधिकरणे भूतलादौ दण्डसामान्याभावसत्वात्तादृशाभावप्रतियोगितावच्छेदकत्वस्य दण्डत्वे सत्वादव्याप्तिरिति भावः । एवं च व्यभिचाराल्लाघवमकिञ्चित्करमिति यावत् । **अत उक्तमिति दीधितिकृतेति शेषः** । परंपरासंबन्धं दर्शयति । **स्वाश्रयाश्रयत्वलक्षणेति** । **स्वं**-दण्डत्वम् । **नाव्याप्तिरिति** । दण्डिसंयोगाधिकरणे दण्डसामान्याभावसत्वेपि स्वाश्रयाश्रयत्वसंबन्धेन दण्डत्ववतो दण्डिनोऽभावविरहान्नाव्याप्तिरिति भावः । ननु तादृशपरंपरासंबन्धेन दण्डस्य साध्यतावच्छेदकत्वेऽपि दण्डसामान्याभावमादायाव्याप्तिस्तदवस्थैवेत्यत आह । **साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नाया इति** । तथाच साध्यतावच्छेदकताघटकसंबन्धावच्छिन्ना या हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकता तच्छून्यत्वं साध्यतावच्छेदके निवेशनीयम् । दण्डसामान्याभावप्रतियोगितावच्छेदकता तु समवायसंबन्धावच्छिन्ना न तु उक्तपरंपरासंबन्धावच्छिन्नेति तद्वारणम् । **अन्यथा** । प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वानिवेशे । **हेतुमति** । पृथिवीत्वाधिकरणे घटादौ । **अव्याप्तिप्रसंगादिति** । रूपवान् पृथिवीत्वा-

लक्ष्मीः

दित्यत्र पृथिवीत्वाधिकरणे विषयितासंबन्धेन रूपत्वविशिष्टज्ञानाभावप्रतियोगितावच्छेदकत्वस्य रूपत्वे सत्वात्तच्छून्यत्वस्य साध्यतावच्छेदके रूपत्वे विरहादव्याप्तिः। तन्निवेशे तु विषयितया रूपत्वविशिष्ट ज्ञानाभावप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटक समवायसंबन्धावच्छिन्नत्वाभावेन तादृशाभावस्य लक्षणाघटकतया घटाभावमादाय नाव्याप्तिरिति भावः।

न च वह्निमान् धूमादित्यत्रैव विषयितया वह्नित्वविशिष्टज्ञानाभावमादायाऽव्याप्तिसंभवे स्थलान्तरानुधावनं किमर्थमिति वाच्यम्। तादृशाभावप्रतियोगिनो ज्ञानस्य साध्यतावच्छेदकसंयोगेनाधिकरणाऽप्रसिध्या प्रतियोगिवैयधिकरण्यविरहेण तस्य लक्षणाघटकत्वात्तदुपेक्षितम्। न च खण्डशः प्रतियोगिवैयधिकरण्यतत्राक्षतमिति वाच्यम्। यथाश्रुताभिप्रायेण तस्योक्तत्वादिति यथाश्रुतग्रन्थानुरोधिनः[1]।

---

दिव्या

१ परे तु वह्नीयसंयोगेन वन्हेः साध्यतास्थलेऽव्याप्तिवारणाय प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य प्रतियोगिव्यधिकरणत्वस्य च पारिभाषिकस्यैव वक्तव्यतया तादृशाभावस्य प्रसिद्धिस्थले संभवेपि वास्तविकसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावमादायाव्याप्तिसंभवे प्रयासेन तत्संपादनं शिरोवेष्टनेन नासिकास्पर्शतुल्यमेवेति प्रसिद्धस्थलपरित्याग इति प्राहुः।

वस्तुतस्तु यथाश्रुतसाध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यस्य पारिभाषिकस्यैव वा तस्य निवेशे उभयथैव रूपवान् पृथिवीत्वादित्यत्राव्याप्तिर्न तु वन्हिमान् धूमादित्यत्रेति सूचनाय प्रसिद्धस्थलपरित्याग इति तु मान्याः।

प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे वन्हिमान् धूमादित्यत्राव्याप्तिर्न संभवतीत्यतो रूपसाध्यकानुधावनमिति केचित्।

ननु समवायसंबन्धेनैव जातेः स्वरूपतो भानात् विषयित्वसंबन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वविरहात्कथमव्याप्तिरिति चेन्न। अयं गौरितिव्यवसायानन्तरं गोत्वेनेवं जानामीत्यनुव्यवसायानुरोधेन विषयितासंबन्धेनापि जातेः स्वरूपतो भानस्याङ्गीकृतत्वात्।

अथ तद्रूपानुयोगिकसमवायेन रूपत्वविशिष्टस्य विषयितया साध्यतायां तद्ज्ञानत्वहेतौ समवायेन रूपत्वविशिष्टस्य विषयितया अभावमादायाव्याप्तिवारणाय एवं रूपवान् पृथिवीत्वादित्यादौ तद्रूपानुयोगिकसमवायेन रूपवत्वाद-

दिव्या

भावमादायाव्याप्तिवारणाय च साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतावा-वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वावच्छेदकताकप्रतियो-गिताकाभावनिवेशस्यावश्यकतया वह्नित्वप्रतियोगिकसमवायेन वह्निविशिष्टस्य साध्यतायामव्याप्तिः, रूपवृत्तित्वं चावच्छेदकतायां स्वावच्छेदकसंसर्गतावच्छेद-त्वावतावावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेनेति चेन्न। पारिभाषिकस्यैव साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य निवेशात्। तथाहि। साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व-साध्यताव-च्छेदकनिष्ठत्वोभयाभावः प्रतियोगितावच्छेदकतायां निवेशनीयः। तथा च विषयित्वसंबन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटक-संबन्धातिरिक्तविषयित्वसंबन्धावच्छिन्नत्व, साध्यतावच्छेदकनिष्ठत्वोभयोः सत्त्वा-द्विषयितया रूपत्वविशिष्टाभाववारणम्। न च प्रमेयप्रतियोगिकतादात्म्येन प्रमेयविशिष्टस्य साध्यतायामव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकताव्यापकत्व-घटितोभयाभावस्य निवेशेन घटाभावमादाय लक्षणसमन्वयात्। न च जाति-मद्वान् घटत्वादित्यादौ विषयितया स्वरूपतो घटत्वविशिष्टाभावस्य सत्ता-विशिष्टाभावस्य च लक्षणघटकतया तादृशप्रतियोगितावच्छेदकताव्यापकत्वा-भावेन तादृशोभयाभावसत्त्वादव्याप्तिः, यत्किञ्चित्साध्यतावच्छेदकताव्यापकत्व-निवेशे चोक्तस्थलेऽव्याप्तितादवस्थ्यमिति वाच्यम्। साध्यतावच्छेदकव्यापकनिष्ठत्वो-भयाभावस्य विवक्षितत्वात्। घटत्वस्य साध्यतावच्छेदकव्यापकत्वाभावेन तादृशोभयाभावस्य तन्निष्ठावच्छेदकतायां सत्त्वेनाव्याप्तिविरहात्। सत्तायाश्च तादृशव्यापकत्वान्नतदवच्छिन्नाभावमादायाव्याप्तिरिति संक्षेपः।

टिप्प०—अथात्र कालिकेन महानसानुयोगिकसंयोगविशिष्टः सन् समवायेन वन्हि-त्वविशिष्टो यस्तस्य संयोगेन साध्यतायां धूमादिहेतावव्याप्तिः, महानसानुयोगिक-संयोगत्व, वन्हित्वरूपसाध्यतावच्छेदकयोः धूमसमानाधिकरणस्य समवायेन महान-सानुयोगिकविशिष्टस्य कालिकेन वन्हित्वविशिष्टस्याभावीयप्रतियोगितावच्छेदकतायाः सत्वात्, साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वेनोभयाभाववत्वाच्च। न चोक्ता-भावस्य कालिकेन महानसानुयोगिकविशिष्टस्य समवायेन वन्हित्वविशिष्टस्य सामाना-धिकरण्यात्कथं प्रतियोगिवैयधिकरण्यसंभव इति वाच्यम्। (अत्र महानसानुयो-गिकसंयोगनिष्ठा प्रतियोगितावच्छेदकता समवायसंबन्धावच्छिन्ना—निरूपकतावच्छेद-कता कालिकसंबन्धावच्छिन्ना—वन्हित्वनिष्ठा सा कालिकसंबन्धावच्छिन्ना आद्या निरू-पकतावच्छेदकता च समवायसंबन्धावच्छिन्ना) समवायेन महानसानुयोगिक

## लक्ष्मीः

जात्यखण्डोपाध्यतिरिक्तस्य स्वरूपतो भानस्याप्रामाणिकत्वात्के-

## दिव्या

टि०—संयोगविशिष्टः सन् कालिकेन वन्हित्वविशिष्टस्य संयोगेन साध्यतायां व्यभिचारिणिधूमादिहेतौ। (तादृशाभावस्य कालिकेन महानसानुयोगिकविशिष्टस्य कालिकेन वन्हित्वविशिष्टप्रतियोगिनः सामानाधिकरण्यात्) तुल्ययुक्त्याऽतिव्याप्तिवारणाय यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यस्य स्वप्रतियोगिताविशिष्टावच्छेदकत्वानिरूपिका या प्रतियोगितावच्छेदकावच्छिन्ननिरूपकता तन्निरूपिताधिकरणत्वाभावत्वमर्थः। वै० स्वानवच्छेदकसंबन्धावच्छिन्नत्व, सामानाधिकरण्योभयसंबन्धेन। एवमपि घटत्वत्वेन घटत्वविशिष्टस्य विषयितया साध्यतायां तद्ज्ञानशुद्धघटत्व विशिष्टविषयकज्ञानान्यतरत्वहेतावतिव्याप्तिः, हेतुसमानाधिकरणस्यापि निरुक्तसाध्याभावस्य शुद्धघटत्वविशिष्टसमानाधिकरणतया लक्षणाघटकत्वादतः स्वप्रतियोगितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वं प्रतियोगितावच्छेदकावच्छिन्ननिरूपकतायां विशेषणीयम्। वै० स्वावच्छेदकसंबन्धावच्छिन्नत्व-स्वसमानाधिकरण्य-स्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्वैतच्चतुष्टयसं०। स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन। तथा च निरूपकतायाः स्ववृत्तित्वाभावान्नोक्तातिव्याप्तिः। अत्र शुद्धघटत्वविशिष्टस्य विषयितया साध्यतायां तद्ज्ञानघटत्वत्वेन घटत्वविषयकज्ञानान्यतरत्वहेतौ साध्याभावस्य घटत्वत्वेन घटत्वविशिष्टसमानाधिकरणतया लक्षणाघटकत्वादतिव्याप्तिवारणाय स्वानवच्छेदकानवच्छिन्नत्वनिवेशः। तथा चोक्ताव्याप्तिदुर्वारैवेति चेन्न। हेतुमन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकताविशिष्टानवच्छेदकत्वानिरूपकत्वस्य विशेषणीयत्वात्। वै० स्वानवच्छेदकसंबन्धावच्छिन्नत्व-स्वसमनियतत्व-स्वसाजात्यैतत्त्रितयसंबन्धेन। साजात्यं च किञ्चिदवच्छिन्नत्वनिरवच्छिन्नत्वान्यतररूपेण। न चैवमपि महानसीयवन्ह्यभाववारणासंभवः। साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वस्य विशेषणीयत्वात्। वै० स्वावच्छेदकसंबन्धावच्छिन्नत्व-स्वसमनियतत्व-स्वसाजात्यैतत्त्रितयसंबन्धेन। स्वावच्छेदकसंबन्धावच्छिन्नत्वानिवेशे यदर्थं परिष्कारस्तत्र विपरीताभावप्रतियोगितायां साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वसत्वादव्याप्तिः स्यात्। स्वसामानाधिकरण्यस्य स्वव्यापकत्वस्य वा निवेशे कालिकेन जातिविशिष्टस्य समवायेन धूमत्वविशिष्टस्य संयोगेन साध्यतायां साध्याभावस्य लक्षणाघटकत्वादतिव्याप्तिः स्यात्। एवं साजात्यानिवेशे कालिकेन धूमत्वत्वेन धूमत्वविशिष्टस्य समवायेन स्वरूपतो धूमत्वविशिष्टस्य संयोगेन साध्यतायां वन्ह्यादिहेतावतिव्याप्तिरिति ध्येयम्।

यदि च दण्डिमति तत्ताविनिर्मुक्तशुद्धदण्डव्यक्तेरवच्छेदकत्वावगाहिप्रत्ययान्तराऽसत्त्वात्तद्दण्डी नास्तीत्यादिप्रतीत्या तत्ताविशिष्टदण्डव्यक्तेरेवावच्छेदकत्वं युक्तम्, दण्डीनास्तीति प्रतीत्यन्यथानुपपत्त्या दण्डस्यावच्छेदकत्वसिद्धौ प्रमेयदण्डवान्नास्तीदावपि तन्मात्रावच्छेदकत्वेनैव सामञ्जस्ये विशिष्टस्य तत्रावच्छेदकत्वाकल्पनात्, तथाच कथमुक्ताव्याप्तिरित्युच्यते, तदा रूपत्वन्यूनवृत्तिजातिमद्वान् रूपादि-

लक्ष्मीः

वत्तदण्डत्वादिविशिष्टस्यातिप्रसक्ततया तत्ताविशिष्टदण्डस्यैवावच्छेदकत्वमित्याह । **यदिचेति । तत्ताविनिर्मुक्तेति** । तत्ताविशेषितेत्यर्थः । **प्रत्ययान्तरासत्वादिति** । शुद्धदण्डव्यक्तेरवच्छेदकत्वावगाहिनऽन्योप्रत्ययाभावादित्यर्थः । दण्डिमति दण्डीनास्तीति प्रत्ययाभावादितिभावः । **तत्तद्दण्डीनास्तीत्यादिप्रतीत्येति** ; दण्डिमतीति पूर्वेणान्वयः । सखण्डस्य दण्डादेः स्वरूपतोऽवच्छेदत्वासंभवेन दण्डत्वादिविशिष्टस्यैवावच्छेदकत्व वाच्यम, तथा च दण्डिमति दण्डीनास्तीति प्रतीत्यनुपपत्तिः स्यादिति भावः । **तत्ताविशिष्टदण्डव्यक्तेरेवेति** । एवकारेण केवलदण्डस्य व्यावृत्तिः । **अवच्छेदकत्वं युक्तमिति** । निरवच्छिन्नं तव्द्यक्तिमात्रनिष्ठमवच्छेदकत्वमसंभवि जातीतरस्य स्वरूपतो भानानभ्युपगमात्, दण्डत्वस्य तु अतिप्रसक्तत्वात्, अतस्तत्ताविशिष्टदण्डव्यक्तेरेवावच्छेदकत्वं वाच्यमित्याशयः । अयं भावः । तद्दण्डीनास्तीति दण्डीनास्तीति प्रत्यययोर्वैलक्षण्यमवश्यं स्वीकार्यम्, अन्यथा दण्डयधिकरणे तद्दण्डीनास्तीति प्रत्ययवद्दण्डीनास्तीति प्रत्ययापत्तिः। तच्च वैलक्षण्यं तत्ताविशिष्टदण्डनिष्ठावच्छेदकत्वावगाहित्वमेवाऽतस्तत्तद्दण्डयभावप्रतियोगितावच्छेदकत्वं तत्ताविशिष्टदण्डव्यक्तेरेवेति मन्तव्यम् । ननु प्रमेयदण्डवान्नास्तीत्यभावीय प्रतियोगितावच्छेदकत्वमपि प्रमेयत्वविशिष्टदण्डे एवास्तु अत आह । **दण्डो नास्तीति । अन्यथानुपपत्त्या ।** शुद्धदण्डनिष्ठावच्छेदकत्वावगाहित्वं विनोपपत्तिविरहेण । **दण्डस्य ।** शुद्धदण्डस्य । दण्डत्वावच्छिन्नस्येति यावत् । **तन्मात्रावच्छेदकत्वेनैव ।** दण्डत्वावच्छिन्नदण्डमात्रावच्छेदकतयैव । **सामंजस्ये । निर्वाहे ।** दण्डत्वरूपेण दण्डमात्रस्यावच्छेदकत्वागाहित्वेप्यतिप्रसंगाभावादितिभावः । **तथा च** । तत्ताविशिष्टतद्दण्डस्यावच्छेदकत्वे । **कथमुक्ता-**

त्यादावव्याप्तिः, सर्वासामेव नीलत्वपीतत्वादिरूपत्वन्यूनवृत्तिजातीनां साधनवन्निष्ठाभावप्रतियोगितायाः निरवच्छिन्नावच्छेदकत्वाद् रूपवति नीलो नास्ति पीतो नास्तीत्यादिप्रत्ययादित्याशयेन दण्ड्यादावित्यत्रादिपदमुपात्तम्। तथा च तत्रापि स्वन्यूनवृत्तिजात्याश्रयत्वसम्बन्धेन रूपत्वमेव साध्यतावच्छेदकमिति नाव्याप्तिरिति भावः।

---

लक्ष्मीः

**व्याप्तिरिति** । दण्डनिष्ठावच्छेदकताया उभयावच्छेद्यत्वादितिभावः। तथा च दण्डत्वस्य साध्यतावच्छेदकत्वानुसरणं दीधितिकृतामसंगतमिति तत्वम्। **रूपत्वन्यूनवृत्तीति** । सत्ताजातेरनवच्छेदकत्वादुक्तम्–रूपत्वन्यूनवृत्तीति। न च सत्तावद् घटाभावमादाय तस्याऽपि प्रतियोगितावच्छेदकत्वेन गुरुतरसाध्यानुसरणं व्यर्थम्, जातिमद्वान् रूपादित्यस्यैव सम्यक्त्वादिति वाच्यम्। तत्प्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वविरहात्। सत्व घटत्वोयोर्जातित्वेन साध्यतावच्छेदकत्वेऽपि 'येन रूपेण साध्यतावच्छेदकत्वमित्यादि पारिभाषिकमितरत्वमव्याहतमेव। न्यूनवृत्तित्वं च भेदघटितम्, तेन रूपत्वव्याप्यत्वेपि रूवत्वस्य न क्षतिः। तच्च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्। स्वं-रूपत्वम्। रूपत्वसामानाधिकरण्यस्य रूपत्वसमानाधिकरणो यो नीले पीतभेद, पीते नीलभेदस्तत्प्रतियोगितावच्छेदकत्वस्य नीलत्वादौ सत्वान्नीलत्वादीनां रूपत्वन्यूनवृत्तित्वमुपपन्नम्। कर्मत्वसंयोगत्वादेः साध्यतावच्छेदकत्ववारणाय सत्यन्तदलम्। सत्वगुणत्वयोः साध्यतावच्छेदकत्ववारणाय विशेष्यदलम्। संयोगतद्रूपान्यतरत्ववारणाय जातीति। अव्याप्तिमुपपादयति। **सर्वासामेवेति** । **निरवच्छिन्नावच्छेदकत्वादिति** । निरवच्छिन्नत्वोक्त्यासुतरां तादृशोभयानवच्छिन्नत्वं सूचितम्। **रूपवति** । शुक्लघटे। **नीलो नास्ति पीतो नास्तीत्यादिप्रत्ययादिति** । तथा च तादृशाभावप्रतियोगितावच्छेदकत्वमेव साध्यतावच्छेदकीभूतनीलत्वादिजातीनामित्यव्याप्तिरिति भावः। **तथाच** । आदिपदग्राह्ये च। **तत्रापि** । रूपत्वन्यूनजातिमद्वान् रूपादित्यत्रापि। **स्वन्यूनवृतीति** । स्वं-रूपत्वम्। तथा च नीलाद्यभावस्य लक्षणघटकत्वेपि तत्प्रतियोगितावच्छेदकनीलत्वादिभिन्नत्वस्य

साध्यतावच्छेदकमिति । अनुमितिविधेयतावच्छेदकमित्यर्थ ।ः तथाचोक्तव्याप्तिज्ञानाद्दण्ड्यंशे दण्डत्वप्रकारिकादण्डत्ववद्वानित्येवानुमितिर्नतु दण्डिमानिति दण्डप्रकारिकापि तस्य व्यापकतावच्छेदकत्वेनाग्रहात्, कारणबाधेन तदवच्छिन्नविधेयकानुमित्यसंभवादिति भावः ।

---

लक्ष्मीः

साध्यतावच्छेदके रूपत्वे सत्त्वान्नाव्याप्तिरिति भावः । न च तथापि समवायेन रूपत्वस्य साध्यतावच्छेदकत्वसंभवे परंपरासंबन्धानुसरणं व्यर्थमिति वाच्यम् । तथा सति साध्यहेत्वोः साध्यतावच्छेदकहेतुतावच्छेदकसंबन्धयोश्चैक्येन परामर्शकाले साध्यनिश्चयादनुमित्यनुत्पत्तेरिति ।

अनुमितिविधेयतावच्छेदकमित्यनेन दण्डत्वावच्छिन्नविधेयताकानुमितिरेव स्वीकरणीया तदेवाह । **तथा चेति** । दण्डत्वस्य साध्यतावच्छेदकत्वे चेत्यर्थः । **उक्तव्याप्तिज्ञानात्** । दण्डिसंयोगवन्निष्ठाभावीयप्रतियोगितावच्छेदकताशून्यदण्डत्वावच्छिन्न 'दण्डिसंयोगनिष्ठ' सामानाधिकरण्यज्ञानात् । **दण्ड्यंशे** । साध्ये । **दण्डत्वप्रकारिका** । स्वाश्रयाश्रयत्वसंबन्धेन दण्डत्वप्रकारिका। अस्यानुमितिरित्यनेनान्वयः। **दण्डत्ववद्वानित्येवेति** । एवकारेण दण्डिमानित्यस्य व्यावृत्तिः । दण्डिमानित्यनुमितौ बाधकमाह । दण्डस्य । **व्यापकतावच्छेदकत्वेनाऽग्रहादिति** । कारणबाधेनेति । विधेयतावच्छेदकतासंबन्धेनानुमितिं प्रति विशेष्यतासंबन्धेन व्यापकतावच्छेदकत्वज्ञानं हेतुः तद्बाधेनेत्यर्थः । **तदवच्छिन्नेति** । दण्डावच्छिन्नेत्यर्थः । न च दण्डांशे व्यापकतावच्छेदकत्वभ्रमादेव दण्डिमानित्यनुमिति संभव इति वाच्यम् । अनुमित्यसंभवादित्यस्य प्रमापरामर्शजन्यानुमित्यसंभवादित्यर्थात् । एवं चानुमितिविधेयतावच्छेदकमित्यस्य प्रमापरामर्शजन्यानुमितिविधेयतावच्छेदकमित्यर्थः ।

केचित्तु सल्लिङ्गकानुमितेर्भ्रमात्मकपरामर्शजन्यत्वं सिद्धान्तविरुद्धम्, कथमन्यथा ज्ञेयत्वादिलिङ्गकवाच्यत्वाद्यनुमितेः साध्याभाववदवृत्तित्वावगाहिभ्रमात्मकपरामर्शात्संभवेपि साध्याभावदवृत्तित्वादेर्व्याप्तित्वानंगीकारश्चिन्तामणिकृतामनुमितौ संगच्छते इति

वस्तुतो दण्डत्वस्य साध्यतावच्छेदकत्वे दण्डिमानित्यनुमितिर्न स्यात् दण्डानां-व्यापकतानवच्छेदकत्वादित्यस्वरसादेव दण्डत्वादिकमित्यत्रादिपदमुपात्तम्। तेन तत्तद्दण्डव्यक्तीनामेव स्ववृत्तिदण्डत्वजात्याश्रयाधिकरणत्वलक्षणपरंपरासंबन्धेन साध्यतावच्छेदकत्वलाभाद्दण्डिमानित्यनुमितेर्नानुपपत्तिरिति तत्त्वम्।

केचित्तु साध्यसाधनभेदेन व्याप्तिग्रहानुमित्योः कार्यकारणभावभेदात् यत्र दण्डत्वादिविशिष्टं साध्यतावच्छेदकं तत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतानवच्छेदको यो धर्मस्तद्विशिष्टावच्छिन्नसाध्यसामानाधिकरण्यरूपैव व्याप्तिस्तद्विशिष्टा-

---

लक्ष्मीः

दण्डावच्छिन्नविधेयकानुमितेरसंभवादिति यथाश्रुतमेवमित्याहुः। **इत्यस्वरसादिति।** विधेयतावच्छेदकतासंबन्धेनानुमितिं प्रति विशेष्यतासंबन्धेन हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वज्ञानस्य हेतुतया दण्डे व्यापकतावच्छेदकत्वज्ञानविरहादिति भावः। **दण्ड-त्वादिकमित्यत्रापीति।** अपिना दण्ड्यादाविति आदि पदसमुच्चयः। **स्ववृत्तीति।** दण्डवृत्तीत्यर्थः। **परंपरासंबन्धेनेति।** एवं च न संयोगेन दण्डस्य साध्यतावच्छेदकत्वम्, तथा सति पूर्वोक्तरीत्या तत्तद्दण्ड्यभावमादायाव्याप्तिः स्यात्। इत्थं च तद्दण्डवृत्तिदण्डत्वजात्याश्रयाधिकरणत्वसंबन्धेन तद्दण्डविशिष्टस्य दण्डिनः दण्डिसंयोगाधिकरणे भूतलादावभावविरहाद्दण्डस्य साध्यतावच्छेदकत्वेपि नाव्याप्तिरिति भावः, कारणभेदप्रयुक्तं कार्यवैलक्षण्यमिति दण्डिमान् दण्डत्ववद्वानित्यनुमित्योर्नानुपपत्तिरिति केषांचिन्मतमुपन्यस्यति।

**केचित्त्विति। यत्र।** दण्डिमानित्यत्र। **दण्डत्वादिविशिष्टं साध्यतावच्छेदकमिति।** दण्डस्यसाध्यतावच्छेदकत्वमित्यर्थः। तथा च दण्डिमानित्यनुमितौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतावच्छेदकत्वाभाववद्यत्साध्यतावच्छेदकतावच्छेदकं तद्विशिष्टावच्छिन्नसामानाधिकरण्यं प्रयोजकम्, ननु एतावतापि तद्दण्डीनास्तीत्यभावप्रतियोगितावच्छेदकतावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदके दण्डत्वे सत्वादव्याप्तितादवस्थ्यम्। न च प्रतियोगितावच्छेदकतायामुक्तोभयानवच्छिन्नत्वस्य निवेशेन नायमभावो लक्षणघटक इति वाच्यम्। तथा सति दण्डस्य साध्यतावच्छेदकत्वेपि अव्याप्तिवारणा-

वच्छिन्नविधेयकानुमितिप्रयोजिका, यत्र तु परंपरया दण्डत्वमेवानुमितौ साध्यतावच्छेदकं तत्र हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदको यो धर्मः परंपरया तदवच्छिन्नसाध्यसामानाधिकरण्यरूपैव व्याप्तिः प्रयोजिकेति सामानाधिकरण्यांशे दण्डादेः प्रवेशाप्रवेशकृतो दण्डिमान् दण्डत्ववद्वानित्यनुमित्योर्दण्डादिविधेयकत्वनियम इत्याहुः ।

---

लक्ष्मीः

देतादृशानुसरणस्य वैयर्थ्यापातादिति चेन्न । रूपत्वन्यूनवृत्तिजातिमद्वान् रूपादित्यत्रैवाव्याप्तिवारणाय तादृशानुसरणात् । **यत्रत्विति ।** दण्डत्ववद्वानित्यत्र तु इत्यर्थः । **परंपरयेति ।** स्वाश्रयाश्रयत्वरूपपरंपरासंबन्धेनेत्यर्थः । **विधेयतावच्छेदकम् ।** साध्यतावच्छेदकम् । तथा च दण्डत्ववद्वानित्यनुमितौ हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं दण्डत्वं स्वाश्रयाश्रयत्वसंबन्धेन तद्विशिष्टस्य दण्डिनः सामानाधिकरण्यं प्रयोजकम् । **सामानाधिरण्यांशे दण्डादेः प्रवेशाप्रवेशकृतइति ।** दण्डिमानित्यनुमितिप्रयोजकव्याप्तिघटकसामानाधिकरण्यघटकतया दण्डत्वविशिष्टस्य प्रवेशः । दण्डत्ववद्वानित्यनुमिप्रयोजकतादृशसामानाधिकरघटकतया दण्डस्य न प्रवेशस्तत्र परंपरासंबन्धेन दण्डत्वस्य दण्डिनि साध्येभावात् । ननु प्रथमकल्पे विशेषणतया द्वितीयकल्पे संसर्गघटकतया सामानाधिकरण्यांशे दण्डस्य प्रावेशासत्वेन प्रवेशाप्रवेशकथनं न युक्तमिति चेन्न । सामानाधिकरण्यांशे इत्यनेन सामानाधिकरण्यघटकीभूतनिरूपकतावच्छेदकतया प्रवेशाप्रवेशकृतविवक्षणादितिध्येयम् । इदमुपलक्षणम् । प्रतियोगितावच्छेदकतावच्छेदकत्व, प्रतियोगितावच्छेदकत्वयोः एवं साध्यतावच्छेदकतावच्छेदकत्व, साध्यतावच्छेदकत्वयोः प्रवेशाप्रवेशकृत इत्यपि बोध्यम् ।

आहुरित्यस्वरसः, तद्बीजं तु द्विविधानुमितिस्वीकारे द्विविधकार्यकारणभावे च गौरवात् अन्यथा दण्डिसंयोगसाध्यकस्थले तत्तद्दण्डिसंयोगाभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकतावच्छेदकतावच्छेदके प्रतियोगितावच्छेदकतावच्छेदकतानवच्छेदकत्वमपि निवेश्यम्, एवं विवक्षया च धाराप्रवाहः स्यात् । किं च हेतौ दण्डिसामान्याभाववद्वृत्तित्वरूपव्यभिचारज्ञानदशायामपि त्वदुक्तव्याप्तिज्ञानसंभवेनानुमित्यापत्तिः । न च दण्डिसामान्याभाव-

यत्तु दण्डत्वधर्मिकनिरुक्तानवच्छेदकत्वज्ञानस्यैव कार्यतावच्छेदकं दण्डित्वावच्छिन्नविधेयताकानुमितित्वमित्यनुमितेर्दण्डप्रकारकत्वं नानुपपन्नमिति । तत्तुच्छम् । परंपरया दण्डत्वावच्छिन्नविधेयकानुमितित्वस्यापि तादृशज्ञानकार्यतावच्छेदकतया सर्वदैव दण्डिमान् दण्डत्ववद्वानित्युभयाकारानुमित्यापत्तेः, उभयधर्मावच्छिन्नस्यैव सामग्रीसत्वादिति दिक् ।

---

लक्ष्मीः

दण्डत्वावच्छिन्नसामान्याभावयोःसमनियतोपस्थितिकत्वेन दण्डिसामान्याभाववद्वृत्तित्वग्रहकाले निरुक्तसंबन्धेन दण्डत्वावच्छिन्नाभाववद्वृत्तित्वस्यापि ग्रहसत्वे नोक्तव्याप्तिग्रहसंभव इति वाच्यम् । संयोगन दण्डप्रकारकज्ञान-निरूक्तसंबन्धेन दण्डत्वप्रकारकज्ञानरूपसामग्रीभेदेनोक्ताभावयोः समनियतोपस्थितिकत्वाभावात् ।

**यत्त्विति ! दण्डत्वधर्मिकेति ।** दण्डत्वविशेष्यकेत्यर्थः । **निरुक्तानवच्छेदकत्वज्ञानस्यैवेति** । दण्डत्वत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमिति ज्ञानस्यैवेत्यर्थः । एवकारेण दण्डत्वं तादृशप्रतियोगितावच्छेदकतानवच्छेदकमिति ज्ञानव्यावृत्तिः । **दण्डावच्छिन्नविधेयकानुमितित्वमिति ।** दण्डिमानित्यनुमितित्वमित्यर्थः । **इति** । अतः । दण्डिमानित्यनुमितिं प्रत्यपि दण्डत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमिति व्याप्तिज्ञानस्यैव कारणत्वात् । **अनुमितेर्दण्डप्रकारकत्वं नानुमपन्नमिति** । दण्डिमानित्यनुमितिर्नानुपपन्नेति भावः । **परंपरया** । स्वाश्रयाश्रयत्वसंबन्धेन । **दण्डत्वावच्छिन्नविधेयकानुमितित्वस्यापीति ।** दण्डत्ववद्वानित्यनुमितित्वस्यापीत्यर्थः । अपिना दण्डिमानित्यनुमितित्वस्य समुच्चयः । **तादृशज्ञानकार्यतावच्छेदकतयेति** । दण्डत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमिति ज्ञानकार्यतयेत्यर्थः । **सर्वदैव** । तादृशज्ञानसत्वे । **उभय धर्मावच्छिन्नस्यैव** । तादृशोभयावच्छिन्नानुमितित्वस्यैव । **सामग्रीसत्वादिति** । उभयानुमित्योः कारणैक्यादितिभावः ।

अपरे तु नोक्तव्याप्तिज्ञानं दण्डिमान् दण्डिसंयोगादित्यनुमितौ कारणं, किन्तु वक्ष्यमाणाऽन्योन्याभावघटितव्याप्तिज्ञानम्, अत एव यथा यथमित्यादिग्रन्थोपि संगच्छते इत्याहुः ।

नव्यास्तु दण्डिमानित्यनुमितौ न संयोगेन दण्ड्यादेः प्रकारत्वम्, किन्तु स्ववृत्ति-पुरुषत्वावच्छिन्नाधिकरणत्वसंबन्धेन । नन्वेवमनुभवापलापापत्तिरिति वाच्यम् । दीधितिकृन्मतेपि दण्डस्य साध्यतावच्छेदकधर्मविधया संयोगस्य, साध्यतावच्छेदकता-घटकसंसर्गविधया अवगाहितात्वस्यापलापापत्तेरिति प्राहुः ।

---

लक्ष्मीः

**अपरे तु इति । नोक्तव्याप्तिज्ञानमिति ।** प्रतियोगिव्यधिकरण-हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामा-नाधिकरण्यज्ञानमित्यर्थः । **वक्ष्यमाणं ।** विशेषव्याप्तौ वक्ष्यमाणं । **अन्योन्याभावघटितव्याप्तिज्ञानं ।** हेतुमन्निष्ठान्योन्याभावप्रतियो-गितानवच्छेदकसाध्यसामानाधिकरण्यज्ञानं । **हेतुरिति** पूर्वेणान्वयः । **अतएव ।** वक्ष्यमाणव्याप्तिज्ञानस्य कारणत्वादेव । **यथा यथमित्यादि-ग्रन्थोपीति ।** यथा यथं वा व्याप्तिः शब्दैक्यस्यानुपादेयत्वादिति ग्रन्थोपीत्यर्थः । यादृशानुमितौ यादृशव्याप्तिज्ञानं संभवति तादृशव्या-प्तिज्ञानं तत्र हेतुरिति भावः । आहुरित्यस्वरसबीजन्तु दण्डवान्नेति भेद-मादायाव्याप्तिस्तदवस्थैव प्रकारान्तरानुसरणेन लाघवमिति ध्येयम् ।

**न संयोगेन दण्ड्यादेः प्रकारत्वमिति ।** संयोगस्य न साध्यता-वच्छेदकसंसर्गत्वमिति भावः । **स्ववृत्तीति ।** स्वं–दण्डी, तद्वृत्तिय-त्पुरुषत्वं तदवच्छिन्नाधिकरणत्वसंबन्धेनेत्यर्थः । तथा च दण्डिसंयोगाधिकरणे संयोगेन तद्दण्डीनास्तीत्यभावसत्त्वेपि स्ववृत्तिपुरुषत्वावच्छिन्नाधिकरणत्वसंबन्धेन तद्दण्डीनास्तीत्य-भावविरहान्नाव्याप्तिरिति भावः; नन्वत्र साध्यतावच्छेदक-संबन्धेन प्रतियोगिनो घटादेरधिकरणाप्रसिद्धिरिति चेन्न । साध्यता-वच्छेदकसंबन्धावच्छिन्नाधिकरणत्वीयस्वरूपसंबन्धेन प्रतियोगिता-वच्छेदकावच्छिन्नाधिकरणत्वाभावस्य हेत्वधिकरणे, साध्यतावच्छेद-कसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व, साध्यनिष्ठत्वोभयाभावस्य वा प्रतियोगितायां निवेशेनैवोपपत्तेरिति ।

इत्थं च इदं द्रव्यं गुणकर्मान्यत्वे सति सत्वादित्यादौ सत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेपि द्रव्यत्वादेर्नाव्याप्तिः,

---

यद्रूपविशिष्टेत्यस्य फलमाह । इत्थं चेति । चोवधारणे । इत्यादौ । इत्यादिन्यायस्थलीयहेतौ । तथा च न्यायः पक्षनिर्देशं विना न सम्भवतीत्यत इदं पदेन तन्निर्देशः । एवमग्रेपि ।

यत्तु द्रव्ये धर्मिणि तादात्म्येन गुणकर्मणोः साध्यताभ्रमं निरसितुमिदमिति पक्षनिर्देश इति । तन्मन्दम् । एवमपि इदन्त्वविशिष्टद्रव्ये गुणकर्मणोः साध्यताभ्रमस्यानिरासादिति ।

---

लक्ष्मीः

**यद्रूपविशिष्टेत्यस्येति ।** हेतुतावच्छेदकावच्छिन्नेत्यस्येत्यर्थः । **अवधारणे इति ।** यद्रूपविशिष्टेति विवक्षणे एवेत्यर्थः । यद्रूपपदं हेतुतावच्छेदकपरम् । **तथाच ।** परार्थानुमाने च । **न्यायः पक्षनिर्देशं विना न संभतीति ।** प्रतिज्ञाघटितत्वान्न्यायस्य । प्रतिज्ञा च पक्षे साध्यबोधक वाक्यरूपा । अतः पक्षनिर्देशस्यावश्यकतापीति भावः । **तन्निर्देशः ।** पक्षनिर्देशः । अन्यत्वे सति सत्वस्य व्यभिचारितयाऽव्याप्तेरनुपपत्त्या गुणकर्मान्यत्वे सति सत्वमेव हेतुः, द्रव्यमेव साध्यमित्येतावत्पर्यालोचनयैव भ्रमनिवृत्तिः स्यात्, अतः साध्यवाचकपदत्वनिर्णयः । इदमिति पक्षनिर्देशे तु संमुखत एव पक्षनिर्णय इति भावः । **तन्मन्दमिति ।** उक्तरीत्यैव भ्रमनिराससंभवेन पक्षनिर्देशस्यानावश्यकत्वात्, अन्यथा इदमित्यस्योपादानेपि तन्निरासाऽसंभवादित्याह । **एवमपीति ।** अव्याप्तिं संपादयति । **सत्ताधिकरणगुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेपीति दीधितिः ।** विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्येन शुद्धसत्ताधिकरणगुणादिनिष्ठो यो द्रव्यत्वाभावस्तत्प्रतियोगितावच्छेदकसाध्यतावच्छेदकवत्वेपीत्यर्थः अव्याप्तिं निराकरोति । **साधनस्येति ।** विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाभावानंगीकारे विशिष्टसत्वे गुणादिनिरूपितवृत्तितायाः सत्वादाववृत्तेरित्यसंगतमित्यत आह । **गुणादावभावादिति ।**

**साधनस्य विशिष्टसत्तादेर्गुणादाववृत्तेः ।**

प्रतियोगित्वेपीति । प्रतियोगितावच्छेदकवच्छिन्नत्वेपीत्यर्थः । गुणादावव्रृत्तेरिति । गुणादावभावादित्यर्थः । तथा च हेतुतावच्छेदकावच्छिन्नाधिकरणत्वं न गुणस्येति भावः ।

लक्ष्मीः

तदेव विवृणोति । **तथा चेति** । गुणादौ विशिष्टसत्त्वाभावसत्वे चेत्यर्थः, गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतिबलादाधेयत्वस्यानतिरिक्तत्वेपि गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति प्रतीति विरहेण अधिकरणताया अतिरिक्तत्वादिति यावत् ।

एतेन यद्रूपविशिष्टेत्युक्तावपि हेतुतावच्छेदकविशिष्टो यो हेतुस्तदधिकरणगुणादिकमादाय तद्दोषतादवस्थ्यमिति शंका निराकृता। विशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः गुणेऽभावादिति ध्येयम् ।

केचित्तु अवृत्तेः—असंबन्धात्, तथा च गुणादौ विशिष्टसत्तासंबन्धाभावादित्यर्थः । न च समवायात्मकविशिष्टसत्तासंबन्धस्य गुणादौ सत्त्वात्कथं तदभाव इति वाच्यम् । हेत्वधिकरणत्वस्य हेतुतावच्छेदकसंबन्धेन हेतुसंबन्धित्वस्य विवक्षणीयतया यद्रूपविशिष्टोपादानेन हेतुतावच्छेदकविशिष्टप्रतियोगिकहेतुतावच्छेदकसंबन्धात्मकस्य हेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकावच्छिन्नहेतुसंबन्धित्वस्य लाभेन प्रकृतविशेषणावच्छिन्नसत्तासमवायस्यैव विशिष्टसत्तासंबन्धत्वेन गुणादौ तदभाव इत्याशयात् इत्याहुः ।

अत्र च यद्रूपविशिष्टपदं विशिष्टहेतुके एवाव्याप्तिवारणाय न तूपलक्षितहेतुके, तत्र शुद्धसमवायस्यैव हेतुतावच्छेदकसंबन्धतया गुणकर्मान्यत्वोपलक्षितसत्तावान् गुण इति प्रतीत्या गुणकर्मान्यत्वोपलक्षितसत्तासंबन्धस्य गुणादौ सत्वेनाऽसद्धेतुत्वादिति ध्येयम् ।

अथात्र गुणकर्मान्यत्वविशिष्टस्य 'सामानाधिकरण्यात्मकवैशिष्ट्यवतः' समवायेन हेतुत्वस्यैव सम्यक्त्वे सत्तापदं किमर्थमिति चेन्न। अनुयोगिवाचकपदसमभिव्याहृतसामानाधिकरण्यात्मकवैशिष्ट्यवाचकपदं यत्र तत्राधिकरणताया वैलक्षण्यस्वीकारात्, केवलवैशिष्ट्यावच्छिन्नाधिकरणताया अवैलक्षण्यात् ।

लक्ष्मीः

ननु प्रमेयत्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः जलह्रदादौ सत्वेन तत्र वन्ह्यभावसत्त्वाद्वह्निमान् धूमादित्यत्राव्याप्तिसंभवे स्थलान्तरानुधावनं किमर्थमिति चेन्न। आधेयताया आधेयभेदेन भिन्नत्वे प्रमेयत्वावच्छिन्नधूमनिष्ठाधेयतानिरूपिताधिकरणताया जलह्रदेऽसत्वात्, प्रमेयत्वावच्छिन्नमीनशैवालादिनिष्ठाधेयताया हेतुनिष्ठत्वाभावादिति।

अत्र द्रव्यं विशिष्टसत्वादित्यत्र हेतुतावच्छेदकीभूतसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः गुणे सत्वेन तत्र विशिष्टसत्ताभाव सत्वादव्याप्तिवारणाय न्यूनवारकपर्याप्तिर्निवेश्या, एवं वह्निज्ञानत्वसाध्यके विषयितया वह्निहेतौ महानसीयवह्नित्वावच्छिन्नाधिकरणतायाः महानसीयवह्निविषयकज्ञाने एव सत्वेन तत्र साध्याभावमादायाव्याप्तिः, एवं सत्वादित्यत्र विशिष्टसत्तात्वावच्छिन्नाधिकरणतायाः द्रव्ये एव सत्वेन तत्र साध्याभावविरहादतिव्याप्तिश्चेत्यत इतरवारकपर्याप्तिर्निवेश्या। हेतुतावच्छेदकेतरधर्मानवच्छिन्नहेतुतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणत्व -मिति। तदर्थश्च हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताक - निरूपताकाधिकरणत्वम्। नच वह्निज्ञानत्वसाध्यक, वह्निहेतौ वह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वस्य महानसीयवह्नित्वावच्छिन्ननिरुपकतायां सत्वेन तन्निरूपिताधिकरणत्वस्य महानसीयवह्निविषयकज्ञाने सत्वेन तत्र साध्याभावसत्वादव्याप्तितादवस्थ्यमिति वाच्यम्। हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्यानिरूपकता तन्निरूपिताधिकरणत्वस्य विवक्षितत्वात्। रूपवृत्तित्वं च निरूपकतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व सं०। स्वं=निरुपकता।

अव्यासज्यवृत्तिएकत्वादेः पर्याप्त्यस्वीकारे हेतुताविशिष्टनिरूपकताकाधिकरणत्वम्। निरूपकतायां हेतुता वै० स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्व-स्ववृत्तित्वोभय सं०। स्ववृत्तित्वं च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्व सं०। स्वं निरूपकता। उभयत्र वै० प्रसिद्धचतुष्टय - सं०।

लक्ष्मीः

ननु पर्वतो वन्हिमान् धूमादित्यत्राव्याप्तिः, धूमत्वेतरधर्मानवच्छिन्न, धूमत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेः। तथाहि पर्वतो धूमवानिति प्रात्यक्षिकप्रतीतेरधिकरणत्वावगाहित्वेऽपि न तया अधिकरणत्वसिद्धिः। ततः पर्वतविशेष्यक धूमप्रकारकज्ञानवानहमित्येवानुव्यवसायः तादृश-

दिव्या

१ द्रव्यं सत्त्वादित्यादौ विशिष्टसत्तात्वावच्छिन्नाधिकरणतामादायाति-व्याप्तिवारणाय प्रथमसंबन्धनिवेशः। द्रव्यं विशिष्टसत्त्वादित्यत्र सत्तात्वावच्छिन्ना-धिकरणतामादायाव्याप्तिवारणाय द्वितीयसंबन्धनिवेशः। केवल न्यूनवारक पर्याप्तिनिवेशश्च हेतुताविशिष्टनिरूपकतेत्यादि। वै० स्ववृत्तित्व सं०। स्ववृत्तित्वं चोक्तसंबन्धेन। केवलेतरवारकपर्याप्तिनिवेशश्च हेतुताविशिष्टनिरूपकतेत्यादि। वै० स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्व सं०। प्रसिद्धचतुष्टय-संबन्धश्च स्वसमानाधिकरण्य—स्वावच्छेदकसंबन्धावच्छिन्नत्व—स्वानवच्छेद-कानवच्छिन्नत्व-स्ववृत्तित्वरूपः। स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वरूपेण।

अत्र न्यूनवारकपर्याप्तौ स्वसामानाधिकरण्यानिवेशे प्रतियोगितासंबन्धेन तार्णवह्निहेतुकतदभावत्वसाध्यकस्थले वह्नित्वावच्छिन्ननिरूपकतामादायाव्याप्ति-रतस्तदुपात्तम्। एवं समवायेन वन्हित्वविशिष्टत्वे सति तद्वन्ह्यनुयोगिककालिकेन वन्हित्वविशिष्टं यत्तस्य प्रतियोगितासंबन्धेन हेतुत्वे तदभावत्वसाध्ये प्रत्येकं समवायेन वन्हित्वावच्छिन्ननिरूपकतामादाय, एवं यत्र वह्नित्वेन वह्निविशिष्टस्य प्रतियोगितासम्बन्धेन हेतुतायां तदभावत्वसाध्यकस्थले स्वरूपतो वह्नित्वावच्छिन्ननिरूपकतामादाय एवं प्रतियोगितासंबन्धेन स्वरूपतो वन्हित्वविशिष्टहेतुकतदभावत्वसाध्यकस्थले वन्हित्वत्वेन वन्हित्वा-वच्छिन्ननिरूपकतामादायाऽव्याप्तिवारणाय स्वावच्छेदकसंबन्धावच्छिन्नत्व—स्वान-वच्छेदकानवच्छिन्नत्व, स्ववृत्तित्वानां निवेशः।

एवमितरवारकपर्याप्तौ वन्हिहेतुके तद्ज्ञानत्वसाध्यके तार्णवन्हित्वावच्छिन्ननि-रूपकतानिरूपितां वन्हित्वत्वेन वन्हित्वावच्छिन्ननिरूपकतानिरूपितां, समवायेन वन्हित्वविशिष्टस्य विषयितया हेतुतायां तद्ज्ञानत्वसाध्यकस्थले समवायेन वन्हित्वविशिष्टत्वे सति तद्वन्ह्यनुयोगिकसमवायेन वन्हित्वावच्छिन्ननिरूपितां जातिमद्हेतुके तद्ज्ञानत्वसाध्यके जातिमद्वन्हित्वावच्छिन्ननिरूपकतानिरूपितां चाधिकरणतामादायाव्याप्तिवारणाय स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धा-वच्छिन्नत्व, स्वानवच्छेदकानवच्छिन्नत्व, स्ववृत्तित्वानां निवेश इति।

यद्यप्यवश्यं क्लृप्ताभिः पर्वतत्व चत्वरत्वादि तत्तधर्मविशिष्टतत्तद्धूमत्वावच्छिन्ना-

लक्ष्मीः

प्रतीतेरधिकरणत्वविषयकत्वेनानुव्यवसीयमानतायाः सन्दिग्धत्वात्। नापि पर्वतो धूमवानित्यनुमितिस्तत्साधिका, तत्राधिकरणत्वावगाहित्वस्यैव विरहात्। नापि पर्वतो धूमवानिति शाब्दप्रतीतिस्तत्साधिका, तादृश प्रतीतौ धूमः प्रकारः, संयोगः संसर्गः, पर्वतश्च विशेष्यः, अधिकरणत्वावगाहित्वाभावात्। न चाधिकरणत्वं संयोगरूपमेवेति वाच्यम्। एवमपि तस्य प्रकारविधया भाने मानाभावात्। न च धूमोपलक्षितः पर्वतः, धूमविशिष्टः पर्वतः, इति प्रतीत्योर्वैलक्षण्यनिर्वाहाय विशिष्टप्रतीतौ मतुबर्थाधिकरणत्वस्य प्रकारविधया भानमावश्यकम्, उपलक्षितावगाहिप्रतीतौ च मतुबर्थस्याविवक्षया संयोगेन धूमस्यैव प्रकारत्वमिति वाच्यम्। मतुबर्थाऽधिकरणत्वमवगाहमानापि सा अधिकरणत्वांशे निरूपितत्वसंबन्धेन धूमत्वविशिष्टस्यैव भासिका नतु धूमत्वावच्छिन्ननिरूपकताकत्वस्येति। नच गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतेरप्रामाण्याय मतुबर्थाधिकरणत्वे निरूपितत्वसबन्धेन प्रकृत्यर्थभाने धर्मिपारतन्त्र्येण प्रकृत्यर्थतावच्छेदकीभूतविशिष्टसत्तात्वस्य अवच्छिन्ननिरुपकताकत्व संबन्धेनाधिकरणत्वे भानमंगीकार्यम्, एवं च धूमत्वावच्छिन्नाधिकरणतायां पर्वतो धूमवानिति शब्द एव प्रमाणमिति चेत्तत्राह। यद्यपीति।

**अवश्यं क्लृप्ताभिः**। अवश्यं स्वीकार्याभिः। **पर्वतत्व चत्वरत्वा तत्तद्धर्मविशिष्टेति**। पर्वतत्वचत्वरत्वादितत्तधर्मसमानाधिकरणेत्यर्थः। अस्य धूमेऽन्वयः। **तत्तद्धूमत्वावच्छिन्नाधिकरणताव्यक्तिभिरेवेति**। पर्वतीयधूमत्वावच्छिन्नाधेयतानिरुपिताधिकरणताव्यक्तिभिरेवेत्यर्थः। एव कारेण धूमत्वावच्छिन्नाधेयतानिरूपिताधिकरणताव्युदासः **धूमवानिति प्रत्ययोपपत्ताविति**। धूमवानिति शाब्दप्रतीतौ प्रमात्वोपपत्तावित्यर्थः। प्रमात्वन्तु अधिकरणताघटितम्, तच्च धूमत्वनिष्ठावच्छेदकताकनिरूपताकाधिकरणत्ववन्निष्ठविशेष्यतानिरुपितधूमत्वनिष्ठावच्छेदकताकप्रकारताकत्वरूपम्, तथा चाधिकरणताया असत्वे प्रमात्वानुपपत्तिरतोऽधिकरणत्वमावश्यकम्।

धिकरणताव्यक्तिभिरेव धूमवानिति प्रत्ययोपपत्तौ धूमत्वावच्छिन्नाधिकरणतायां मानाभावाद् वन्हिमान् धूमादित्यादावव्याप्तिः ।

लक्ष्मीः

परन्तु पर्वतत्ववैशिष्ट्य धूमत्वोभयधर्मा-वच्छिन्नाधेयतानिरूपिताधिकरणतामादाय धूमवानिति प्रतीतिनिष्ठप्रमात्वोपपत्तौ धूमत्वरूपसामान्यधर्मावच्छिन्नाधिकरणतायां मानाभावादिति भावः । **धूमत्वावच्छिन्नाधिकरणतायां मानाभावादिति ।** तथाच धूमवानिति प्रतीतिः तत्तद्धूमत्वावच्छिन्नाधिकरणताकूटातिरिक्ताधिकरणताविषयकत्वाभाववती सामग्र्यप्रयोज्यत्वादिति फलितार्थः । एवं च पर्वतीयधूमवान्, चत्वरीयधूमवानित्यादिप्रतीतेः पर्वतीयत्व, धूमत्वोभयधर्मावच्छिन्नाधेयतानिरूपिताधिकरणत्वावगाहित्वस्यावश्यकतया तादृशाधिकरणताकूटावगाहितयैव धूमवानिति प्रत्ययोपपत्तौ तादृशाधिकरणताकूटातिरिक्ता सामान्यधर्मावच्छिन्नाधिकरणता न सिध्यतीति स्पष्टार्थः । पर्वतीयधूमवानिति प्रतीत्यन्यथानुपपत्त्या विशिष्टधर्मावच्छिन्नाधिकरणता तु स्वीकर्तव्या[1] ।

दिव्या

१. नच पर्वतीय धूमवानिति प्रतीतौ पर्वतीयत्वावच्छिन्नाधिकरणत्वमेव विषयो न तु धूमत्वावच्छिन्नाधिकरणत्वमपि । एवं च पर्वतीयत्वविशिष्टधूमत्वावच्छिन्नाधिकरणत्वावगाहित्वस्यानावश्यकत्वाद् धूमवानिति प्रतीत्यनुरोधेन धूमत्वावच्छिन्नाधिकरणत्वमवश्यमभ्युपेयमिति वाच्यम् । पर्वतीयत्वावच्छिन्नस्य दीर्घतृणादेः महद्द्रव्यत्वादेश्च पर्वतीयधूमशून्यस्थलेऽपि सत्त्वात्पर्वतीयधूमवानिति प्रतीतेः प्रमात्वापत्तिः । नचैतावतापि पर्वतीयधूमव्यक्तिनिष्ठानिरूपकताकाधिकरणत्वावगाहितयैव निर्वाहसंभवेऽलं तादृशविशिष्टधूमत्वावच्छिन्नाधिकरणतास्वीकारेणेति वाच्यम् । एवमपि पर्वतान्यत्वविशिष्टधूमवानिति प्रतीतौ धूमत्वस्यावच्छेदककोटौ निवेश आवश्यकः, अन्यथा पर्वतान्यत्वविशिष्टधूमवन्महानसमितिवद् तादृश धूमवज्जलमिति प्रतीत्यापत्तेः, पर्वतान्यत्वविशिष्टं यद्द्रव्यत्वं तादृशद्रव्यत्वावच्छिन्नाधिकरणतायास्तत्र सत्त्वात् । केवलधूमत्वावच्छिन्नाधिकरणतायाःप्रतीतिविषयत्वे पर्वतीयधूमवन्महानसमिति प्रतीत्यापत्तेः ।

एतेन पर्वतत्वविशिष्टधूमत्वावच्छिन्नाधिकरणत्वावगाहि प्रतीतौ पर्वतत्ववैशिष्ट्यं यदि धूमे भासते तदा पर्वतत्ववैशिष्ट्यस्यैवावच्छेदकत्वेनोपपत्तौ

## दिव्या

धूमत्वस्योपलक्षणताया एवोचितत्वेन धूमनिष्ठनिरूपकतानिरूपिताधिकरणताव्यक्तिभिरेव धूमवानिति प्रतीतेः प्रामाण्योपपत्तौ विशिष्टधूमत्वस्यावच्छेदकत्वकथनविरोध इति निरस्तम्। एक धर्मावच्छिन्ननिरूपकताया एकत्वे घटान्यत्वविशिष्टद्रव्यवानिति ज्ञानविषयीभूतस्य घटान्यत्वावच्छिन्ननिरूपकत्वस्य निखिलद्रव्यनिष्ठत्वेन घटान्यत्वावच्छिन्नधूमनिष्ठनिरूपकताकाधिकरणताया ह्रदे सत्वेन पर्वतीयधूमवान् ह्रद इति प्रतीतेः प्रमात्वापत्तेः। यदि च पर्वतत्ववैशिष्ट्यं समानाधिकरणवृत्तित्वसंबन्धेन धूमत्वे भासते तदा धूमत्वस्यावच्छेदकत्वमेव धूमत्वगतधर्मस्य पर्वतत्ववैशिष्ट्यस्य विशेषणत्वे धूमत्वस्योपलक्षणत्वाभावादिति ध्येयम्।

नच धूमवानिति प्रतीतौ धूमनिष्ठनिरूपकताकाधिकरणत्वस्य प्रकारत्वे एकधर्मावच्छिन्नाधेयताया ऐक्यमते द्रव्यत्वावच्छिन्ननिरूपकतामादाय ह्रदेपि तथा प्रत्ययापत्तिरिति वाच्यम्। धूमत्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वस्यैव प्रकारत्वोपगमात्। न तु धूमत्वेतरधर्मानवच्छिन्ननिरूपकताकाधिकरणत्वस्येत्याशयात्। एतेन पर्वतीयत्वविशिष्टधूमत्वावच्छिन्ननिरूपकतायां धूमत्वावच्छिन्नत्वस्य सत्वेन धूमत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेरित्ययुक्तमिति निरस्तम्। धूमत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकनिरूपकताकाधिकरणत्वस्याऽस्वीकारे तात्पर्यादिति ध्येयम्।

ननु तत्पर्वतीय धूमवान् पर्वतः एतत्पर्वतीय धूमवान्पर्वत इत्यादिप्रतीत्याऽवश्यक्लृप्तत्पर्वतीयधूमत्वावच्छिन्नाधिकरणताव्यक्तिभिरेव पर्वतीयधूमवानित्यादिप्रतीतेरप्युपपत्त्या पर्वतीयत्वादिविशिष्टधूमत्वावच्छिन्नाधिकरणतायामपि प्रमाणविरहः, एवं पूर्वक्षणादिवृत्तित्वविशिष्टपर्वतीयधूमवानित्यादि प्रतीतिसिद्धाधिकरणताभिरपि पर्वतीयधूमवानित प्रतीत्युपपत्तिश्चेति कथं पर्वतत्व, चत्वरत्वादिविशिष्टेत्यादि ग्रन्थसंगतिरिति चेन्न। तत्रैव तात्पर्यात्। अथवा पर्वतस्य नानात्वेन पर्वतीयधूमत्वावच्छिन्नाधिकरणताया नानात्वेन एतत्पर्वत, तत्पर्वतनिष्ठाधिकरणताया अपरपर्वते ऽसत्वात्तदंशे तद्भाने च प्रतीतेः भ्रमत्वमेव स्यादिति न पर्वतीयधूमवानिति प्रतीतेरन्यथोपपत्तिरिति।

नन्वत्र सिद्ध्यसिद्धिभ्यां व्याघातः, यदि सामान्यधर्मावच्छिन्नाधिकरणता नास्ति तदा मानाभावादित्यादिना तत्खण्डनमसंगतम्, सत्यां च सुतरामेव। नच धूमत्वे अधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्यान्यत्र प्रसिद्धस्याभावः साधनीय इति नाप्रसिध्याद्यवकाश इति वाच्यम्। विशिष्टस्य केवलानतिरिक्त-

## टिप्पणी

तया विशिष्टधूमत्वे तादृशावच्छेदकत्वासत्त्वे शुद्धधूमत्वे तादृशावच्छेदकत्वाभाव-विरहात्। नच धूमत्वगतैकत्वे अधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वा-वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावः साधनीय इति वाच्यम्। सामान्यतोऽधिकरणतानिरूपितनिरूपकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो-गितावच्छेदकत्वस्य द्वित्वे यावत्त्वे वा सत्त्वेन तदभावस्य धूमत्वगतैकत्वे सामान्य-धर्मावच्छिन्नाधिकरणतावादिनापि स्वीकारात्सिद्धसाधनापत्तेः। नच पर्वतादि-रूपतद्व्यक्तिनिष्ठाधिकरणताकनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-प्त्यनुयोगितावच्छेदकत्वाभाव एव साधनीय इति वाच्यम्। पर्वते नानाधर्मा-वच्छिन्नाधिकरणतासत्त्वेन पूर्वोक्तरीत्या सिद्धसाधनप्रसंगस्य दुर्वारत्वात्। नच तन्निष्ठयत्किंचिदधिकरणताकनिरूपकतावच्छेदकत्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-नुयोगितावच्छेदकत्वाभावसाधनेन सिद्धसाधनमिति वाच्यम्। यत्किंचित्त्वस्या-ननुगततया तन्निष्ठपर्वतीय तृणाद्यधिकरणतानिरूपिततद्व्यक्तिनिरूपकतावच्छेद-कतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावमादाय सिद्ध-साधनादिति चेन्न। धूमत्वगतैकत्वे अधिकरणताविशिष्टान्यत्वसाधनान्नकोऽपि दोषः। वै० स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-नुयोगितावच्छेदकत्व सं०।

तद्व्यक्तिनिष्ठाधिकरणतात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्न 'अधि-करणता' निरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगि-तावच्छेदकत्वाभावकूट—तद्व्यक्तिनिष्ठाधिकरणतात्वसमानाधिकरणोभयावृत्तिधर्म-निष्ठावच्छेदकतानिरूपितनिरूपितत्वसंबन्धावच्छिन्न तद्व्यक्तिनिष्ठावच्छेदकता-निरूपितनिरूपकत्वनिष्ठनिरूपितत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदक-तात्वनिष्ठावच्छेदकताकप्रतियोगितानिरूपकपर्याप्त्यनुयोगितावच्छेदकत्वं नास्तीति सामान्याभावनिवेशे वा तात्पर्यमिति ध्येयम्।

मानाभावादिति। मानं—मितिकरणं, भावप्रधाननिर्देशान्मितिकरणत्वं भाव-पदार्थः। अधिकरणतायामिति। सप्तम्यर्थो विशेष्यताकत्वं, तस्य मितौ अन्वयः। तथाच धूमत्वगतैकत्ववृत्तित्वनिष्ठप्रकारतानिरूपिताधिकरणतानिष्ठ-विशेष्यता तन्निरूपकानुमितिजनकत्वाभाव इति समुदितार्थः। जनकत्वाभावश्च प्रमीयजनकताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकः। तेन भ्रमात्मक-धूमत्वगतैकत्ववृत्तित्वव्याप्यतद्व्यक्तिमदधिकरणत्वमिति ज्ञाने जनकतासत्त्वेपि न क्षतिः। स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो-

तथापि हेतुतावच्छेदकीभूतधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणताऽनव-

### लक्ष्मीः

**हेतुतावच्छेदकीभूतधूमत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेरिति ।** धूमत्वमात्रावच्छिन्नाधिकरणत्वाप्रसिद्धेरित्यर्थः । नच धूमत्वमात्रावच्छिन्नाधेयतानिरूपिताधिकरणतैव स्वीक्रियतामलं पर्वतत्वचत्वरत्वादि तत्तद्धर्मविशिष्टधूमत्वावच्छिन्नाधिकरणतास्वीकारेणेति वाच्यम् । तत्तद्धूमत्वावच्छिन्नाधिकरणताया अस्वीकारे 'पर्वतत्वविशिष्टधूमवन्महानसं' 'महानसत्वविशिष्टधूमवान्पर्वत' इत्यादि प्रतीत्यादि प्रतीत्यापत्तिः, धूमत्वावच्छिन्नाधिकरणतायाः पर्वते महानसेपि च सत्वादित्यवश्यं तत्तद्धूमत्वावच्छिन्नाधिकरणत्वं तत्तत्प्रतीत्यभावानुरोधेन स्वीकर्तव्यम्, एवं च हेतुतावच्छेदकतापर्याप्त्यधिकरणीभूतधूमत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेरिति भावः ।

हेतुतावच्छेदकावच्छिन्नाधिकरणत्वं न हेतुतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नवत्वम्, किन्तु पारिभाषिकमेवेत्याशयेन समा-

### दिव्या

गितावच्छेदकत्वसंबन्धावच्छिन्न, स्वनिष्ठप्रकारतानिरूपितधूमत्वगतैकत्वनिष्ठविशेष्यताशालिप्रमाजनकत्वस्य स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभाव इति निष्कर्षः । स्वं-अधिकरणता । वस्तुतस्तु प्राचीनमतसिद्धसामान्यधर्मावच्छिन्नाधिकरणत्वस्वीकारे प्रयोजनाभावादित्येवार्थः ।

वस्तुतस्तु सामान्यधर्मावच्छिन्नाधिकरणताङ्गीकार पक्ष एव श्रेयान् । प्रकारताविशिष्टप्रकारताशालिज्ञानत्वम् । वै० स्वतादात्म्य-स्वावच्छेदकमात्रावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निष्ठविशेष्यतानिरूपितत्वोभय सं० । इदृश प्रमात्वं च सामान्यधर्मावच्छिन्नाधिकरणतासत्वे एव संभवति । न चाधिकरणतायां धूमत्वावच्छिन्नत्वकल्पने गौरवमिति वाच्यम् । अनेकाधिकरणतासु धूमवानिति प्रतीतिविषयतासंबन्धकल्पनापेक्षयाऽतिरिक्ताधिकरणताकल्पनाया एव लघुत्वात् । सामान्याभावस्वीकर्तृभिरतिरिक्तावयविस्वीकर्तृभिश्चेदृशमेव लाघवादिकं स्वीकर्तव्यम् ! अन्यथा तत्सिद्धिरपि न स्यात् । विशेषाभावकूटावगाहित्वस्य विलक्षणसंयोगवद्द्रव्यवत्त्वस्य सामान्याभावप्रतीतिघटप्रतीत्योः संभवात्, प्रतिबध्यप्रतिबन्धकभावस्य तद्धर्मातिरिक्तधर्मानवच्छिन्नप्रतियोगित्वसंबन्धावच्छिन्नप्रकारत्वादिघटितरूपादिभिरूपादानेन दोषासंभवादित्यन्यत्र विस्तरः ।

च्छेदकत्वस्य सामान्यतो अधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकस्तथाविधं हेतुतावच्छेदकाश्रयाधिकरणमेव हेत्वधिकरणेत्यनेन विवक्षितम्, वह्निमान् धूमादित्यादौ तादृशं हेत्वधिकरण धूमस्याधिकरणमात्रम्, द्रव्यं विशिष्टसत्त्वादित्यादौ तादृशहेत्वधिकरणद्रव्यमेव न तु गुणादिविशिष्टसत्तात्वे तन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्य च द्वयोः सत्वादिति ध्येयम्।

---

लक्ष्मीः

धत्ते। **तथापीति।** हेतुतावच्छेदकीभूतधूमत्वावच्छिन्नाधिकरणत्वाप्रसिद्धावपीत्यर्थः। **स्वाश्रयेति।** स्वं-हेतुतावच्छेदकम्। यत्पदं हेत्वधिकरणत्वेनाभिमतपरम्। **सामान्यत इति।** यत्किञ्चिदित्यर्थः। **द्वयोर्व्यतिरेकः।** उभयाभावः। **तथाविधं।** हेतुतावच्छेदकाश्रयाधिकरणं। तथा च हेतुतावच्छेदकाश्रयाधिकरणीभूतं यत्तन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्व, यत्किञ्चिन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वैतदुभयाभाववद्धेतुतावच्छेदकं तादृश हेतुतावच्छेदकाश्रयाधिकरणमेव हेत्वधिकरणमिति पर्यवसितम्। वह्निमान धूमादित्यत्र हेतुतावच्छेदके धूमत्वे धूमत्वाश्रयपर्वतीयधूमाधिकरणपर्वतनिष्ठाधिकरणतानिरूपितनिरूपक-तानवच्छेदकत्वस्य सत्वेऽपि यत्किंचिन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्याऽसत्वादुभयाभावस्याऽक्षततया तादृशधूमत्वाश्रयाधिकरणपर्वतादेर्धूमाधिकरणत्वेन धर्तुं शक्यतया तत्र वन्ह्यभावस्यासत्वान्नाव्याप्तिः। **तादृशहेत्वधिकरणं।** तादृशोभयाभावद्धूमत्वाश्रयाधिकरणं। **धूमस्याधिकरणमात्रं।** मात्रपदं साकल्यार्थकम्। द्रव्यं विशिष्टसत्वादित्यत्राऽव्याप्तिमपि निराकरोति। **तादृशहेत्वधिकरणमिति।** तादृशोभयाभाववद्धेतुतावच्छेदकीभूत विशिष्टसत्तात्वाश्रयाधिकरणम् इत्यर्थः। **द्रव्यमेवेति।** सामान्यतो द्रव्यनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्य विशिष्टसत्तात्वेसत्वेऽपि 'विशिष्टसत्तात्वाश्रयाधिकरण' द्रव्यनिष्ठाधिकरणतानिरूपित निरूपकतानवच्छेदकत्वस्यासत्वात्तादृशोभयाभावस्याक्षतत्वात्तादृशहेत्वधिकरणे द्रव्ये द्रव्यत्वाभावविरहान्नाव्याप्तिरिति भावः। एवकारव्यवच्छेद्यमाह। **गुणादीति।** तादृशहेत्वधिकरणमित्यनेनान्वयः।

**तन्निष्ठेति।** विशिष्टसत्तात्वाश्रयसत्ताधिकरण गुणनिष्ठेत्यर्थः। **सामान्यत इति।** द्रव्यनिष्ठेत्यर्थः। **द्वयोः सत्वादिति।** तथाच गुणस्य पारिभाषिकं विशिष्टसत्तारूपहेतोरधिकरणत्वं न संभवतीति भावः।

अत्र सामान्यतोऽधिकरणतानिरूपकतावच्छेदकत्वाभावमात्रोक्तौ वह्निमान् धूमादित्यत्राव्याप्तिविरहेपि द्रव्यं विशिष्टसत्वादित्यत्राव्याप्तिः, विशिष्टसत्तात्वे द्रव्यनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकत्वाभावविरहेण द्रव्ये हेत्वधिकरणत्वासंभवात्, प्रत्युत गुणादेः तादृशावच्छेदकत्वाभाववत्वात्। स्वाश्रयाधिकरणवन्निष्ठाधिकरणता निरूपितनिरूपकतानवच्छेदकत्वाभावमात्रोक्तौ पर्वतादेरपि यत्पदग्राह्यत्वं न स्यात्, धूमत्वे धूमत्वाश्रयाधिकरणपर्वतनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्यैव सत्वेन तादृशनिरूपकतानवच्छेदकत्वाभावविरहात्। स्वाश्रयाधिकरणीभूतेत्यस्यानुपादाने वह्निमान् धूमादित्यादावव्याप्तिः यत्पदेन ह्रदादेरप्युपादातुं शक्यत्वेन ह्रदादेरपि पारिभाषिकहेत्वधिकरणत्वापातात् तदुपादाने तु ह्रदस्य धूमत्वाश्रयाधिकरणत्वाभावान्न दोषः[2]।

---

दिव्या

२ स्वाश्रयत्वञ्चात्र हेतुतावच्छेदकताघटकसम्बन्धेन अन्यथा, कालिकेन धूमत्वाश्रयघटाधिकरणभूतलादेरपि हेत्वधिकरणतापत्त्या तद्दोषतादवस्थ्यम्। एवं कालिकसमवायान्यतरसम्बन्धेन कालिकत्वसमवायत्वान्यतरवत् सम्बन्धेन वा साक्षात्परंपरासाधारणावच्छेदकता स्वीकारे समवायकालीन कालिकेन वा धूमत्वविशिष्टं तृणादिकं संयोगेन तदधिकरणह्रदादिकमादाय तथैवाव्याप्तिः। एवं समवाय कालिकोभयसम्बन्धेन धूमत्वविशिष्टस्य हेतुतायां कालिकसम्बन्धेन धूमत्वाश्रयशैवालाधिकरणह्रदादिकमादायाऽव्याप्तिरत इतरवारकन्यूनवारकपर्याप्ती निवेश्ये।

तथा च हेतुतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिहेतुतावच्छेदकनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वस्य स्वाश्रयाधिकरणेत्यनेन विवक्षितत्वान्नोक्ताव्याप्तीः। अवच्छेदकतायां रूपवृत्तित्वञ्च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व सं।

स्वाश्रयाधिकरणत्वञ्च हेतुतावच्छेदकसम्बन्धेन, तेन वह्निमान् धूमादित्यत्र धूमत्वाश्रयधूमस्य कालिकेनाधिकरणह्रदादिनिष्ठाधिकरणतानवच्छेदकत्वघटितोभया-

दिव्या

भावस्य धूमत्वे सत्त्वेपि न क्षतिः । एवं पर्वताद्यन्यतमानुयोगिक कालिकसम्बन्धेन धूमस्य हेतुत्वे वन्हेः साध्यतायां कालिकेन स्वाश्रयाधिकरणघटादिकमादाय, एवं कालिकेन धूमादेः हेतुत्वे पर्वताद्यनुयोगिककालिकेन स्वाश्रयाधिकरणं यत्पर्वतादि तत्र वन्ह्यभावविरहेणाभावान्तरमादायाऽव्याप्यतिव्याप्तिवारणाय न्यूनेतरवारक पर्याप्ती निवेश्ये ।

तथा च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन हेतुतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणत्वं तदर्थः ।

यन्निष्ठाधिकरतानिरूपितनिरूपकतापि हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या । तेन ज्ञानाभावविषयकज्ञानत्वस्य साध्यत्वे विषयितया ज्ञानाभावहेतौ ज्ञानाभावत्वनिष्ठावच्छेदकतानिरूपिता या घट, ज्ञानाभावत्वोभयधर्मावच्छिन्नविषयितासम्बन्धावच्छिन्ननिरूपकता तन्निरूपिताधिकरणं यद् घटज्ञानाभावविषयकं ज्ञानं तन्निष्ठाधिकरणतानिरूपितप्रतियोगितासम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वस्य हेतुतावच्छेदके असत्त्वेनोभयाभावस्याक्षततया यत्पदेन तादृशज्ञानस्यापि धर्तुं शक्यतया तद्वृत्तिसाध्याभावप्रतियोगितावच्छेदकत्वमादायापि नाव्याप्तिः, उभयविषयकज्ञाने विषयितासम्बन्धावच्छिन्नज्ञानाभावत्वमात्रावच्छिन्ननिरूपकताकाधिकरणत्वस्यासत्त्वेन तादृशोभयविषयकज्ञाननिष्ठाधिकरणतानिरूपितविषयतासम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वस्याधिकरणतावच्छेदकत्वस्य च द्वयोः सत्त्वेनोभयाभावविरहाद्यत्पदेन तस्य धर्तुमशक्यत्वात् । शक्यते च यद् धर्तुं ज्ञानाभावविषयकज्ञानमेव तत्र च साध्याभावस्यासत्त्वादिति ।

यत्तु द्रव्यं विशिष्टसत्त्वात् इत्यत्र स्वाश्रयाधिकरणीभूतविशिष्टसत्ताविषयकज्ञानरूपगुणादिनिष्ठविषयितासम्बन्धावच्छिन्नाधिकरणतानवच्छेदकत्वस्य हेतुतावच्छेदकधर्मे सत्त्वेन तद्घटितोभयाभावस्य सत्त्वेन यत्पदेन गुणस्यापि धारणसम्भवे तन्निष्ठसाध्याभावमादायाव्याप्तिवारणाय तन्निवेश इति । तदसत् । हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपताकाधिकरणतावती यत्पदेन धर्तुमशक्यतया तादृशनिरूपकताक अधिकरणतायाः गुणादौ असत्त्वेन गुणादेर्यत्पदेन धर्तुमशक्यत्वात् ।

एवमवच्छेदकतावच्छेदकसाधारणावच्छेदकता स्वीकारे द्रव्यं विशिष्टसत्त्वादित्यत्र स्वाश्रयाधिकरणं यज्ज्ञानादि तन्निष्ठाधिकरतानिरूपितसमवायकाली-

दिव्या

नविषयितासम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वविरहेणोभयाभावसत्त्वाद्यत्पदेन ज्ञानस्यापि धर्तुं शक्यत्वेन तत्र साध्याभावमादाय, एवं कालिककालीनसमवायेन विशिष्टसत्त्वहेतौ च स्वाश्रयाधिकरणं यद्गुणादि तन्निष्ठाधिकरणतानिरूपितकेवलकालीकसम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वविरहेणोभयाभावसत्त्वाद्यपदेन गुणादेरपि धर्तुं शक्यतया तत्र साध्याभावमादायाऽव्याप्तिवारणाय इतरवारकन्यूनवारकपर्याप्ती निवेश्ये ।

तथा च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन हेतुतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकतानवच्छेदकत्वेति तदर्थः। स्वं-निरूपकता ।

यन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वघटकीभूतावच्छेदकतापि हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्ना ग्राह्या । अन्यथाऽऽत्मभेदसाध्यक आत्मान्यत्वविशिष्टसत्त्वादेर्हेतुकस्थलेऽव्याप्तिः, आत्मान्यत्वविशिष्टसत्त्वात्वे स्वाश्रयाधिकरणं यदात्मादिकं तन्निष्ठाधिकरणतानिरूपिता या विषयितया सत्तात्वविशिष्ट-( ज्ञान ) निष्ठा समवायसम्बन्धावच्छिन्ननिरूपकता तादृशनिरूपकतानवच्छेदकत्वविरहेणोभयाभावसत्त्वात् । इतरवारकपर्याप्त्यनिवेशे समवायेन धूमत्वविशिष्टाभावनिष्ठतद्व्यक्तित्वसाध्यत्वे समवायेन धूमत्वविशिष्टस्य प्रतियोगितासम्बन्धेन हेतुतायामव्याप्तिः, धूमत्वाश्रयाधिकरणं यो धूमत्वप्रतियोगिकसमवायसम्बन्धेन धूमत्वविशिष्टाभावस्तन्निष्ठाधिकरणतानिरूपिता या धूमत्वप्रतियोगिकसमवायेन धूमत्वविशिष्टनिष्ठा प्रतियोगित्वसम्बन्धावच्छिन्ननिरूपकता तादृशनिरूपकतानवच्छेदकत्व, सामान्यतोऽधिकरणतावच्छेदकत्वोभयाभावसत्त्वात् । न्यूनवारकपर्याप्त्यनिवेशे धूमत्वप्रतियोगिकसमवायेन धूमत्वविशिष्टाभावनिष्ठतद्व्यक्तित्वस्य साध्यतायां धूमत्वप्रतियोगिकसमवायेन धूमत्वविशिष्टस्य प्रतियोगितासम्बन्धेन हेतुतायामव्याप्तिः, धूमत्वाश्रयाधिकरणं यो धूमाभावस्तन्निष्ठाधिकरणतानिरूपिता या समवायसम्बन्धेन धूमत्वविशिष्टनिष्ठाप्रतियोगितासम्बन्धावच्छिन्ना निरूपकता तादृशनिरूपकतानवच्छेदकत्व, सामान्यतोऽधिकरणतावच्छेदकत्वोभयाभावसत्त्वात् ।

तथा च हेतुतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति—अवच्छेदकत्वाभाव इति तदर्थः। रूपवृत्तित्वं चावच्छेदकतयां स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ।

एवं सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्येत्यत्र निरू-

## दिव्या

पकता हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथा विषयितासम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्य धूमत्वे सत्त्वात् पारिभाषिकहेत्वधिकरणाप्रसिध्या वह्निमान् धूमादित्यादावव्याप्त्यापत्तेः। एवमितरवारकपर्याप्त्यनिवेशे उक्तस्थले एव धूमत्वे स्वाश्रयाधिकरणपर्वतनिष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतः संयोगकालीनविषयितासम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्य च सत्त्वात्तद्दोषतादवस्थ्यम्। एवं विषयिताकालीनसंयोगेन हेतुतायां स्वाश्रयाधिकरणपर्वतनिष्ठाधिकरणतानवच्छेदकत्वसामान्यतः केवलविषयितासम्बन्धावच्छिन्नाधिकरणावच्छेदकत्वोभयसत्त्वेन तद्दोषतादवस्थ्यमतो न्यूनवारकपर्याप्तिनिवेशः।

सामान्यतोऽधिकरणतावच्छेदकत्वघटकावच्छेदकत्वमपि हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नं ग्राह्यम्। अन्यथा धूमायत्ववान् धूमादित्यत्राव्याप्तिः, स्वाश्रयाधिकरणं यो धूमावयवस्तन्निष्ठाधिकरणतानवच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितविषयितासम्बन्धावच्छिन्नावच्छेदकत्वस्य—'च' सत्त्वेन तद्दोषतादवस्थ्यम्। इतरवारकपर्याप्त्यनिवेशे घटभेदाधिकरणे स्वरूपकालिकोभयसम्बन्धेन वृत्तिताविशिष्टप्रमेयत्वस्य कालिकसम्बन्धेन तद्विशिष्टस्य स्वरूपेण हेतुतायां जन्यत्वस्य साध्यतायामव्याप्तिः, स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वसामान्यतोऽधिकरणतानिरूपितनिरूपकतानिरूपितस्वरूपकालिकोभयसम्बन्धावच्छिन्नावच्छेदकत्वोभयसत्त्वात्परिभाषिकावच्छेदकाप्रसिद्धेः। न्यूनवारकपर्याप्त्यनिवेशे समवायकालीनपर्वतत्वविशिष्टधूमत्वविशिष्टस्य संयोगेन हेतुतायां वन्ह्यादिसाध्यत्वेऽव्याप्तिः, स्वाश्रयाधिकरणं यत्पर्वतादिकं तन्निष्ठाधिकरणतानवच्छेदकत्व, सामान्यतः समवायसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वोभयसत्त्वात्पारिभाषिकावच्छेदकाप्रसिद्धेः।

एवं च हेतुतावच्छेदकीभूतधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वविशिष्टसामान्यतोऽधिकरणतावच्छेदकत्वाभाव एव निवेश्यतां किमुभयाभावनिवेशेनेति पूर्वपक्षोऽपि समाहितः। तद्धूमप्रतियोगिकसंयोगेन धूमस्य हेतुतायां वह्नेः साध्यत्वे तद्धूमप्रतियोगिकसंयोगसम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वविशिष्टनिरूपकतावच्छेदकत्वस्याप्रसिध्याव्याप्तिः स्यात्। उभयाभावनिवेशे च तद्धूमप्रतियोगिकसंयोगसम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वस्यापरधूमत्वे प्रसिध्या सामान्यतस्तद्धूमप्रतियोगिकसंयोगसम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्य तद्धूमत्वे प्रसिध्या उभयाभावस्य च हेतुतावच्छेदके सत्त्वाल्लक्षणसमन्वयः।

दिव्या

केचित्तु महाकालभिन्नं कालिकेन कालत्वादित्यादौ महाकालनिष्ठाधिकरणतानिरूपितकालिकसम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वविशिष्टकालिकेनाधिकरणतावच्छेदकत्वस्याप्रसिध्या यत्पदेन महाकालस्य धर्तुमशक्यत्वात्, जन्यमेव धर्तव्यम्, तत्र साध्यस्य सत्त्वेन साध्याभावस्य लक्षणाघटकत्वादभावान्तरमादायातिव्याप्तिरतस्तन्निवेशः। तथा च महाकालनिष्ठाधिकरणतानवच्छेदकत्वस्यावृत्तिगगनादिवृत्तिगगनत्वादौ सौलभ्येन यत्पदेन महाकालस्यापि धर्तव्यतया नातिव्याप्तिः। किं च महाकालानुयोगिककालिकसम्बन्धेन हेतुतास्थले तत्र विशिष्टस्याप्रसिध्याऽव्याप्तिरतस्तदुपेक्षितमिति प्राहुः।

a. अथ गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतौ अवश्यक्लृप्तघटादिवृत्तित्वविशिष्टगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणताव्यक्तिभिरेवोपपत्तौ गुणकर्मान्यत्वविशिष्टसत्तात्वेतरधर्मानवच्छिन्नाधिकरणताया अपि अनावश्यकत्वात्, विशिष्टसत्तात्वावच्छिन्नाधिकरणतायां मानाभावात्। विशिष्टसत्तात्वे गुणनिष्ठाधिकरणतानवच्छेदकत्वसत्त्वेऽपि सामान्यतोऽधिकरणतावच्छेदकत्वविरहेणोभयाभाववत्वाद्यत्पदेन गुणस्य धर्तुं शक्यतया तन्निष्ठाभावप्रतियोगित्वस्य साध्ये सत्त्वादव्याप्तिरिति चेन्न। यत्पदार्थे स्वाश्रयाधिकरणेत्यनेन हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वस्य विवक्षितत्वान्नाव्याप्तिः, गुणादेर्यत्पदाग्राह्यत्वात्। नच द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ तादृशहेत्वधिकरणं द्रव्यमेव न तु गुणादि, विशिष्टसत्तात्वे तन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्य च द्वयोः सत्त्वादिति ग्रन्थासङ्गतिः, हेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वस्य गुणादावसत्त्वेन गुणादेर्यत्पदेन धर्तुमशक्यत्वादिति वाच्यम्। हेतुहेतुमद्भावेन ग्रन्थसङ्गतेः। तथा हि न गुणादीत्यत्राधिकरणतानवच्छेदकत्वं हेतुः, द्रव्यमेवेत्यत्र हेतुरधिकरणतावच्छेदकत्वम्। एवं च गुणादि न हेत्वधिकरणं गुणनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदताकपर्याप्त्यनुयोगितानवच्छेदकवैशिष्ट्यसत्त्वात्वग तद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वाभावात्। द्रव्यनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतादृशद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद् द्रव्यमेवेति सङ्गतिरिति भावः।

वस्तुतस्तु घटवृत्तित्वविशिष्टगुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतिबलाद्

दिव्या

घटवृत्तित्वविशिष्टगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणताव्यक्तिभिर्गुणक - र्मान्यत्वविशिष्टसत्तावानिति प्रतीत्युपपत्तावपि गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति भ्रमात्मकशाब्दप्रतीतौ गुणवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधिकरणत्वावगाहित्वे प्रमात्वापत्तिः, आधेयताया ऐक्यादिति गुणवृत्तित्वावगाहित्वं न तद्विषयः, किन्तु गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणतैव तद्विषयः इति तादृशाधिकरणताया अवश्यं स्वीकार्यतया यथा श्रुतस्यैव सम्यक्त्वादिति ध्येयम् ।

न च वैशिष्ट्यावच्छिन्नाधिकरणतामादाय विशिष्टसत्तावानिति प्रतीत्युपपत्तौ वैशिष्ट्यसत्तात्वोभयधर्मावच्छिन्नाधिकरणतायां मानाभावेनाव्याप्तितादवस्थ्यम् । स्वाश्रयाधिकरणगुणनिष्ठाधिकरणानवच्छेदकत्वसत्वेपि सामान्यतोऽधिकरणतावच्छेदकत्वविरहेणोभयाभावसत्वादिति वाच्यम् । हेतुतावच्छेदकताव्यापकत्वस्योभयाभावे विवक्षणात् । हेतुघटकीभूतं यद्वैशिष्ट्यं तत्रोभयसत्वेन तादृशोभयाभावे व्यापकत्वविरहादिति ध्येयम् ।

. न च तथापि द्रव्यं विशिष्टसत्वादित्यादौ हेतुतावच्छेदकीभूतसत्तात्वे स्वाश्रयाधिकरणगुणनिष्ठाधिकरणतानवच्छेदकत्वसत्वेऽपि सामान्यतोऽधिकरणतावच्छेदकत्वविरहेणोभयाभावसत्वात् गुणोऽपि तथाविधहेत्वधिकरण इत्यव्याप्तिरिति वाच्यम् । हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे स्वाश्रयाश्रयवन्निष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वो - भयाभावस्य विवक्षितत्वात् । अव्यासज्यवृत्तिएकत्वादेः पर्याप्त्यस्वीकारे तु हेतुतावच्छेदकत्वसमनियतसङ्ख्यायां स्वाश्रयाधिकरणभिन्नयन्निष्ठाधिकरणतावच्छेदकतासमनियतसङ्ख्यतादात्म्याभावसामान्यतोऽधिकरणतावच्छेदकतासङ्ख्या - तादात्म्योभयव्यतिरेको निवेश्य इति ।

ननु हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणयन्निष्ठाधिकरणतानवच्छेदकत्व-सामान्यतोऽधिकरणतावच्छेदकत्वान्यतरमस्ति इत्यस्यैव सम्यक्त्वेऽलमुभयाभावपर्यन्तनिवेशेन । न च द्रव्यं विशिष्टसत्वादित्यादौ अन्यतरान्तर्गतगुणनिष्ठाधिकरणतानवच्छेदकत्वस्य विशिष्टसत्तात्वे सत्त्वेन यत्पदेन गुणस्यापि धर्तुं शक्यतयाऽव्याप्तिरिति वाच्यम् । यन्निष्ठाधिकरणतावच्छेदकत्व, सामान्यतोऽधिकरणतानवच्छेदकत्वान्यतरस्यैव विवक्षणात्, यत्पदेनेदानीं गुणो धर्तुं न शक्यते, गुणनिष्ठाधिकरणतावच्छेदकत्व, सामान्यतोऽधिकरणतानवच्छेदकत्वा-

दिव्या

न्यतरस्यैव हेतुतावच्छेदकेऽसत्त्वात् । न च सत्तात्वे अन्यतरान्तर्गतसामान्यतोऽधिकरणतानवच्छेदकत्वसत्त्वेन यत्पदेन गुणस्यापि धर्तुं शक्यत्वेनाव्याप्तिः, वह्निविषयकज्ञानत्ववान् वह्नेरित्यादौ वह्नित्वे महानसीयवह्निविषयकज्ञाननिष्ठाधिकरणतावच्छेदकत्वस्य महानसीयवह्नित्वे सत्त्वेन वह्नित्वेऽपि सत्त्वात् यत्पदेन महानसीयवह्निविषयकज्ञानस्यापि धर्तुं शक्यतया तत्र साध्याभावमादायाव्याप्तिश्चेति वाच्यम् । स्वाश्रयाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वैतदन्यतरवद्धेतुतावच्छेदकगतरूपं तथाविधहेत्वधिकरणस्य प्रवेशात् । स्वाश्रयाश्रयाधिकरणत्वमपहाय स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वं विवक्षणीयम्, तेन द्रव्यं विशिष्टसत्त्वादित्यादौ सत्तात्वाश्रयाधिकरणगुणस्यापि यत्पदेन धर्तुं शक्यतया तत्र साध्याभावमादाय नाव्याप्तितादवस्थ्यम् । तज्ज्ञानत्ववान् वह्नेरित्यादौ विषयितासम्बन्धेन हेतौ हेतुतावच्छेदकविषयितासम्बन्धावच्छिन्ननिरूपकत्वस्य केवलान्वयितया सामान्यतोऽधिकरणतानवच्छेदकत्वाप्रसिध्या तादृशानवच्छेकत्वघटितान्यतराप्रसिद्धिरिति नाशङ्कनीयम् । सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य ज्ञानान्यत्वविशिष्टघटत्वगतरूपे प्रसिद्धत्वादिति चेन्न । भेदद्वयावच्छिन्नप्रतियोगिताकभेदरूपान्यतरत्वापेक्षयाऽसमवेतसङ्ख्यारूपोभयत्वस्यैव लघुत्वादिति ।

अथात्र द्रव्यं घटत्वपटत्वोभयास्मादित्यादौ विरुद्धव्यभिचारिणि अतिव्याप्तिः, तादृशोभयत्वाश्रयाधिकरणं घटः पटश्च तन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्य तादृशोभयत्वे सत्त्वेऽपि सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वविरहेणोभयभावस्याक्षतत्वाद्यत्पदेन घटस्यापि धर्तुं शक्यतया तथाविधघटवृत्त्यभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । न च साध्यसामानाधिकरण्यविरहान्नातिव्याप्तिरिति वाच्यम् । व्यापकत्वलक्षणातिव्याप्तिदुर्वारत्वात् । न च द्रव्यं विशिष्टसत्त्वादित्यादौ प्रागुक्तक्रमेणाव्याप्तिवारणाय स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावत्त्वस्य यत्पदार्थे निवेशेनैवातिव्याप्तेरपि वारणात् । हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद् घटत्वपटत्वगतसमुदायत्वं तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदताकनिरूपकताकाधिकरणत्वा-

दिव्या

प्रसिद्धेः । वह्निमान् धूमादित्यादौ धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकता तत्व, धूमत्व धर्मद्वयावच्छिन्ना भवति इति न कोपि दोष इति वाच्यम् । तथापि महानसीयवह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन द्रव्यहेतुत्वे वाच्यत्वसाध्यकव्यभिचारिणि अतिव्याप्तिः, वह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकमहानसीयत्ववह्नित्वधर्मद्वयावच्छिन्ननिरूपकताकाधिकरणतायाः प्रसिद्धत्वात् । तथाविधमहानसीयवह्न्यभाववृत्त्यभावप्रतियोगिताकावच्छेदकत्वाभावस्य साध्यतावच्छेदके सत्त्वादिति चेन्न । हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्द्रव्यक्तिनिष्ठविशेष्यतानिरूपितहेतुतावच्छेदसम्बन्धावच्छिन्नप्रमीयप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्यापि यद्रूपे विशेषणीयत्वात् । एवं च महानसीयवह्न्यभावस्तादृशप्रतियोगितासम्बन्धेन वह्निमानिति प्रतीतेभ्र मत्वनियमेन तादृशाभावनिष्ठविशेष्यतानिरूपितप्रमीयप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य तादृशवह्नित्वगतैकत्वेऽसत्त्वाद्यत्पदेन महानसीयवन्ह्यभावस्य धर्तुमशक्यतया नातिव्याप्तिः ।

b. हेतुतावच्छेदकं च नित्यज्ञानावृत्तिविषयिताशून्यज्ञानवृत्तिहेतुतावच्छेदकावच्छिन्नप्रकारतावच्छेदकत्वेन विवक्षणीयमित्यतो द्रव्यं घटपटान्योन्यसमादित्यादौ नातिव्याप्तिरिति कश्चित् ।

c. ननु एतादृशरीत्या तात्पर्योपवर्णने यन्निष्ठविशेष्यतानिरूपितप्रमीयप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं भवति तदेव हेत्वधिकरणेत्यनेन विवक्षणीयम्, अलमुभयाभावनिवेशेनेति चेन्न । गुणो गुणकर्मान्यत्वोपलक्षितसत्तावानिति प्रतीतेः प्रमात्वेन गुणनिष्ठविशेष्यतानिरूपिता या उपलक्षितसत्तावगाहिप्रमात्मकज्ञानीयविशिष्टसत्तात्वावच्छिन्नप्रकारता तन्निरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य गुणकर्मान्यत्ववैशिष्ट्यसत्तात्वगतद्वित्वे सत्त्वेन यत्पदेन गुणस्यापि धर्तुं शक्यतया द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादावव्याप्तेः । उपलक्षितावगाहिप्रत्ययेऽपि विशिष्टसत्तात्वे प्रकारत्वावगाहनात् । उपलक्षणत्वं च प्रकारतावच्छेदकत्वे सति निरूपकतानवच्छेदकत्वम् ।

न च तत्र किं मानमिति वाच्यम् । उपलक्षितावगाहिगुणो विशिष्टसत्तावा-

लक्ष्मीः

यत्र हेतुतावच्छेदकेतरधर्मानवच्छिन्नहेतुतावच्छेदकावच्छिन्नाधिकरणत्वमप्रसिद्धं तत्र हेतुतावच्छेदकाश्रयासामानाधिकरण्य-

---

दिव्या

निति प्रतीतेः, गुणः सत्तावानिति प्रतीतेश्चाविशेषापत्तिवारणाय तथा स्वीकारात् । न च यन्निष्ठविशेष्यतानिरूपितविशिष्टवैशिष्ट्यावगाहिप्रमीयप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वविवक्षणान्नैष दोष इति वाच्यम् । द्रव्यं विशिष्टसत्त्वादित्यत्रैवाव्याप्तिः, उपलक्षितावगाहिप्रत्ययेऽपि सत्तात्वविशिष्टवैशिष्ट्यावगाहित्वसत्त्वात् । अत्र यद्यपि हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावद्यन्निष्ठविशेष्यतानिरूपितप्रमीयप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वविवक्षणान्न दोषः । रूपवृत्तित्वं निरूपकतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसं० । तथापि 'वह्निमान् धूमादि' त्यादौ पुनरप्रसिध्याऽव्याप्त्यापत्तेः । न च तथापि तादृशरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्यन्निष्ठविशेष्यतेत्यादिनिवेशेनैव गुणादेर्वारणसम्भवात् 'वह्निमान् धूमादित्यत्र च तत्त्व, धूमत्वधर्मद्वयावच्छिन्ननिरूपकताप्रसिद्धिरिति न कोऽपि दोष इति वाच्यम् । तथा सति वह्न्यभावत्वसाध्यकप्रतियोगितया वह्निहेतुकस्थले महानसीयवह्न्यभावस्याऽपि हेत्वधिकरणतापत्त्याऽव्याप्तिरिति तत्परित्यक्तम् ।

ननु हेतुतावच्छेदकधर्मे यन्निष्ठभेदप्रतियोगितावच्छेदकतानवच्छेदकत्वं तदेव हेत्वधिकरणमित्येव कथं नोक्तमिति चेन्न । द्रव्यं घटपटोभयत्वादित्यत्राव्याप्तिः, घटपटादिनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकत्वस्यैव तादृशोभयत्वत्वे सत्त्वाद्धेत्वधिकरणतानुपपत्तेः।

d. हेतुतावच्छेदकावृत्तियत्तदेव हेत्वकरणेत्यनेन विवक्षितम् । वृत्तित्वं च स्ववृत्त्यभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेनेत्यपि कश्चित् ।

यथा श्रुतस्यानुगमस्तु प्रकृतहेतुतावच्छेदकविशिष्टत्वम् । वै० स्वनिष्ठभेदप्रतियोगितावच्छेदकत्व, स्वाश्रयाधिकरणत्वोभयसं० । अवच्छेदकता च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व, स्वसमानकालीनाधिकरणतानिरूपितनिरुपकतावच्छेदकत्वोभयसं० । स्वनिष्ठावच्छेदकता च स्वनिष्ठाधिकरणतानिरूपितनिरूपकतासं० ।

सामानाधिकरण्यव्यक्तीनां भेदेऽपि निरूपकतावच्छेदकस्याधिकरणतावच्छेदकस्य चैक्याद् व्याप्तेरैक्यम् ।

---

साध्यसाधनयोर्भेदात्, व्याप्तिभेदेन यत्र साधनतावच्छेदकं नाधिकरणतावच्छेदकं तत्र तदाश्रयसामानाधिकरण्यमेव निवेश्यमित्यपि वदन्ति ।

ननु सामानाधिकरण्यस्य व्याप्तित्वे तस्य प्रतिधूमं भिन्नत्वेन धूमसामान्ये वह्निसामान्यस्यैका व्याप्तिरिति व्यवहारोऽनुपपन्न इति अत आह—'सामानाधिकरण्येति । तथा च वह्नित्वधूमत्वाद्यनुगमादेव तत्र व्याप्तेरैक्यव्यवहारो न तु वस्तुगत्या व्याप्तेरैक्यमिति भावः ।

---

लक्ष्मीः

मेवा भावे निवेश्यम् । यत्र तादृशाधिकरणत्वं प्रसिद्धम्, तत्र हेतुतावच्छेदकावच्छिन्नाधिकरणवृत्तित्वमेवाभावे निवेश्यम्, अन्यथा केवलसत्ताधिकरणमादाय द्रव्यं विशिष्टसत्वादित्यत्राव्याप्तिप्रसंगादित्याह । साध्यसाधनयोर्भेदात् इति । व्याप्तेः साध्यसाधनघटितत्वादिति भावः । यत्र । वह्निमान् धूमादित्यत्र । साधनतावच्छेदकम् । धूमत्वम् । नाधिकरणतावच्छेदकम् । नाधिकरणतानिरूपितनिरूपकतावच्छेदकम् । तत्तद्धूमत्वादेरेव तत्त्वेन निर्वाहे इति शेषः । तत्र । तत्स्थलीयव्याप्तौ । तदाश्रयसामानाधिकरण्यमेवेति ।

हेतुतावच्छेदकाश्रयाधिकरणवृत्तित्वमेवेत्यर्थः । एवकारेण हेतुतावच्छेदकावच्छिन्नाधिकरणवृत्तित्वव्यवच्छेदः । निवेश्यमिति । साध्यसाधनभेदेन व्याप्तिर्भेदादिति भावः । तथा च पारिभाषिकहेत्वधिकरणनिवेशो अकिञ्चित्कर इति भावः ।

तस्य । सामानाधिकरण्यस्य । प्रतिधूमं भिन्नत्वेनेति । आश्रयभेदेन भेदादिति भावः । दीधितौ । सामानाधिकरण्यव्यक्तीनामिति । तत्तद्धूमनिष्ठतत्तद्वह्निसामानाधिकरण्यव्यक्तीनामित्यर्थः । निरूपकतावच्छेदकस्येति । सामानाधिकरण्यनिरूपकतावच्छेदकस्य, साध्यतावच्छेदकस्येति यावत् । अधिकरणतावच्छेदकस्य । सामानाधिकरण्यनिरूपिताधिकरणतावच्छेदकस्येति यावत् ।

वस्तुतस्तु धूमत्वादिविशिष्टव्यापकवन्हिसामानाधिकरण्यस्य रासभादिसाधारणत्वाद् धूमत्वादिमति ताद्दशसामानाधिकरण्यं तद्वति धूमत्वादिकं वा व्याप्तिः ।

---

नुनु एवं सामान्यलक्षणायाः अस्वीकारे महानसीयवन्हिसामानाधिकरण्यस्य स्मृतस्य पक्षवृत्तिधूमादावसत्वात् पर्वतीयवन्हिसामानाधिकरण्यस्य च प्रागननुभवात् कुतः परामर्शः इत्याशंकायामेकैवहि सा व्याप्तिरिति परामर्शीयसिद्धान्त ग्रन्थोऽसंगतं

---

लक्ष्मीः

ननु तयोरैक्येपि व्याप्तेरैक्यमनुपपन्नमेवेत्यतो भावमाह । **तथाचेति** । साध्यतावच्छेदकहेतुतावच्छेदकयोरैक्ये[1]चैत्यर्थः । **नन्विति** । एवञ्च पारमार्थिकं व्याप्तेरैक्यं नास्तीति भावः ।

ननु तत्तद्धूमनिष्ठतत्तद्वह्निसामानाधिकरण्यस्य व्याप्तित्वे सामानाधिकरण्यस्य च भिन्नतया व्याप्तेरैक्यासम्भवेनैकैव हि सा व्याप्तिरिति परामर्शसिद्धान्तग्रन्थोऽसङ्गत इत्याशङ्कते । **नन्विति** । **एवम्** । वह्निसामानाधिकरण्यरूपव्याप्तेर्भिन्नत्वे । **सामान्यलक्षणाऽस्वीकारे इति** । महानसे महानसीयवह्निप्रत्यक्षानन्तरं सामानाधिकरण्यत्वेन निखिलसामानाधिकरण्यस्यालौकिकप्रत्यक्षे पर्वतीयवह्निसामानाधिकरण्यस्यापि स्मरणमुपपद्यतेऽतः सामान्यलक्षणाऽस्वीकारे इत्युक्तम् । **प्राक्** । परामर्शपूर्वम् । **अननुभवादिति** । सामान्यलक्षणाया अप्रत्यासत्तित्वे महानसीयवह्निसामानाधिकरण्यग्रहकाले लौकिकसन्निकर्षाभावात् प्रत्यक्षासम्भवेनोपनायकज्ञानविरहेण पर्वतीयधूमे उपनयासम्भव इति भावः । सामान्यलक्षणायाः प्रत्यासत्तित्वानभ्युपगमे एकैव हीत्यादिग्रन्थस्य वह्नित्वधूमत्वादिनिरूपकतावच्छेदकादेरैक्योपपादकत्वेऽपि व्याप्तिज्ञानोपपादकत्वाभावा-

---

दिव्या

१ तथाचैकव हि सा व्याप्तिरिति ग्रन्थस्थैकपदं एकधर्मावच्छिन्ननिरूपकताक-एकधर्मावच्छिन्नाधिकरणताकपरम् । एवञ्चैकनिरूपकतावच्छेदक-एकाधिकरणतावच्छेदकावच्छिन्ना व्याप्तिरित्यर्थः ।

इत्यत आह, वस्तुतस्तु—। रासभादीति। तथा च धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इति ज्ञानादप्यनुमितिः स्यादिति भावः।

लक्ष्मीः

दिति भावः[1]।

धूमव्यापकवह्निसामानाधिकरण्यमात्रं न व्याप्तिः किन्त्वन्यैव तथा च न सिद्धान्तग्रन्थोऽसङ्गत इत्याह—दीधितौ। वस्तुतस्तु इत्यादिना। धूमव्यापकवह्निसामानाधिकरण्यस्य व्याप्तित्वेऽतिप्रसङ्गमाह। तथा चेति। धूमलिङ्गकानुमित्यौपयिकव्याप्तेर्धूमव्यापकवह्निसामानाधिकरण्यरूपत्वे चेत्यर्थः। अनुमितिः स्यादिति। धूमव्यापकवह्निसामानाधिकरण्यस्य धूमेऽपि सत्त्वात्पर्वतो वह्निमानित्यनुमित्यापत्तिः स्यादित्यर्थः। तथा चोक्तसामानाधिकरण्यावच्छिन्नप्रकारकज्ञानत्वरूपकारणतावच्छेदकावच्छिन्नस्य रासभपरामर्शस्थलेऽपि सत्त्वेन तत्रानुमित्यनुत्पत्त्यान्वयव्यभिचार इति भावः[2]।

ननु सामानाधिकरण्यमात्रस्य व्याप्तित्वस्वीकारेऽपि सामानाधिकरण्यावच्छिन्नप्रकारकज्ञानत्वेन न परामर्शस्य कारणत्वम्, तादृशज्ञानाविरोधितया स्वरूपासिद्धेः हेत्वाभासत्वानुपपत्तेः। किन्तु तादृशसामानाधिकरण्यात्मकव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यताघटितधर्मेणैव, तथा च न रासभपरामर्शादनुमित्यापत्तिः, न चैवं रासभे वह्निव्याप्यव्यवहारापत्तिरिति वाच्यम्। तद्रूपविशिष्टस्येत्यादिनिर्देशेन समभिव्याहृत विशेष्यपदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नव्यापकसामानाधिकरण्यस्यैव तद्धर्मावच्छिन्ने

दिव्या

१ न च महानसीय धूमनिष्ठवह्निसामानाधिकरण्यस्य स्वसमानाधिकरणधूमत्ववत्तासम्बन्धेन पर्वतीयधूमे सत्त्वादेकैव हीत्यादिग्रन्थस्य धूमत्वादिघटितसम्बन्धेन दृष्टान्तीयहेतुनिष्ठसाध्यसामानाधिकरण्यस्य पक्षीयहेतुवृत्तित्वप्रतिपादनेन पक्षीयहेतौ व्याप्तिज्ञानोपपादकत्वान्नासङ्गतिरिति वाच्यम्। साक्षात्सम्बन्धेन व्याप्तिप्रकारकज्ञानस्यानुमितिहेतुत्वादन्यथातिप्रसंगादिति ध्येयम्।

२ नच तद्धर्मावच्छिन्नव्यापकसाध्यसामानाधिकरण्यविशिष्टतद्धर्मावच्छिन्नवत्ताज्ञानत्वेनानुमितिहेतुत्वोक्तौ नोक्तापत्तिरिति वाच्यम्।

न च धूमादिव्यापकवह्निसमानाधिकरणधूमादिमत्तानिश्चयत्वेनैव परामर्शस्य धूमादिलिङ्गकानुमितौ हेतुत्वादुक्तव्याप्तेः रासभादिसाधारण्येऽपि न क्षतिरिति वाच्यम्। पक्षधर्मांशे विषयतया अनुमितिजनकतावच्छेदकस्यैव व्याप्तिपदार्थतया धूमत्वादेस्तत्र निवेशे तद्घटितस्यैव व्याप्तित्वादिति भावः।

---

लक्ष्मीः

व्याप्यत्वव्यवहारप्रयोजकत्वादित्याशयेन शंकते। **न चेति**। वाच्यमिति परेणान्वयः। **धूमादिव्यापकवह्निसमानाधिकरणधूमादिमत्तानिश्चयत्वेनैवेति**। एवकारेण धूमादिव्यापकवन्हिसामानाधिकरण्यावच्छिन्नप्रकारतानिरूपितविशेष्यताशालिनिश्चयत्वव्यवच्छेदः। **परामर्शस्य**। धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इति परामर्शस्य। **धूमादिलिंगकानुमितौ हेतुत्वादिति**। तथा च धूमलिङ्गकानुमितौ धूमव्यापकवन्हिसमानाधिकरणधूमवत्तानिश्चयस्य कारणत्वादित्यर्थः। **उक्तव्याप्तेः**। धूमव्यापकवह्निसामानाधिकरण्यस्य। **न क्षतिरिति**। नानुमित्यापत्तिरित्यर्थः। धूमलिङ्गकानुमितौ धूमव्यापकवह्निसमानाधिकरणधूमवत्तानिश्चयस्यैव हेतुत्वादिति भावः। **विषयतयेति**। अभेदे तृतीया। पक्षधर्मविशेषणत्वाभिन्नविषयतासम्बन्धेनेत्यर्थः। पक्षधर्मे धूमे यथा धूमव्यापकवह्निसामानाधिकरण्यं विशेषणम्, तथा धूमत्वमपि। तथा च तादृशविषयतासम्बन्धेनानुमितिजनकतावच्छेदकं धूमव्यापकवह्निसामानाधिकरण्यं धूमत्वं चेति उभयघटितस्यैव व्याप्तिपदार्थत्वात् इति भावः। **तद्घटितस्यैवेति**। उभयघटितस्यैवेत्यर्थः। एवकारेण तादृशसामानाधिकरण्यमात्रस्य व्यवच्छेदः। तथा च सामानाधिकरण्यमात्रस्य व्याप्तित्ववादिभिर्हेतुव्यापकसाध्यसामानाधिकरण्यमात्रप्रकारकज्ञानस्य कारणत्वं वाच्यम्, एवं चानुमित्यापत्तिरिति। इदम् उपलक्षणम्। सामानाधिकरण्यमात्रस्य व्याप्तित्वे वह्निव्याप्यो धूम इति व्यवहारो न स्यात्। व्यवहारं प्रति व्यवहर्तव्यतावच्छेदकप्रकारकज्ञानस्य हेतुतया तादृशसामानाधिकरण्यस्य रासभादिवृत्तित्वेनाऽतिप्रसक्तया व्यवहर्तव्यतानवच्छेदकत्वादिति ध्येयम्। **दीधितौ**।

धूमत्वादिमतीति। तथा च तस्येति मूलस्थं तत्पदं लक्ष्ये लक्षणे चोभयत्रैवान्वितमिति भावः।

---

लक्ष्मीः

**धूमत्वादिमतीति।** धूमत्ववन्निष्ठेत्यर्थः। **तादृशसामानाधिकरण्यमिति।** धूमव्यापकवह्निसामानाधिकरण्यमित्यर्थः। तथा च धूमत्ववन्निष्ठं धूमव्यापकवह्निसामानाधिकरण्यमिति फलितम्।[1]

**तथा चेति।** धूमनिष्ठत्वोपादानेचेत्यर्थः। **तत्पदमिति।** तस्य सामानाधिकरण्यं तस्य व्याप्तिरिति योजना। **लक्ष्ये**—इतरभेदानुमित्युद्देश्ये पक्षे इति यावत्। **लक्षणे**—इतरभेदानुपापके हेतौ। तथा च धूमनिष्ठं धूमव्यापकवह्निसामानाधिकरण्यं स्वेतरभिन्नं धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यादिति फलितम्। अत्र पक्षे धूमनिष्ठत्वानुपादाने रासभनिष्टधूमव्यापकवह्निसामानाधिकरण्यस्यापि पक्षान्तर्गततया तत्र धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यरूपहेतोरभावेन भागासिद्धिः स्यात्। हेतौ तदनुपादाने रासभनिष्टधूमसामानाधिकरण्येऽपि तादात्म्येन हेतोः सत्त्वात्तत्र च साध्याभावेन व्यभिचारः स्यादिति।

---

दिव्या

1 ननु धूमत्ववन्निष्ठधूमव्यापकवन्हिसामानाधिकरण्यस्य व्याप्तित्वे धूमनिष्ठं यद्धूमव्यापकवन्हिसामानाधिकरण्यं तद्विशिष्टवान् पर्वत इति ज्ञानस्य निष्ठत्वसम्बन्धावच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपिततादृशसामानाधिकरण्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन कारणत्वोक्तौ 'न च धूमव्यापकवन्हिसमानाधिकरणधूमवानिति'' कल्पापेक्षया गौरवम्, तत्र हि धूमव्यापकवह्निसामानाधिकरण्यावच्छिन्नप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन कारणतया आधेयत्वसम्बन्धावच्छिन्नधूमनिष्ठविषयताया अनिवेशेन लाघवमिति चेन्न, अवच्छिन्नत्वसम्बन्धावच्छिन्नधूमत्वप्रकारतानिरूपितसामानाधिकरण्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन पारतन्त्रीय विषयतामादाय धूमनिष्ठसामानाधिकरण्यघटितपरामर्शस्य कारणत्वे लाघवात्। न च स्वावच्छिन्नत्वमवच्छेदकतानिरूपकत्वम्,

ननु साधननिष्ठसामानाधिकरण्यस्य व्याप्तित्वे एकैवहीत्यादिग्रन्थानुपपत्तिस्तद-वस्थैव तथा, विशिष्टसत्त्वव्यापकीभूतद्रव्यत्वसामानाधिकरण्यवतः सत्त्वस्य गुणादौ परामर्शाद् गुणेऽपि द्रव्यत्वानुमितिः प्रमा स्यादत आह—तद्वतीति। तादृशसा-सामानाधिकरण्यवतीत्यर्थः।

---

## लक्ष्मीः

एतावता साधननिष्ठहेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिरिति उक्तम्, परन्तु एकैव हीत्यादिग्रन्थासङ्गतिदुर्वारैवेत्याशङ्क्य समाधत्ते। नन्वित्यादिना साधननिष्ठहेतुव्यापकसाध्यसामानाधिकरण्यस्य व्याप्तित्वे दोपान्तरमाह। **तथेति। गुणादौ परामर्शादिति।** विशिष्ट-सत्तानिष्ठविशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरणसत्तावान् गुण इति परामर्शादित्यर्थः[1]। **गुणेऽपीति।** अपिना घटादेः समुच्चयः।

---

## दिव्या

अवच्छेदकता च हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्ना वाच्या। अन्यथा रासभनिष्ठसामानाधिकरण्यस्य कालिकेन धूमत्वावच्छिन्नतया तद्वारणासम्भवात्। तथा च गौरवं दुर्वारमेवेति वाच्यम्। रासभो वन्हिव्याप्य इति व्यवहार-वारणाय धूमनिष्ठसामानाधिकरण्यकथने जगदीशस्य तात्पर्यात्। एवं चाधेयतासम्बन्धेन धूमविशिष्टसामानाधिकरण्यावच्छिन्नप्रकारतानिरूपितपर्वत-त्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव धूमनिष्ठसमानाधिकरण्यघटितपरामर्शस्य कारणत्वमतो न गौरवम्।

एतेन धूमत्वादिमतीत्यादिना धूमत्वस्य धूमत्वसामानाधिकरण्यापन्नस्य सामानाधिकरण्यसम्बन्धेन धूमत्वविशिष्टस्य वा सामानाधिकरण्यस्य धूमत्वत्वप्रवेशप्रयुक्तगौरवेण विषयतया न जनकतावच्छेदकत्वमित्यपि निरस्तम्। ननु अत्र धूमव्यापकवन्हिसमानाधिकरणरासभवान् पर्वत इति ज्ञानादनुमितेर-लीकतया नानुमित्यापत्तिरिति चेन्न। रासभो वन्हिव्याप्य इति व्यवहारापत्तावेव जगदीशतात्पर्यात्। न च व्यापकतावच्छेदकधर्मावच्छिन्नस्य तादृशव्यवहार-प्रयोजकत्वान्नैष दोष इति वाच्यम्। एतदस्वरसेनैव विशिष्टसत्त्वव्यापकेत्यादि-दोषान्तरमिति दिक्।

१ ननु विशिष्टसत्त्वव्यापकद्रव्यत्वसामानाधिकरण्यवैशिष्ट्यावच्छिन्नाधिकरण-त्वस्य द्रव्ये एव सत्त्वात्तादृशपरामर्शस्य भ्रमत्वसम्भवेन नानुमितेः प्रमात्वसम्भवः।

## लक्ष्मीः

द्रव्यत्वानुमितिः प्रमा स्यादिति। घटो द्रव्यमितिवद् गुणो द्रव्यमित्यनुमितिः प्रमा स्यात्[1], परामर्शस्य गुणविशेष्यकत्वादिति भावः।

---

## दिव्या

न च किञ्चिद्धर्मं धर्मितावच्छेदकीकृत्य यत्र वैशिष्ट्यं भासते तत्रैवाधिकरणत्वस्य वैलक्षण्यम्, अत एव गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्र व्यभिचारवारणाय सत्तापदोपादानं कृतम्। एवं च तादृशसामानाधिकरण्यावच्छिन्नाधिकरणताया गुणेऽपि सत्त्वान्नप्रमात्वहानिरिति वाच्यम्। तत्र किञ्चिद्धर्मस्य धार्मितानवच्छेदकत्वेऽपि वैलक्षण्यात्। द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्र सत्त्वोपादानं तु समवायेन हेतुतालाभायेति चेन्न। पक्षे साध्यसामानाधिकरण्यविशिष्टहेतुमत्तानिश्चयस्य पक्षे साध्यनिश्चयं विना असम्भवेन साध्यसामानाधिकरण्योपलक्षितहेतुमत्तानिश्चयस्यैवानुमितिजनकत्वस्य वाच्यतया, तादृशसामानाधिकरण्योपलक्षितस्य गुणे परामर्शसम्भवादिति ध्येयम्। इदमुपलक्षणम्। धूमत्वादिमति तादृशसामानाधिकरण्यस्य व्याप्तित्वे तादृशसामानाधिकरण्यविशिष्टधूमत्वादेर्व्याप्तित्वमादाय विनिगमनाविरहोऽपि बोध्यः।

१ ननु एतावता यत्र यत्र प्रमापरामर्शजन्यत्वं तत्र तत्र प्रमात्वमित्यापाद्यापादकयोर्व्याप्तिर्लभ्यते तत्र च व्यभिचारः, 'वह्निव्याप्यधूमवान् पर्वत इति परामर्शादपि वह्नित्वेन घटावगाह्यनुमितेरुत्पादादिति चेन्न। यत्र प्रमापरामर्शजन्यत्वं तत्र प्रमासजातीयत्वमित्येवापाद्यापादकयोर्व्याप्तिः। प्रमासजातीयत्वं च प्रमीयविधेयताविशिष्टविधेयताकत्वम्। वै० स्वावच्छेदकधर्मावच्छिन्नत्व, स्वनिरूपितोद्देश्यतावच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितत्व, स्वावच्छेदकसम्बन्धावच्छिन्नत्वैतत्त्रितयसम्बन्धेन। एवं च वह्नित्वेन घटावगाह्यनुमितावपि तत्सत्त्वान्न व्यभिचारः। गुणे प्रमात्वानुमितिर्न कदापि प्रमा तत्र प्रमासजातीयत्वविरहात्। [परे तु वह्निव्याप्यधूमवान् पर्वत इति ज्ञाने वह्नित्वेनैव घटो यदि अवगाह्येत तदैव वह्नित्वेनैव घटावगाह्यनुमितिः। अन्यथा सामग्र्यभावात्तादृशानुमित्यनुपपत्तेः। तथा च तादृशपरामर्शस्यापि अप्रमात्वेन न व्यभिचारः इति वदन्ति।] केचित्तु आपाद्यापादकव्याप्तौ प्रमात्वं तद्धर्मावच्छिन्नवति तद्धर्मावच्छिन्नप्रकारकत्वम्, तथा च वह्नित्वेन घटावगाह्यनुमितौ एतादृशप्रमात्वसत्त्वान्न व्यभिचार इति वदन्ति।

तथा च तादृशसामानाधिकरण्यविशिष्टधूमत्वं व्याप्तिः, तत्प्रकारिकैव पक्षधर्मताधीरनुमितिहेतुः, तत्र च नीलघटत्वप्रकारकबुद्धौ घत्वस्येव स्वरूपत एव धूमत्वस्य भानं न तु धूमत्वत्वेन यतो गौरवमिति भावः ।

---

लक्ष्मीः

**तादृशसमानाधिकरण्यवतीति ।** धूमव्यापकवह्निसामानाधिकरण्यवतीत्यर्थः । **तथा च ।** वन्हिसामानाधिकरण्यवद्वृत्तीत्यस्य च । **तादृशसामानाधिकरण्यविशिष्टधूमत्वमिति ।** धूमव्यापकवन्हिसामानाधिकरण्यविशिष्टधूमत्वं व्याप्तिरिति अर्थ इति भावः । वै० सामानाधिकरण्यसम्बन्धेन । सामानाधिकरण्यविशिष्टधूमत्वस्य व्याप्तित्वे विशेषणतावच्छेदकप्रकारकज्ञानविधया धूमत्वविशेष्यकसाध्यसामानाधिकरण्यप्रकारकज्ञानस्य हेतुत्वमित्याशयेनाह—**तत्प्रकारिकैव पक्षधर्मताधीरनुमितिहेतुरिति ।** व्यक्तिं विना जातिभानस्याऽसम्भवाद् धूमत्वविशेष्यकसामानाधिकरण्यप्रकारकज्ञानस्यापि धूमो वन्हिसामानाधिकरण इति ज्ञाने एव पर्यवसानम् । धूमत्वविशिष्टे स्वरूपेण सामानाधिकरण्यस्य प्रकारतया भाने सामग्रीसमवधानेन धूमत्वेऽपि सामानाधिकरण्यसम्बन्धेन तादृशसामानाधिकरण्यस्य भानमिति भावः । **तत्प्रकारिकैवेति ।** धूमत्वप्रकारिकैवेत्यर्थः । एवकारेण धूमत्वावच्छिन्ने तादृशसामानाधिकरण्यप्रकारकत्वव्यवच्छेदः । नन्वेवं तादृशसामानाधिकरण्यविशिष्टधूमत्ववद् धूमवान् पर्वत इति ज्ञानस्य कारणत्वं पर्यवसितम् । तन्न युज्यते । लाघवेन तादृशसामानाधिकरण्यविशिष्टवद्धूमवान् पर्वत इति ज्ञानस्यैव कारणत्वौचित्यात् । तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्वानिति ज्ञानस्य कारणत्वं तु धूमत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववद् ह्रदादिरूपस्वरूपासिद्धिज्ञानस्य प्रतिबन्धत्वानुपपत्त्याऽसम्भवि, हेतुतावच्छेदकावच्छिन्नविशेष्यत्वस्य कारणतावच्छेदककोटौ निवेशादेव न गुणे द्रव्यत्वानुमितिप्रसङ्गः । सामान्यप्रत्यासत्त्यभावेऽपि तादृशसामानाधिकरण्योपलक्षितस्य धूमत्वस्य स्मृतस्य पर्वतीयधूमेऽपि सम्भवात् । नापि हेतुनिष्ठसाध्यासामानाधिकरण्यरूपविरोधस्य हेत्वाभासतानुपपत्तिः । अनुमितावेव तस्य विरोधित्वादित्याशङ्कामिष्टापत्त्या परिहरति ।

आद्या भिन्ना द्वितीया त्वभिन्नैवेति ध्येयम् ।

आद्येति । तथा च तामुपादायैव पर्वतीयवह्निधूमयोरसन्निकर्षात्तयोः कथं व्याप्तिग्रहः इति परामर्शीयपूर्वपक्षग्रन्थ इति भावः । द्वितीयेति । तथा च तामुपादायैव-एकैव हि सा व्याप्तिरिति परामर्शीयसिद्धान्तग्रन्थ इति भावः । यत्र एकमेव साध्याधिकरणं तत्रैतद्रूपवानेतद्रसादित्यादौ आद्यापि अभिन्नैव, यत्र च द्रव्यत्वादौ साध्ये रूपत्वव्याप्यजातिमतो हेतुत्वं तत्र हेतुतावच्छेदकीभूतनील-त्वादिजातीनां नानात्वेन द्वितीयापि क्वचिद् भिन्नैवेति मन्तव्यम् ।

लक्ष्मीः

**तत्र चेति ।** धूमव्यापकवन्हिसामानाधिकरणधूमत्ववद्वानिति बुद्धौ चेत्यर्थः । स्वरूपत एव धूमत्वस्य भानमित्यनेनान्वयः । **नीलघटत्व-प्रकारकबुद्धौ घटत्वस्येवेति ।** यथा 'नीलो घट', इति बुद्धौ धर्मिपा-रतन्त्रेण नीलविशिष्टघटत्वस्य प्रकारत्वेऽपि यथा घटत्वस्य स्वरूपत भानं तथा धूमव्यापकवन्हिसमानाधिकरणधूमवान् पर्वत इति ज्ञानेऽपि सामानाधिकरण्यसम्बन्धेन तादृशसामानाधिकरण्यविशिष्ट-धूमत्वस्य स्वरूपत एव भानमित्याशयः[1] । **तथा च । भिन्नत्वे च । ताम् ।** साधननिष्ठसाध्यसामानाधिकरण्यरूपां व्याप्तिम् । **तथा च । अभिन्नत्वे च । ताम् ।** हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतु-तावच्छेदकरूपाम् । आद्यापि क्वचिदेकेति प्राह । **यत्रेति ।** यादृश स्थले इत्यर्थः । **आद्यापि इति ।** एतद्रसनिष्ठैतद्रूपसामानाधिकर-ण्यमपीत्यर्थः । अपिना एतद्रसव्यापकैतद्रूपसामानाधिकरण्य-विशिष्टैतद्रसत्वस्य समुच्चयः । **अभिन्नैव ।** एकैव एतद्रसनिष्ठैतद्-

टिप्पणी

**१. अथ** धूमव्यापकवन्हिसामानाधिकरणधूमवान् पर्वत इति ज्ञानस्य या स्वरूपसम्बन्धावच्छिन्नहेतुव्यापकसाध्यसामानाधिकरण्यत्वावच्छिन्नप्रकारतानि-रूपितधूमत्वावच्छिन्नविशेष्यता तन्निरूपितावच्छेदकत्वावच्छिन्ना सामानाधिक-रण्यसम्बन्धावच्छिन्ननिरूपितसामानाधिकरण्यत्वावच्छिन्नप्रकारतानिरूपितधूम-त्वनिष्ठनिरवच्छिन्नविशेष्यता तदवच्छिन्नावच्छेदकतानिरूपितप्रकारतानिरूपित-पर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन कारणत्वं ध्वनितम्, तच्च न

लक्ष्मीः

रूपसामानाधिकरण्यैक्यादिति भावः। **द्वितीयापीति।** हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुतावच्छेदकरूपापीत्यर्थः। अपिना हेतुनिष्ठहेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तेः समुच्चयः। **भिन्नैव।** नानैव। हेतुतावच्छेदकीभूतरूपत्वव्याप्यनीलत्वादिजातीनां नानात्वादिति भावः।

---

दिव्याः

सम्भवति; सामानाधिकरण्यं हि धूमांशे भासमानं सद् धूमत्वांशे भासते। एवं च पर्वतीयतादृशसामानाधिकरण्यग्रहासम्भवात्। न वा तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्वान् पर्वत इति ज्ञानस्य कारणत्वं सम्भवति, धूमत्वस्य स्वरूपतो भानासम्भवादिति चेद्। अत्र केचित्। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन सामानाधिकरण्यं धूमांशे भासमानं सद्धूमत्वांशे स्वज्ञानविशयप्रकृतहेतुतावच्छेदकवत्त्वसमवायघटितसामानाधिकरण्यसम्बन्धेन भासते, नतु स्वरूप समवायघटितसामानाधिकरण्यसम्बन्धेन येन तादृशी शङ्का स्यात्।

नन्वेवं गोत्वासामानाधिकरण्यनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिताश्व त्वावच्छिन्नविशेष्यताशालिनिश्चयस्य व्याप्तिग्रहप्रतिबन्धकत्वानुपपत्तिः। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नगोत्वसामानाधिकरण्यनिष्ठ-प्रकारताशालिज्ञानं प्रति स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकगोत्वसामानाधिकरण्याभावरूपविरोधिज्ञानस्य प्रतिबन्धकत्वाभावात्। नहि अन्यसम्बन्धावच्छिन्नप्रकारताशालिज्ञानं प्रति अन्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रकारताशालिनिश्चयस्य प्रतिबन्धकत्वमिति चेन्न। प्राचां मते तद्धर्मावच्छिन्नहेतुकानुमितौ तद्धर्मावच्छिन्नधर्मिकनिश्चयस्य प्रतिबन्धकत्वात्।

अपरे तु धूमव्यापकवह्निसमानाधिकरणवृत्तिमद्धूमवान् पर्वत इति ज्ञानमेव हेतुः, नीलघटत्वप्रकारकबुद्धौ घटत्वस्येवेत्यत्र च नीलरूपवद्वृत्तिमानिति ज्ञानं दृष्टान्त इति वदन्ति।

केचित्तु धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इति ज्ञानस्य लाघवात् सामानाधिकरण्यसम्बन्धावच्छिन्नधूमव्यापकसाध्यसामानाधिकरण्यप्रकारतानिरूपितधूमत्वनिष्ठनिरवच्छिन्नविशेष्यत्वावच्छिन्नावच्छेदकताकप्रकारता - निरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन कारणत्वम्, पूर्वशङ्कावारणं तु वह्निसामानाधिकरण्यत्वेन सामान्यलक्षणया सकलवह्निसामानाधिकरण्योपस्थितिसम्भवेन पर्वतीयवह्निसामानाधिकरण्यस्यापि ज्ञानेन तस्य च

दिव्या

पर्वतीयधूमेऽन्वये बाधकाभावात्। न चैवं 'महानसीयवह्निसामानाधिकरण्यस्य स्मृतस्ये' त्यादिग्रन्थासङ्गतिरिति वाच्यम्। सामान्यलक्षणामस्वीकृत्य तदुक्तेः। न चैवं तादृशसामानाधिकरण्यविशिष्टधूमत्वस्य व्याप्तित्वाभ्युपगमो निरर्थक इति वाच्यम्। पक्षधर्मांशे विषयतयाऽनुमितिजनकतावच्छेदकस्यैव व्याप्तिपदार्थत्वादित्याहुः।

नन्वेवं धूमो वह्नेर्व्याप्य इत्यादावन्वयबोधानुपपत्तिः, तथा हि विषयतयाऽनुमितिजकनकतावच्छेदकस्यैव व्याप्तिपदार्थत्वेनाऽऽप्धात्वर्थनिरुक्तव्याप्तेरेव (धूमव्यापकवह्निसामानाधिकरण्यविशिष्टधूमत्वस्यैव) अन्वयो वाच्यः। स च "धूमस्तादृशधूमत्ववानित्याकारकश्च" न सम्भवति, प्राचीनमते दण्डो रक्तदण्ड इत्यादाविव धूमत्वविशिष्टे विशिष्टधूमत्वान्वये निराकाङ्क्षत्वात्।

अथ तत्र तादृशसामानाधिकरण्यमेवाऽऽप्धात्वर्थः। न तु सामानाधिकरण्यविशिष्टधूमत्वम्, इति नान्वयानुपपत्तिः। तादृशसामानाधिकरण्यमात्रस्यैवान्वयात्। न च तत्रानुमित्यनुपपत्तिः, निरुक्तव्याप्तिप्रकारकज्ञानाभावादिति वाच्यम्। शाब्दबोधानन्तरं निरुक्तव्याप्तेर्मानसाभ्युपगमेनानुमित्युपपत्तेः।

यद्वा विधेयकोटावधिकावगाहित्वेन न निराकाङ्क्षितत्वमिति नवीनमताश्रयणान्न दोषः। तन्मते दण्डो रक्तदण्डइत्यादाविवात्रापि अन्वयबोधसम्भवादिति चेन्न।

तथापि आप्धातोः साध्यसाधनतावच्छेदकान्तर्भावेण शक्तौ नानार्थतापत्तिः। तदनन्तर्भावेण शक्तौ च तद्घटितव्याप्तेरन्वयबोधानुपपत्तिरिति दोषस्य दुर्वारत्वादिति चेन्नैवम्। तदन्तर्भावेणैव शक्तेः। न च नानार्थतापत्तिः। समभिव्याहृतसाध्यसाधनवाचकपदोपस्थाप्यतावच्छेदकत्वस्योपलक्षणतया तदनुगमकतयाऽनुगततद्रूपेणाऽनुगतसाध्यसाधनतावच्छेदकघटिताऽनुगतसामानाधिकरण्यत्वेन सामानाधिकरण्यस्य शक्यतावच्छेदकतया शक्यतावच्छेदकनानात्वप्रयुक्तनानार्थत्वासम्भवात्।

यद्वा तदादिपदवद् बुद्धिस्थत्वमेव शक्यतावच्छेदकम्, बुद्धिविशेषविषयतावच्छेदकत्वं चोपलक्षणतया शक्यतावच्छेदकानुगमकम्।

वस्तुतस्तु नानार्थत्वे इष्टापत्तिरेव व्याप्तिपदादनुगतरूपेण बोधाभावेनानुगतशक्तौ मानाभावात्। धातूनामनेकार्थत्वस्य क्लृप्ततयाऽऽप्धातोर्नानार्थत्वे बाधकाभावात्। साध्यसाधनवाचकपदविशेषसमभिव्याहारस्य नियामकत्वं च सर्वपक्षेऽपि अविशिष्टम्। एवं च धूमो वन्हेर्व्याप्य इत्यादौ षष्ठ्यर्थो निरूपकत्वं निरूपितत्वं वा तस्य चाऽऽप्धात्वर्थेऽन्वयः। कर्मकृदर्थश्चाश्रयस्तस्य धूमेऽन्वयः, तथा च

लक्ष्मीः

प्रतियोग्यसामानाधिकरण्यस्य प्रयोजनं दर्शयति। **दीधितौ अयमिति।** **संग्रहाय।** अव्याप्तिनिरासाय। **असमानाधिकरणान्तमिति।**

दिव्या

धूमो वन्हिनिरूपितव्याप्याश्रय इति बोधः। वन्हिर्धूमस्य व्यापक इत्यादौ च षष्ठ्यर्थो वृत्तित्वम्। कर्तृकृदर्थश्च निरूपकत्वम्। शेषं पूर्ववत्। तथा च वन्हिधूमनिष्ठव्याप्तिनिरूपक इत्यन्वयबोधः।

नवीनास्तु **पक्षधर्मांशे** विषयतया अनुमितिजनकतावच्छेदकस्यैव व्याप्तिपदार्थत्वमिति नियमे मानाभावेन निरुक्तव्याप्तेरनुमितिजनकपक्षधर्मताज्ञानप्रकारत्वमेव, न व्याप्तिपदार्थत्वमित्याप्धातोर्व्यापकत्वमात्रमर्थः। लाघवेन धातोर्मात्रार्थकत्वात्, भावविहितक्तिन्प्रत्ययस्य च निरर्थकत्वमेव। एवं च धूमस्य व्यापको वन्हिरित्यादौ तत्तद्धेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मरूपव्यापकताहेतुवाचकधूमादिपदसमभिव्याहारेण धातुना प्रत्याय्यते, कर्तृकृता चाश्रयरूपः कर्ता-अन्यलभ्यधूमादिकमनन्तर्भाव्यैव चाप्धातोः शक्तिः, धूमादिपदोत्तरकर्मविहितषष्ठ्यादेः प्रतियोगित्वं सामानाधिकरण्यान्वयिकर्मत्वमर्थः। न च धात्वर्थव्यापकतायां धूमादेरनन्तर्भावे समानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावस्य वन्हित्वादौ बाधः। तादृशप्रतियोगितावच्छेदकत्वप्रतियोगिकाभावस्य च व्याप्यतानवच्छेदकसाधारण्यमिति वाच्यम्। सामानाधिकरण्यादिपदार्थेषु विशकलितेषु शक्तिस्वीकारेण धूमप्रतियोगिकत्वादेः सामानाधिकरण्यादावन्वयेनावच्छेदकत्वपर्यन्तानां शक्तिभिर्लब्धस्य धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नस्य तदवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन शक्यान्तरे अभावे अन्वयेन धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावलाभेनाऽदोषात्। तथा च धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभाववद्धर्माश्रयो वह्निरित्यन्वयबोधः। वन्हेर्व्याप्यो धूमः इत्यादौ च कृतः प्रतियोगिरूपं कर्मार्थः प्रतियोगितायां च धात्वर्थसामानाधिकरण्यस्य निरूपकतया विशेषणत्वेन तत्रावच्छेदकत्वस्य तत्राभावान्तरस्य तत्र धर्मस्य तत्र षष्ठ्यर्थाधेयत्वस्य तत्र वन्ह्यादेर्विशेषणत्वेनान्वयः। कर्तृप्रत्ययस्थले यादृशविशेष्यविशेषणभावेनान्वयः, कर्मप्रत्ययस्थले तद्विपरीतविशेष्यविशेषणभावेनान्वयबोधस्य व्युत्पत्तिसिद्धत्वात्। तथा च वह्निवृत्तिधर्मनिष्ठाभावप्रतियोग्यवच्छेदकतानिरूपकप्रतियोगिताकाभाववृत्तिसामानाधिकरण्यप्रतियोगी धूम इत्याद्याकारकोऽन्वयबोध इति प्राहुः।

**अयं कपिसंयोगी एतद्वृक्षत्वादित्यादिसङ्ग्रहायऽसमानाधिकरणान्तम् ।**

कपिसंयोगिन्येतत्पदार्थस्य साध्यताभ्रमनिरासार्थमयमिति पक्षनिर्देशः । साम्प्रदायिकमते संयोगसामान्याभावस्य द्रव्येऽभावात्कपीति । वृक्षमात्रे कपिसंयोगाभावादेतदिति ।

लक्ष्मीः

प्रतियोग्यसमानाधिकरणदलमित्यर्थः । तथा च प्रतियोग्यसामानाधिकरण्यानुपादानेऽयं कपिसंयोगी एतद्वृक्षत्वादित्यत्र हेत्वधिकरणीभूतैतद्वृक्षे मूलावच्छेदेन कपिसंयोगाभावस्य विद्यमानतया तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाद्व्याप्तिरतो हेतुसमानाधिकरणाभावे प्रतियोग्यसामानाधिकरण्यं विशेषणीयम् । तदुपादाने च कपिसंयोगाभावस्य हेतुसमानाधिकरणत्वेऽपि प्रतियोगिसमानाधिकरणतया प्रतियोग्यसमानाधिकरणो घटाभाव एव हेतुसमानाधिकरणश्च, तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके कऽपिसंयोगत्वे सत्त्वान्नाव्याप्तिरिति भावः ।

पक्षनिर्देशस्य प्रयोजनमाह—**साध्यताभ्रमनिरासार्थमिति** । अयमित्यस्यानुपादो कपिसंयोगी पक्षः—एतत्साध्यमिति भ्रमस्य निरासार्थं वृक्षत्वस्य व्यभिचारितयाऽव्याप्तेरिष्टतया एतद्वृक्षत्वमेव हेतुः, कपिसंयोगीत्येवं साध्यमित्येतत्पर्यालोचनयैव तस्य निवृत्तिः, अयमित्यस्योपादाने तु सन्मुखत एव तन्निर्णय इत्याशयः ।

ननूक्तरीत्यैव भ्रमनिराससम्भवेन पक्षनिर्देशोऽनावश्यकः, अन्यथाऽयमित्यस्योपादानेऽपि उद्देश्यविधेयभावस्थले समानलिङ्गकत्वस्यातन्त्रत्वात् वृक्षो नौका भवतीति वत् अयं वृक्षः कपिसंयोगी एतदिति भ्रमसम्भवादिति चेन्न । इदमेतदोः प्रत्यक्षविषये शक्तिरिति तयोः समानार्थकत्वेन अयं कपिसंयोगी एतदिति प्रतिज्ञावाक्याच्छाब्दबोधो न स्याद् उद्देश्यतावच्छेदकविधेययोरैक्यादिति भावः । **साम्प्रदायिकमते इति** । प्राचीनमते इत्यर्थः । **कपीतीति** । तथा च कपिपदानुपादाने वृक्षे संयोगसामान्याभावस्य सर्वमतासिद्धतया घटाभावमादायैव संयोगी एतद्वृक्षत्वादित्यत्र लक्षणसमन्वयसम्भवात् प्रतियोग्यसामानाधिकरण्यदलं व्यर्थं स्यादतः सर्वमतसाधारणव्याप्त्यनुरो-

न चाभावे हेतुसामानाधिकरण्यस्यैव हेत्वधिकरणे निरवच्छिन्नवृत्तित्वरूपस्य निवेशादुक्ताऽव्याप्तिव्युदाससम्भवात् प्रतियोगिवैयधिकरण्यप्रवेशो मूलकृतामनुचित इति वाच्यम्। अग्रे तस्य समाधास्यमानत्वात्।

---

धेन कपिपदोपादानमिति भावः। **एतदिति**। तथा च एतत्त्वविशेषणानुपादाने कपिसंयोगसाध्यकवृक्षत्वहेतोर्व्यभिचारितया तत्र साध्याभावमादाय लक्षणागमनस्येष्टतयाऽव्याप्तिसम्पादनार्थं हेतावेतत्त्वविशेषणोपादानमिति भावः।

अभावनिष्ठहेत्वधिकरणनिरूपितवृत्तितायां निरवच्छिन्नत्वनिवेशादेवोक्ताव्याप्तिवारणे गुरुतरप्रतियोग्यसामानाधिकरण्यनिवेशोऽनुचित इत्याशङ्कते। **न चेति**। वाच्यमिति परेणान्वयः। **हेत्वधिकरणे निरवच्छिन्नवृत्तित्वरूपस्येति**। हेत्वधिकरणनिरूपितनिरवच्छिन्नवृत्तित्वरूपस्येत्यर्थः। **उक्ताव्याप्तिव्युदाससम्भवादिति**। कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभावस्य वृक्ष मूलावच्छिन्नवृत्तिकत्वेन निरवच्छिन्नवृत्तित्वविरहेणाभावान्तरमादायाव्याप्तिव्युदासादिति भावः। **अग्रे**। अवच्छेदकत्वनिरुक्तौ। **समाधास्यमानत्वादिति**। नोपादेयमेव प्रतियोगिवैयधिविकरण्यमित्यादिनेति शेषः। तथा च प्रतियोग्यसामानाधिकरण्यनिवेशस्य वैयर्थ्यं सूचितम्[१]।

---

१ न च विशिष्टसत्ताभाववान् गुणत्वादित्यादौ साध्याभावस्य सत्तारूपतया गुणे निरवच्छिन्नवृत्तित्वेन लक्षणघटकत्वेन तमादायाव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यप्रवेश आवश्यक इति वाच्यम्। साध्याभावस्य द्रव्यत्वरूपत्वकल्पने तस्य हेत्वधिकरणावृत्तित्वात्। न चाभावस्य कालिकेन योऽभावस्तस्य स्वरूपेण साध्यतायां गगनत्वहेतावव्याप्तिः, साध्याभावस्याभावस्वरूपतया तस्य हेत्वधिकरणे वर्तमानतया तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम्। हेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेनैवाव्याप्तिवारणसम्भवात्, साध्याभावस्य जन्ये एव सत्त्वेन साध्याभावस्वरूपानुयोगितायां हेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वस्याऽसत्त्वेन लक्षणाघटकत्वात्। न च धूमाभावत्वाभावसाध्यकवह्निहेतौ साध्याभावस्य धूमाभावत्वरूपतया तत्र च हेत्वधिकरणायोगोलकनिरूपितवृत्तितावच्छेदकत्वसत्त्वात्, धूमाभावनिरूपितत्वस्य धूमाभावत्वाभावनिष्ठप्रतियोगितायां सत्त्वात् 'धूमाभावत्वाभावाभावस्य धूमाभावत्वरूपत्वात्' अव्याप्ति-

यत्तु इदं संयोगि द्रव्यत्वादित्यत्राव्याप्तिवारणाय तत्। संयोगस्य शाखाद्यवच्छेदेन वृत्तेर्वृत्तित्वावच्छेदेन तत्सामान्याभाववृत्तावपि अविरोधात्।

तत्। असमाधिकरणान्तम्। ननु शाखामूलादिसर्वावयवावच्छेदेन

लक्ष्मीः

द्रव्ये संयोगसामान्याभावस्वीकर्तॄणां नव्यानां मतं दूषयितुमुपन्यस्यति। यत्त्विति। अव्याप्तिवारणायेति। हेत्वधिकरणे द्रव्ये वर्तमानस्य संयोगसामान्याभावस्य प्रतियोगितायाः संयोगत्वे सत्त्वात्प्र-

दिव्या

रिति वाच्यम्। हेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगिताविशिष्टप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात्। वै० स्वनिरूपितत्व—स्वाश्रयनिरूपितत्वोभयसं.। तथा च साध्यीभूतधूमाभावत्वाभावनिष्ठप्रतियोगितायां धूमाभावत्वरूपानुयोगितानिरूपितत्वसत्त्वेऽपि स्वाश्रयधूमाभावनिरूपितत्वविरहात्, "धूमाभावत्वाभावाभावनिरूपितत्वस्यैव सत्त्वात् तस्य च स्वाश्रयत्वाभात्" साध्याभावस्य लक्षणाघटकत्वेनाव्याप्त्यभावात्। न च धूमाभावत्व धूमाभावान्यतरस्य कालिकेन योऽभावस्तस्य स्वरूपेण साध्यतायां गगनत्वहेतावव्याप्तिः, साध्यनिष्ठप्रतियोगितायास्तथात्वादिति वाच्यम्। पूर्वोक्तसम्बन्धमपहाय स्वनिरूपितत्वस्वभिन्नानुयोगित्वानिरूपितत्वोभयसम्बन्धेनानुयोगिताविशिष्टप्रतियोगितायाः निवेशेनैव तद्वारणात्।।

वस्तुतस्तु हेत्वधिकरणनिरूपितनिरवच्छिन्नत्वं यद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नं तद्धर्मभिन्नत्वस्य साध्यतावच्छेदके विवक्षणे न कश्चिद्दोषः। तथा च विशिष्टसत्ताभावत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ने न गुणनिरूपितवृत्तित्वमिति। अस्य निवेशस्तु हेत्वधिकरणनिरूपितवृत्तितानिरूपिताभावत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपिताभावत्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितनिरूपकत्वसंबन्धावच्छिन्नप्रतियोगित्व - निष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावद्धर्मभिन्नत्वं साध्यतावच्छेदके विवक्षणीयम्। अनुगमस्तु हेत्वधिकरणवृत्तितावृत्तिधर्मभिन्नं यत्साध्यतावच्छेदकमित्यादि। वृत्तितावृत्तित्वं च धर्मे स्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वसंबन्धेन स्वं—धर्मः।

संयोगस्य सत्त्वात् कुतस्तत्सामान्याभावस्य द्रव्ये संभव इत्यत आह । संयोगस्येति[1] । शाखाद्यवच्छेदेन तत्तत्संयोगसत्वेपि वृक्षत्वावच्छेदेन कस्याश्चिदपि संयोगव्यक्तेरसत्वात्तदवच्छेदेनैव संयोगसामान्याभावसंभवः, अवच्छेदकभेदेनैकत्र भावाभावयोः समावेशादिति भावः ।

---

लक्ष्मीः

सत्तायाः अव्याप्तेर्वारणायेत्यर्थः । **असमानाधिकरणान्तमिति** । प्रतियोग्यसामानाधिकरण्यमित्यर्थः । उपात्तमिति शेषः । तदुपादाने च संयोगाभावस्य प्रतियोगिसमानाधिकरणतयाऽभावान्तरमादाय नाव्याप्तिरित्याशयः ।

संयोगसामान्याभावो वृत्त्यावृत्तिः प्रतियोग्यधिकरणावृत्तित्वादित्यनुमानात्संयोगसामान्याभावस्य हेत्वधिकरणवृत्त्यावृत्तित्वेन लक्षणाघटकत्वात्कुतोऽव्याप्तिरित्याशंकते । **नन्विति** ।

यत्र च द्रव्ये यदवयवावच्छेदेन न संयोगान्तरस्य संभवस्तत्रापि तदवयवावच्छेदेनापि गगनसंयोगस्य संभव इति सूचयितुं **सर्वत्रद्रव्ये गगनादिसंयोगस्य सत्त्वादिति** । गगनस्य सर्वमूर्तसंयोगित्वादिति भावः । **तत्सामान्याभावस्य** । संयोगसामान्याभावस्य । **द्रव्ये संभव इति** । तथा च हेत्वधिकरणे द्रव्ये साध्यीभूतसंयोगस्याभावविरहेणाव्याप्त्यभावात्प्रतियोग्यसामानाधिकरण्यव्यावृत्तिरसंगता स्यादिति भावः । **तदवच्छेदेनैवेति** । वृक्षत्वावच्छेदेनैवेत्यर्थः । एवकारेण शाखामूलादिव्यावृत्तिः । **अवच्छेदकभेदेन** । वृक्षत्वतत्तच्छाखादिरूपावच्छेदकभेदेन । **एकत्र** । वृक्षे । एकावच्छेदेनैवैकत्र भावाभावयोर्विरोधादिति भावः । तथा च पूर्वानुमानेऽसिद्धिः तथाहि—संयोग सामान्याभावः प्रतियोग्यधिकरणवृत्तिः एककालावच्छेद्य एकदेशावच्छेद्यप्रतियोग्यधिकरणवृत्तिताशून्यत्वादिति ध्येयम् ।

---

दिव्या

१ संयोगस्येत्यत्र एकत्वमविवक्षितम्, तत्तदवच्छेदेन तत्तत्संयोगानां सत्त्वस्यैव विवक्षितत्त्वात् ।

तत्र चाऽतीन्द्रियस्य संयोगस्य सत्त्वात्परितः प्रतियोग्युपलब्धेर्दोषाद्वा वृक्षे न संयोग इत्यादिनाध्यक्षमिति।

---

नन्वेवं वृक्षे संयोगसामान्याभावस्य सत्त्वे कुतो नाध्यक्षमित्यत आह। तत्र चेति। तत्र। संयोगसामान्याभावे। सत्त्वादित्यस्य प्रतियोगितासंबन्धेनेत्यादिः। तथाच-संयोगसामान्याभावस्याऽतीन्द्रियप्रतियोगिकत्वान्नाध्यक्षमिति। ननु प्रतियोगितावच्छेदकविशिष्टस्य यत्किञ्चित्प्रतियोगिनो योग्यत्वमत्यन्ताभावग्रहे तन्त्रं न तु योग्यमात्रप्रतियोगिकत्वम्, अन्यथा गुणेपि संयोगसामान्याभावस्य तादृशप्रत्यक्षं न स्यादत आह। परित इति।

---

लक्ष्मीः

**एवं**। अवच्छेदकभेदेनैकत्र भावाभावयोः समावेशे। **कुतो नाध्यक्षमिति**। वृक्षे न संयोग इति प्रत्यक्षं कथं नेत्यर्थः। **अतः**। संयोगसामान्याभावस्याप्रत्यक्षत्वात्। **आहेति**। वृक्षे संयोगसामान्याभावस्याऽप्रत्यक्षत्वे हेतुमाहेत्यर्थः। **तथा च**। संयोगसामान्याभावस्य प्रतियोगितासंबन्धेनातीन्द्रियसंयोगविशिष्टत्वे च। **नाध्यक्षमिति**। प्रतियोगिनो योग्यताविरहात्, पिशाचादि संयोगस्यापि प्रतियोग्यन्तर्गतत्वादिति भावः।

**प्रतियोगितावच्छेदकविशिष्टस्येति**। अत्यन्ताभावप्रत्यक्षे प्रतियोगितावच्छेदकस्य तद्विशिष्टस्य योग्यत्वं कारणम्। तेन गुरुत्ववान्नास्ति पिशाचवद्घटो नास्ति शब्दवान्नास्तीत्याद्यभावानां न प्रत्यक्षत्वापत्तिः। **अन्यथा**। प्रतियोगिमात्रे योग्यतायास्तन्त्रत्वे संयोगसामान्याभावस्य तादृशप्रत्यक्षं न स्यादिति। यावत्प्रतियोगिनो योग्यत्वाभावेनाऽनुपलब्धेर्योग्यत्वाभावात्। तथा च यत्किञ्चित्प्रतियोगिनो योग्यतायास्तन्त्रत्वे वृक्षे संयोगो नेत्याकारकप्रत्यक्षापत्तिः सुदृढैवेति भावः।

अभावनिष्ठलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति योग्यताविशिष्टस्य यत्किञ्चित्प्रतियोगिनः प्रतियोगितासंबन्धेनैव हेतुत्वम्, योग्यताविशिष्टस्य यावत्प्रतियोगिनो हेतुत्वे गुणे न संयोग इति प्रत्यक्षं न स्यात्, अतीन्द्रियपरमाणुपिशाचादिसंयोगस्यापि प्रतियोगिसामा-

परितः सर्वावयवावच्छेदेन, प्रतियोगिग्रहात्मकदोषाद्वा इत्यर्थः ।

न चैवं प्रतियोगिग्रहोत्पत्तिदशायां तत्प्रत्यक्षं दुर्वारम् । प्रतियोग्युपलम्भकसामग्र्या-

लक्ष्मीः

न्यान्तर्गतत्वादित्याशयः ।

**सर्वावयवावच्छेदेनेति** । शाखादिसकलावयवावच्छेदेनेत्यर्थः । तथा च संयोगाभावप्रत्यक्षं प्रति सर्वावयवावच्छेदेन संयोगज्ञानं प्रतिबन्धकमिति भावः ।

ननु वृक्षत्वावच्छेन संयोगाभावप्रत्यक्षे शाखावच्छेदेन प्रतियोगिज्ञानस्याऽप्रतिबन्धकत्वात् कुतो वृक्षे न संयोग इति नाध्यक्षमित्यत आह । **दोषादिति** । दोषविधया प्रतिबन्धकत्वादित्यर्थः ।

सामान्याभावबुद्धिं प्रति यत्किञ्चित्प्रतियोगिमत्तानिश्चयस्यापि विरोधितया नातिरिक्तदोषस्य विरोधित्वमिति दोषादित्यस्य प्रतिबन्धकादित्यर्थ इति कश्चित[1] ।

नन्वत्र किमापाद्यम्, कश्चापादकः । यदि च द्रव्यत्वावच्छिन्नविशेष्यकसंयोगाभावप्रकारकलौकिकप्रत्यक्षस्यापत्तिर्दीयते तदाऽऽपाद्याप्रसिद्धिरिति चेन्न । द्रव्यं यदि प्रत्यक्षविषयत्वे सति संयोगाभाववत्स्यात् तदा संयोगाभावप्रकारकलौकिकप्रत्यक्षनिरूपितविशेष्यतावत्स्यात्, लौकिकप्रत्यक्षविषयत्वं च गुणादौ प्रसिद्धमेवेति नापाद्याप्रसिद्धिः । अपाद्यापादकयोर्व्याप्तिश्च यत्प्रत्यक्षविषयत्वे सति यदभावाश्रयः तत्तदभावप्रकारकलौकिकप्रत्यक्षविषयतावदिति वाच्या । तादृशविषयताप्रयोजकत्वं च तत्तदभावाधिकरणतत्तव्यक्तेर्लौकिकप्रत्यक्षयोग्यत्वमेवेति ।

कार्याव्यवहितपूर्वक्षणे प्रतिबन्धकसत्तायाः कार्यानुत्पादप्रयोजकत्वम्, एवं च यस्मिन् क्षणे सर्वावयवावच्छेदेन संयोगात्मकप्रतियोगिज्ञानमुत्पद्यते तत्क्षणे संयोगाभावप्रत्यक्षापत्तिः, तत्पूर्वं प्रतिबन्धकविरहादित्याशंकते । **नचेति** । अस्य दुर्वारमित्यनेनान्वयः ।

दिव्या

१ वस्तुतस्तु तत्पुरुषीयसंयोगाभावत्वावच्छिन्नलौकिकप्रकारताशालिप्रत्यक्षं प्रति तत्पुरुषीयसंयोगत्वावच्छिन्नलौकिकप्रकारताशालिज्ञानत्वेन प्रतिबन्धकत्वमनुभवसिद्धं । प्रतिबध्यत्वस्य विशेष्यत्वं—प्रतिबन्धकत्वस्य स्वविषयीभूतसंयोगवत्त्वं संबन्ध इति ध्येयम् ।

अपि दोषत्वोपगमात्, प्रतियोगिन उपलब्धिर्यया इति व्युत्पत्त्या तस्या एव वा प्रस्तुत-

लक्ष्मीः

**एवं** । संयोगाभावप्रत्यक्षे सर्वावयवावच्छेदेन प्रतियोगिज्ञानस्य प्रतिबन्धकत्वे । **तत्प्रत्यक्षं** । संयोगाभावप्रत्यक्षं । **दुर्वारमिति** । तथा च प्रत्यक्षापत्तिवारणासंभवादिति भावः । न प्रत्यक्षापत्तिरित्याह । **प्रतियोग्युपलंभकसामग्र्या अपीति** । प्रतियोगिज्ञानजनकसामग्र्या अपीत्यर्थः । अपिना प्रतियोगिज्ञानसमुच्चयः । **दोषत्वोपगमादिति** । प्रतिबन्धकत्वोपगमादित्यर्थः । तथा च प्रतियोगिग्रहोत्पत्तिकाले न तत्प्रत्यक्षापत्तिरिति भावः । **व्युत्पत्त्या** । बहुव्रीहिणा । **तस्या एव** । प्रतियोगिग्रहजनकसामग्र्या एव । तथा च व्युत्पत्तिबलात्प्रतियोग्युपलब्धिपदेन तादृशसामग्रीलाभः । तथा च स्वप्रयोज्यविषयतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन तादृशसामग्री प्रतिबन्धिका । सामग्री च दोषविशेषापहृतचक्षुः संयुक्तसमवायादिः सन्निकर्षः ।

अथ कीदृशः प्रतिबध्यप्रतिबन्धकभावः । न तावत्संयोगाभावप्रत्यक्षं प्रति संयोगज्ञानत्वेन । वृक्षे संयोगोपलब्धिदशायां गुणेपि संयोगसामान्याभावप्रत्यक्षं न स्यात् । नापि द्रव्यत्वावच्छिन्नविशेष्यकसंयोगसामान्याभावप्रकारकप्रत्यक्षं प्रति द्रव्यत्वावच्छिन्नविशेष्यकसंयोगवत्तानिश्चयत्वेन, द्रव्यत्वावच्छिन्नविशेष्यकसंयोगाभावप्रकारकप्रत्यक्षस्याऽलीकतयाऽऽपत्तिदानाऽसङ्गतेरिति चेन्न । लौकिकसन्निकर्षप्रयोज्यविशेष्यतासंबन्धेन संयोगाभावप्रकारकप्रत्यक्षं प्रति लौकिकसन्निकर्षप्रयोज्यविशेष्यतासंबन्धेन संयोगोपलब्धेः प्रतिबन्धकत्वात् । एवं चोक्तापत्तेर्दुर्वारतापत्तिः । न च तादृशोपलब्धित्वस्येश्वरप्रत्यक्षासाधारणतया तस्य सर्वदैव सर्वत्रैव च द्रव्ये सत्वेन कथं प्रत्यक्षापत्तेर्दुर्वारत्वमिति वाच्यम् । जन्यप्रत्यक्ष-नित्यज्ञानसाधारणानुगतविषयितानिरूपकत्वस्य विशेष्यत्वस्य मानाभावेन संसर्गत्वासंभवात्, लौकिकसन्निकर्षप्रयोज्यविशेष्यत्वस्य तु सर्वथापीश्वरज्ञाननिरूपकत्वासंभवेन नेश्वरज्ञानसंसर्गत्व-

**तन्न द्रव्ये संयोगसामान्याभावे मानाभावात् ।**

त्वादिति भावः। प्रतियोग्युपलंभरूपदोषाभावस्य संयोगसामान्याभावप्रत्यक्षे कार्यसह-भावेन हेतुत्वोपगमन्नोक्तदोष इत्यपि वदन्ति ।

लक्ष्मीः

संभव इति भवत्येवोक्तापत्तिरिति ध्येयम्।[1]

व्यधिकरणबहुव्रीहेरसार्वत्रिकत्त्वेत्याह। **प्रतियोग्युपलंभरूपेति। दोषाभावस्य।** संयोगरूपप्रतियोगिग्रहात्मकदोषाभावस्य। **कार्यसह-भावेन।** कार्याधिकरणवृत्तितया। **नोक्तदोष इति।** न प्रतियोगिग्रहो-त्पत्तिदशायां संयोगसामान्याभावप्रत्यक्षापत्तिः। नव्यमतं दूषयति। **तन्नेति। मानाभावादिति।** द्रव्ये संयोगसामान्याभावे प्रत्यक्षप्रमा-णाभावादित्यर्थः।

कार्यसहभावेन हेतुत्वमित्यस्य कार्याधिकरणवृत्यभावप्रतियोगिता-नवच्छेदकतत्तद्धर्मवत्वरूपेण हेतुत्वमित्यत्र तात्पर्यम्। कारणत्वं चोभयसाधारणं स्वाधिकरणत्व, स्वपूर्वत्वाधिकरणक्षणद्वयावच्छिन्न स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्वम्।

**द्रव्ये संयोगसामान्याभावे मानाभावादिति दीधितिः।** न चात्र सिद्ध्यसिद्धिभ्यां व्याघात इति वाच्यम्। प्रमितिजनकत्वीय स्वरूपेण मितिजनकत्वाभावस्य साधनीयत्वात्। यद्वा प्रमितिकरणत्वावच्छिन्न प्रतियोगिकस्वरूपेण मितिजनकत्वाभावः साधनीयः। यत्तु संयोगा-भावं पक्षीकृत्य स्वजन्यप्रमितिविशेष्यतासंबन्धावच्छिन्नप्रतियोगिता कमानाभावहेतुना द्रव्यवृत्तित्वाभावं साधयतीति। तन्न। संयोगाभाव-स्य प्रमितिविशेष्यतासंबन्धेन केवलान्वयित्वादभावाप्रसिद्धेः।

दिव्या

१. केचित्तु एकशाखावच्छेदेन कपिसंयोगोपलब्धावपि शाखान्तरावच्छेदेन कपिसंयोगाभावदर्शनात्, तदवच्छेदेनाभावप्रत्यक्षे तदवच्छेदेन प्रतियोग्युपलब्धेः प्रतिबन्धकत्वस्य स्वीकरणीयतया वृक्षत्वावच्छेदेन संयोगसामान्याभावप्रत्यक्ष-प्रतिबन्धकस्य वृक्षत्वावच्छेदेन संयोगोपलब्धेरसत्वाद् वृक्षे संयोगसामान्याभाव-प्रत्यक्षापत्तिरतः शाखामूलादिसर्वावयवावच्छेदेन प्रतियोग्युपलब्धेर्दोषविधयैव

न च यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानिति व्याप्तेः संयोगयावद्विशेषाभावा एव मानम् ।

लक्ष्मीः

ननु अनुमानादेव द्रव्ये संयोगसामान्याभावः साधनीय इत्याशंकते । दीधितौ । यो यदीयेति । यदीयाः—यन्निष्ठप्रतियोगिताकाः । यावन्तो विशेषाभावाः तद्वान् यः स तत्सामान्याभाववान्–तत्सामान्यनिष्ठप्रतियोगिताकाभाववान् इत्यर्थः ।

वाक्यार्थबोधश्च व्याप्तेरित्यनेन व्याप्तिज्ञानादित्यर्थः । पञ्चम्यर्थो विषयत्वम्, यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानित्युदाहरणवाक्यम् । तस्य बोधेऽन्वयः । मानपदं मिति करणपरम् ।

दिव्या

प्रतिबन्धकत्वं युक्तमित्याहुः ।

अपरे तु विषयतासंबन्धेन रूपविशेष्यकसंयोगाभावप्रकारकप्रत्यक्षं प्रति चक्षुःसंयुक्तसमवेत 'रूप' विशेषणतायाः विशिष्यैव कारणत्वं वाच्यम्, अन्यथा रूपे संयोगाभावप्रत्यक्षकाले रसादावपि सन्निकर्षमन्तरेण संयोगाभावप्रत्यक्षापत्तेः । एवं च चक्षुः संयुक्तसमवेतविशेषणतात्वेनानुगतकारणताविरहे द्रव्ये संयोगसामान्याभावप्रत्यक्षस्यालीकतया संयोगसामान्याभावप्रत्यक्षे चक्षुः संयुक्तविशेषणतायाः कारणत्वाकल्पनात्कथमापत्तिः, आपादकाभावात् । यदि च प्रकारतासंबन्धेन संयोगसामान्याभावचाक्षुषे चक्षुःसंयुक्तसमवेतविशेषणतात्वेनैवानुगतकारणत्वम्, विशेष्यविधया रूपरसादेर्भाने तत्तल्लौकिकप्रत्यक्षसामग्र्या अपेक्षिततया नोक्तप्रत्यक्षापत्तिः, एवं च चक्षुः संयुक्तशाखादिसमवेतचक्षुर्विशेषणतारूपसंयोगाभावप्रकारकप्रत्यक्षप्रयोजकसामग्र्याः, द्रव्यभासकस्य चक्षुःसंयोगस्य च सत्वेनाऽऽपत्तिसंभव इत्युच्यते तदापि द्रव्यसमवेतवृत्त्यभावचाक्षुषं प्रति चक्षुः संयुक्तसमवेतविशेषणतायाः कारणत्वेपि अन्यत्र दर्शितरीत्या कार्यतावच्छेदककोटौ संयुक्तांशे समवेतांशे च योग्यत्वनिवेशनमावश्यकम्. एवमपि परमाणुवृत्त्यभावचाक्षुषे व्यभिचारवारणाय कार्यतावच्छेदककोटौ द्रव्यसमवेतांशे द्रव्यान्यत्वं निवेशनीयम् । तथा चापादकाभावमादायाऽऽपत्तिविरहेपि द्रव्यनिष्ठविशेष्यतानिरूपिताभावीयप्रकारतासंबन्धेन घटाद्यभावचाक्षुषत्वापत्तये चाक्षुषत्वावच्छिन्नं प्रत्येव लाघवेन चक्षुः संयुक्तविशेषणताया कारणत्वस्य वाच्यतया संयोगाभावे उक्तसंबन्धेन प्रत्यक्षापत्तेर्दुर्वारत्वादिति ध्येयम् ।

नचेति । मानमिति परेणान्वयः। यो यदीयेति । यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स तज्जात्यवच्छिन्नतत्संबन्धावच्छिन्नप्रतियोगिताकाभाववानित्यर्थः ।

---

लक्ष्मीः

तच्च व्याप्तिज्ञानं । तत्रैव वाक्यस्य जन्यतासंबन्धेनान्वयः । मानपदोत्तर द्वितीयार्थश्च विषयत्वम् । तस्य च यावत्संयोगविशेषाभावेऽन्वयः । तथा च तादृशोदाहरणवाक्यजन्यव्याप्तिविषयकबोधीयविषयतावन्तः संयोगनिष्ठप्रतियोगिताकायावन्तो विशेषाभावा इति बोधः । अथ वा मानपदं संयोगीय यावद्विशेषाभावलिंगकानुमितिजनकतावच्छेदकत्वपरम् । तत्रैवोदाहरणवाक्यस्य प्रयोज्यतासंबन्धेनान्वयः । व्याप्तेरित्यत्र षष्ठ्यर्थो विषयत्वम् । तथा च संयोगयावद्विशेषाभावलिंगकानुमितिजनकतावच्छेदकत्वमेतादृशोदाहरणवाक्यप्रयोज्यव्याप्तिनिष्ठमिति शाब्दबोधः । अत्र यत्पदं यद्धर्मावच्छिन्नपरम् । यदीयेत्यत्र छप्रत्ययार्थो वृत्तित्वम् । विशेषपदमुभयावृत्तिपरम् । एवं च यज्जातिसमानाधिकरणेत्याद्यर्थलाभः ।

तथा च वृक्षः 'संयोगसामान्याभाववान्' समवायसंबन्धावच्छिन्नसंयोगत्वावच्छिन्नप्रतियोगिताकाभाववान् संयोगत्वजातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकायावदभाववत्वादिति फलितम । संयोगत्वजातिसमानाधिकरणः अथ च उभयावृत्तिर्यो धर्मः तत्तत्संयोगत्वं, तत्तदवच्छिन्नप्रतियोगिताकयावदभावस्य वृक्षे सत्वात्तत्र च संयोगसामान्याभावस्य साधनीयत्वात् । **यो यज्जातीति** । सामान्यव्याप्तिरियम् । निर्घटभूतलं दृष्टान्तः । घटत्वजातिसमानाधिकरणः अथ च उभयावृत्तिधर्मस्तत्तद्घटत्वं तदवच्छिन्नप्रतियोगिताकयावदभावस्य निर्घटभूतले सत्त्वात्तत्र च घटसामान्याभावसिद्धिः । नन्वत्र वृक्षः संयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादित्येव कुतो नोक्तम् जगदीशेनेति चेन्न । विपरीतबाधकतर्काभावात् । सामान्यव्याप्तौ तु प्रकृतसाधने प्रकृतसाध्यव्याप्तिग्रहासत्वे साधनसजातीये साध्यसजातीयव्याप्तिग्रहसत्वे प्रकृतपक्षे प्रकृतहेतुमत्तानिश्चयोत्तरमनुमितिर्भवतीति नियमः । तथा च घटीययावद्विशेषाभावे घटसामान्याभावव्याप्तिग्रहाद् वृक्षे हेतुमत्तानिश्चयोत्तरमनुमितौ इष्टापत्तेरिति ।

तेन न स्वरूपासिद्धि

लक्ष्मीः

तेन । धर्मे उभयावृत्तित्वविशेषणेन । न स्वरूपासिद्धिरिति । धर्मे-उभयावृत्तित्वानिवेशे संयोगत्वसमानाधिकरणो यो धर्मः सत्ता गुणत्वं च तदवच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताक 'सत्तावान्नास्ति गुणो नास्तीत्याकारकस्य यावदभावान्तर्गतस्य वृत्तेऽसत्वात्स्वरूपासिद्धिः स्यात् । धर्मे उभयावृत्तित्वविशेषणसत्वे तु सत्तायाः गुणत्वादेश्चोभयवृत्तित्वात् उभयावृत्तिधर्मपदेन गुणत्वादेरग्रहणात् तत्तत्संयोगत्वस्यैव ग्रहणान्न स्वरूपासिद्धिरिति भावः ।

ननु प्रथमोपात्तस्य जातिपदस्य व्यावृत्तिमनुक्त्वा उभयावृत्तिपदादेर्व्यावृत्युपन्यासोनुचित इति चेन्न । उभयावृत्तिपदासत्वे जातिपदस्य व्यावृत्तिर्न संभवति । कंबुग्रीवादिमत्वसमानाधिकरणतद्घटान्यप्रमेयत्व-एतद्घटान्यप्रमेयत्वादिरूपधर्मावच्छिन्नप्रतियोगिताकयावदभावस्या-वृत्तितया तादृशयावदभावरूपहेतौ व्यभिचारासंभवात् । एवं हेतुघटकसाध्यघटकसंबन्धयोरैक्याकरणेपि तथैव विपयितासंबन्धावच्छिन्नप्रतियोगिताककंबुग्रीवादिमत्वावच्छिन्नाभावस्य तत्साध्यकव्यभिचाराऽसंभवादतः प्रथमं तद्व्यावृत्तिर्दत्तेति ध्येयम् ।

नन्वत्रोभयावृत्तित्वं धर्मे विशेषणं परित्यज्य प्रतियोगितायामेव विशेषणमस्तु तथाच अज्ञादिसमानाधिकरणत्वे सति उभयावृत्तिर्याप्रतियोगिता तन्निरूपकयावदभाववानित्येवास्तु किं धर्मावच्छिन्नत्वनिवेशेन । एवं च तत्तत्संयोगाभावीयप्रतियोगितायामुभयावृत्तित्वसत्वेन तामादाय लक्षणं संगमनीयम् । न च प्राचीनमते तत्संयोगाभावीयप्रतियोगितायां तत्संयोगध्वंसादिवृत्तित्वेनोभयावृत्तित्वं नास्त्येवेति वाच्यम् । प्रतियोगिभेदेन प्रतियोगितावच्छेदकभेदेन च प्रतियोगिताया भिन्नत्वादिति चेन्न । स्वरूपसंबन्धात्मिकायाः प्रतियोगितायाः प्रत्याश्रयभेदेन भिन्नतया संयोगाभावीय प्रतियोगितायामुभयावृत्तित्वसत्वेन तादृशप्रतियोगिताकाभावस्यापि हेत्वन्तर्गततया पक्षेऽसत्वेन स्वरूपासिद्धेः[1] ।

दिव्या

1 न च तथापि उभयावृत्तित्वस्य स्वावच्छेदकत्वसंबन्धेन प्रतियोगितायां

लक्ष्मीः

नन्वत्रोभयावृत्तित्वं यदि उभयत्वाश्रयनिरूपितवृत्तित्वाभावः तदा तत्संयोगत्वे तत्संयोगघटोभयत्वाश्रयनिरूपितवृत्तित्वस्यैव सत्वेन तत्संयोगाभावस्य गृहीतुमशक्यत्वादिति चेन्न। आधेयतासंबन्धावच्छिन्नप्रतियोगिताकोभयत्वावच्छिन्नाभावस्तदर्थः। तथाचाऽऽधेयतासंबन्धेनोभयवत्तायास्तत्संयोगत्वेऽसत्वेनोभयत्वावच्छिन्नाभावसत्वान्न काप्यनुपपत्तिरिति केचित्। स्ववृत्तित्व, स्वेतरवृत्तित्वोभयसंबन्धेन वस्तुमदन्यत्वमेव तदित्यपि वदन्ति।

परेतु भेदविशिष्टान्यत्वमेव तत्। वै० स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्योभयसं०। न च घटतत्संयोगोभयभेदस्य केवलान्वयितया तद्विशिष्टत्वस्यैव तत्तत्संयोगत्वे सत्वेन तदन्यत्वाऽसंभव इति वाच्यम्। भेदविशिष्टान्यत्वमित्यत्र भेदे प्रतियोगिताविशिष्टान्यत्व निवेशात्। वै० स्वाश्रयवृत्तित्व-स्वानाश्रयवृत्तित्वोभय सं०। तथा

---

दिव्या

निवेशे न दोषः, संयोगसामान्याभावीय प्रतियोगितायाः प्रतिव्यक्तिभेदेन भिन्नत्वेपि स्वावच्छेदकवत्वसंबन्धेनोभयवृत्तित्वात्स्वरूपासिद्धेरनवकाशादिति वाच्यम्। तथः सति लाघवानवकाशात, न चाभावे एव स्वनिरूपितप्रतियोगितावत्वसंबन्धेन उभयावृत्तित्वं निवेशनीयम्। एवं च यज्जातिसमानाधिकरणोभयावृत्तियावदभाववानेव हेतुः तावतापि संयोगसामान्याभावस्य निखिलसंयोगेषु तादृशसंबन्धेन संयोगसामान्याभावस्य सत्वेनोभयावृत्तित्वविरहेण न स्वरूपासिद्धिरिति वाच्यम्। पूर्वक्षणावृत्तित्वविशिष्टतत्संयोगाभावस्यापि तत्संयोगाभावानतिरेकितया स्वनिरूपितप्रतियोगितावत्वसंबन्धेन पूर्वक्षणवृत्तित्वविशिष्टतत्संयोगाभावाभावेपि तत्संयोगाभावस्य सत्वेनोभयावृत्तित्वविरहादभावाप्रसिद्धेः। न चाभावत्वरूपानुयोगितायामेव स्वनिरूपितप्रतियोगितावत्वसंबन्धेनोभयावृत्तित्वं निवेश्यम्, तथा च तत्संयोगाभावत्वरूपानुयोगिताया भिन्नत्वेन तत्रोभयावृत्तित्वसत्वादिति वाच्यम्। तत्संयोगाभावत्वाभावस्य तत्संयोगाभावरूपतया तन्निरूपितप्रतियोगितायास्तत्संयोगाभावत्वाभावेपि सत्वेन तत्संयोगाभावत्वरूपानुयोगितायामुभयावृत्तित्वविरहेण पुनरप्रसिद्धेः। न च स्वविशिष्टप्रतियोगितावत्वसंबन्धेनानुयोगितायां तन्निवेश्यम्, वै० स्वनिरूपितत्व-स्वनिष्ठानुयोगित्वानिरूपितत्वोभय सं०। तथा च तत्संयोगाभावीय तत्संयोगनिष्ठप्रतियोगितैव तादृशीति नाप्रसिद्धिरिति वाच्यम्। एतादृशपरिष्कारे लाघवानवकाशादिति ध्येयम्।

नवा सिद्धसाधनम् ।जात्युपादानाद् गुरुधर्मस्य कंबुग्रीवादिमत्त्वस्य प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावाऽप्रसिध्यापि न व्यभिचारः ।

---

लक्ष्मीः

चोभयभेदस्य प्रतियोगिताविशिष्टत्वादेव धर्तुमशक्यत्वादिति ध्येयम् ।

यत्संबन्धावच्छिन्न तत्संबन्धावच्छिन्नेति संबन्धैक्यविवक्षायाः फलमाह । **न वा सिद्धसाधनमिति ।** संबन्धैक्याविवक्षायां समवायेन संयोगयावद्विशेषाभाववति संयोगसंबन्धावच्छिन्नप्रतियोगिताकसंयोगसामान्याभावस्य केवलान्वयितया सिद्धसाधनं स्यात् ।

**जात्युपादानादिति ।** यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स तद्धर्मावच्छिन्नतत्संबन्धावच्छिन्नप्रतियोगिताकाभाववानित्यनुक्त्वा जातिपदोपादानादित्यर्थः । **प्रतियोगितानवच्छेदकत्वेनेति ।** कंबुग्रीवादिमान्नास्तीत्यभावप्रतियोगितानवच्छेदकत्वेनेत्यर्थः । लाघवेन घटत्वस्यैव प्रतियोगितावच्छेदकत्वादिति भावः । **तदवच्छिन्नाभावाप्रसिध्यापीति ।** कंबुग्रीवादिमत्वावच्छिन्नाभावाप्रसिध्यापीत्यर्थः । **न व्यभिचार इति ।** जातिपदानुपादाने कंबुग्रीवादिमत्वरूपगुरुधर्मसमानाधिकरणोभयावृत्तितत्तद्घटत्वावच्छिन्नप्रतियोगिताकयावद्विशेषाभाववति निर्घटभूतलादौ साध्यासत्वाद् व्यभिचारः, तादृशधर्मस्य गुरुतयाऽनवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्धेरिति भावः । नन्वत्र साध्याऽप्रसिध्या साध्याभावद्वृत्तित्वरूपव्यभिचारस्याप्यप्रसिद्धिरिति कथं व्यभिचारः संगच्छते इति वाच्यम् । यो यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स तद्धर्मवानिति व्याप्तौ तात्पर्यात् । तद्धर्मवत्ता च स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसंबन्धेन तथा च तादृशसंबन्धेन कंबुग्रीवादिमत्वरूपधर्मस्य कुत्राप्यसत्वेन तदभावस्य केवलान्वयितया तदधिकरणे भूतले हेतोःसत्त्वाच्च व्यभिचार इति ध्येयम् । नियमभङ्गोत्र व्यभिचारपदार्थो न तु साध्यभाववद्वृतित्वमिति कश्चित् । वस्तुतस्तु साध्याप्रसिद्धिरेवात्र व्यभिचार इति दिक् ।

न च तथापि कंबुग्रीवादिमत्वं कंबुग्रीवादिव्यक्तिरेव सा च कपाल-

लक्ष्मीः

द्वयसंयोगविशेषः कपाले एव वर्तते,एवं च कंबुग्रीवादिमत्वसामानाधिकरण्यस्य तद्घटत्वेऽभावात्कथं व्यभिचार इति वाच्यम् । स्वसमवायिसमवेतत्वसंबन्धेन कंबुग्रीवादिमत्वसामानाधिकरण्यस्य तद्घटत्वे सत्वात् ।

अथैवं धर्मपदस्य जातिपरत्वेपि कंबुग्रीवात्वरूपसंस्थानगतजातिमेव जातिपदेनोपादाय स्वाश्रयसमवायिसमवेतत्वसंबन्धेन तज्जात्यधिकरणवृत्त्युभयावृत्तितद्घटत्वावच्छिन्नप्रतियोगिताकयावदभाववति तज्जात्यवच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या व्यभिचारः पुनस्तदवस्थ एव, तत्र कंबुग्रीवात्वमपेक्ष्य घटत्वस्य तथात्वकल्पने संसर्गलाघवस्य सत्वात् , कंबुग्रीवात्वस्य तथात्वे स्वाश्रयसमवायिसमवेतत्वरूपपरंपरासंबन्धस्य तथात्वे च गौरवात् , समवायस्य तथात्वे लाघवात् । नच जातिपदं गुणविभाजकपरम् , गुणविभाजकत्वं च गुणत्वव्याप्यत्वे सति गुणत्वव्याप्याव्याप्यत्वम् , तथा च कंबुग्रीवात्वस्य गुणत्वव्याप्यत्वेपि गुणत्वव्याप्यसंयोगत्वव्याप्यत्वेन तद्व्याप्यत्वविरहात्तस्यधारणाऽसंभव इति वाच्यम् । संयोगत्वस्य जातिपदेन धर्त्तव्यतया तस्य स्वव्याप्यकंबुग्रीवात्वाश्रयसमवायिसमवेतत्वसंबन्धेन घटे सत्वेन तद्वृत्तिउभयावृत्तितत्तद्घटत्वावच्छिन्नप्रतियोगिताकयावदभावस्यापि हेत्वन्तर्गततया तादृशसंबन्धेन संयोगत्वावच्छिन्नाभावाप्रसिद्ध्या व्यभिचार तादवस्थ्यात् । तादृशसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य घटत्वे एव कल्पनादिति चेन्न । समवायेन यद्धर्मसामानाधिकरण्य लाभायैव जातिपदोपादानादिति ध्येयम्[1] ।

---

दिव्या

१. एतेन जात्यधिकरणत्वं यदि समवायेन विवक्ष्यते तदा जातिपदोपादानं व्यर्थम्, धर्मपदस्य जातिपरत्वाभावेपि नोक्त व्यभिचार संभवः, तथा हि समवायेन कम्बुग्रीवादिमत्वाधिकरणं कपालमेव, तद्वृत्ति उभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावस्यैव हेत्वन्तर्गततया तादृशसंबन्धावच्छिन्नकम्बुग्रीवादिनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य साध्यतया गुरुधर्मावच्छिन्नप्रतियोगिताकत्वविरहेण व्यभिचाराभावात । न च तादृशसंबन्धावच्छिन्नावच्छेदकताककम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वं कपालत्वे एव स्वीकार्यमिति वाच्यम् । कपाले कम्बुग्रीवाशून्यदशायां कपालवत्यपि देशे कम्बुग्रीवादिमान्नास्तीति प्रतीति-

दिव्या

वत् कपालं नास्तीति प्रत्ययस्यानुदयात्तत्प्रतियोगितावच्छेदकत्वस्य तत्र वक्तुमशक्यत्वादिति निरस्तम् । वस्तुतस्तु समवायेन धर्माधिकरणत्वोक्तावपि धर्मपदस्य जातिपरत्वमावश्यकम्, अन्यथा धर्मपदेन गुणत्वमुपादाय तत्समानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववति साध्यविरहाद् व्यभिचारः स्यात्, गुणे प्रतियोगितावच्छेदकत्वमपेक्ष्य द्रव्यत्वे तत्कल्पने लाघवादिति ध्येयम् ।

केचित्तु साध्यघटकप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वं निवेश्यम्, अन्यथा तत्संयोगवृत्तित्वविशिष्टसंयोगत्वावच्छिन्नाभावमादाय सिद्धसाधनापत्तेः । एवं च तद्धर्मनिष्ठनिरूपकतायां निरवच्छिन्नत्वलाभार्थमेव जातिपदम् । समवायान्यसंबन्धेन जातेः स्वरूपतो भानं नाङ्गीक्रियते इति नियमः । एवं च स्वाश्रयसमवायिसमवेतत्वसंबन्धावच्छिन्नकम्बुग्रीवात्वनिष्ठनिरूपकताया निरवच्छिन्नत्वविरहान्न दोषः । न च विषयितासंबन्धेनापि जातेः स्वरूपतो भानस्य घटत्वेनेमं जानामीत्यनुव्यवसायानुरोधेन स्वीकारात्, समवायेन संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभाववति वृत्ते विषयित्वसंबन्धावच्छिन्नसंयोगत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावसत्त्वात् सिद्धसाधनापत्तिरिति वाच्यम् । यो यद्धर्मनिष्ठयत्संबन्धावच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तिउभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् स तद्धर्मनिष्ठतत्संबन्धावच्छिन्ननिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववानिति विवक्षणे दोषाभावात् । यदि च घटो नास्तीति बुद्धौ अवच्छिन्नप्रतियोगिताकत्वसंबन्धेनाऽभावांशे घटत्वस्य स्वरूपतो भानं स्वीक्रियते तदा यद्धर्मे यत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वं विशेषणं देयम्, तदर्थश्च यत्संबन्धावच्छिन्नप्रतियोगिताकाभावः साध्यः तत्संबन्धावच्छिन्नावच्छेदकताश्रयत्वम्, नातः समवायसंबन्धावच्छिन्नप्रतियोगितानिरूपितसमवायसंबन्धावच्छिन्नावच्छेदकत्वस्याऽसत्त्वेपि विषयितासंबन्धावच्छिन्नावच्छेदकत्वस्य स्वाश्रयसमवेतत्वसंबन्धावच्छिन्नावच्छेदकत्वस्य च कम्बुग्रीवात्वे सत्त्वेपि दोषः ।

नन्वत्र यावत्पदं किमर्थम् । न च यत्किञ्चिद्घटाभाववति भूतले घटसामान्याभावासत्त्वाद् व्यभिचार इति वाच्यम् । यावत्पदोपादानेपि यावदभावपदेन नीलपीतरक्तघटाभावत्रयस्यापि हेत्वन्तर्गततया तदधिकरणे हरितघटवति देशे साध्यस्य घटसामान्याभावस्याऽसत्त्वेन व्यभिचारतादवस्थ्यात् । न च यावत्त्वस्य व्यापकतावाचितया यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकाभावत्वव्यापकः स तज्जात्यवच्छिन्नतत्संबन्धावच्छिन्नप्रतियोगिताकाभाववानित्येवार्थः । व्यापकता च स्वरूपसंबन्धावच्छिन्नाधेयतासंब-

## दिव्या

न्धेन। वृक्षस्य तादृशाधेयतासंबन्धेनाभावत्वव्यापकत्वात्। एवं च हरितघटवद्भूतलस्य तादृशाधेयतासंबन्धेन तादृशाभावत्वव्यापकत्वविरहेण न व्यभिचार। यदि तादृशाभावत्वव्यापकत्वं तादृशाभावत्ववन्निष्ठभेदप्रतियोगितानवच्छेदकत्वं अवच्छेदकता च स्वरूपसंबन्धावच्छिन्नाधेयत्वसंबन्धावच्छिन्ना। एवं च तादृशाभावत्ववति संयोगविशेषाभावे स्वरूपसंबन्धावच्छिन्नाधेयतासंबन्धेन सर्वस्यैव सत्वात्तादृशसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदाप्रसिद्धेरिति वाच्यम्। तादृशाभाववृत्तिभेदप्रतियोगित्वाभावस्यैव व्यापकतारूपत्वात्। प्रतियोगित्वाभावश्च स्वनिरूपितस्वरूपसंबन्धावच्छिन्नाधेयत्वसंबन्धावच्छिन्नावच्छेदकतासंबन्धावच्छिन्नप्रतियोगिताकः। उक्तस्थले च तादृशसंबन्धस्य व्यधिकरणतया तत्संबन्धावच्छिन्नप्रतियोगिताकप्रतियोगित्वाभावस्य वृक्षे सत्वान्नाप्रसिद्धिः। तथा च संयोगसमवायादिना वृक्षवान्नेति भेदमादायैव व्यापकता संपादनीया। अथवा स्वरूपसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसंबन्धेन तादृशप्रतियोगितावच्छेदकत्वाभावस्य विवक्षणात्सर्वं समञ्जसमिति वाच्यम्। एवं सति जातिपदवैयर्थ्यापत्तेः। कंबुग्रीवादिमत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकाभाववृत्तिभेदप्रतियोगितावच्छेदकत्ववस्य घटत्वघटिततादृशप्रतियोगितावच्छेदकत्वत्वापेक्षया गुरुत्वेन हेत्वनन्तर्गततया व्यभिचाराभावात्। एवमुभयावृत्तिपदवैयर्थ्यशंकाप्यलग्ना स्यात्, व्यापकतारूपाऽभावस्य भिन्नत्वेन वैयर्थ्यलक्षणानाक्रान्तत्वात्।

न च व्यापकत्वार्थकत्वाभावेपि कूटार्थकत्वेनैवोपपत्तिः तथाहि—तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नस्य हेतुतया न प्रागुक्त दोष इति वाच्यम्। जगदीशोक्तशंकायास्तथापि सन्दर्भविरुद्धत्वात् पर्याप्तिवैलक्षण्यात्। अनुयोगितावच्छेदककुक्षौ उभयावृत्तित्वनिवेशानिवेशकृतकूटभेदादिति चेन्न। यज्जातिसमानाधिकरणोऽभयावृत्तिधर्मावच्छिन्नाभाव एव हेतुः। हेतुतावच्छेदकसंबन्धश्च स्वपर्याप्तयावत्वावच्छिन्नाधिकरणत्वम्, तच्च तादृशाभावत्वसमनियतयावत्वावच्छिन्नाधिकरणत्वम्। संसर्गता तु स्वपर्याप्तयावत्वावच्छिन्नाधिकरणतात्वेनैव। एवं च तादृशसंबन्धेन निखिलाभावाधिकरणे हेतोः सत्वान्न कश्चिद्दोष इति दिक्।

एतेन यावत्वं यदि अपेक्षाबुद्धिविशेषविषयत्वं तदा विशेषरूपेण निवेश्यतया यज्जातीत्यादिप्रतियोगिताकान्तस्य वैयर्थ्यापत्तिरिति निरस्तम्। यावत्वं संख्यारूपमेव। न च संख्यात्मकयावत्वं कथमभावे,

न च सत्त्वगुणत्वाद्यवच्छिन्नाभावमादाय स्वरूपासिद्धिवारकस्य उभयावृत्तिपदस्य वैयर्थ्यं व्यभिचारावारकत्वादिति वाच्यम् ।

---

### लक्ष्मीः

ननु धर्मे उभयावृत्तित्वविशेषणानुक्तावपि न व्यभिचारः संयोगत्वजातिसमानाधिकरणो यः सत्ता गुणत्वं च तदवच्छिन्नप्रतियोगिताकस्य सत्तावदभावस्य गुणाभावस्य च यावदन्तर्गतस्य गुणादावेव सत्त्वेन तत्र संयोगसामान्याभावस्यापि सत्त्वेन यो यज्जातिसमानाधिकरणधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स तत्सामान्याभाववानिति व्याप्तेः सामंजस्यात् । तथा चोभयावृत्तित्वविशेषणं व्यर्थं व्यभिचारावारकत्वादित्याशंकते । **न चेति ।** वाच्यमित्यनेनान्वयः ।

**सत्त्वगुणत्वाद्यवच्छिन्नाभावमादायेति ।** सत्तावान्नास्ति गुणो नास्तीत्यभावमादायेत्यर्थः । **स्वरूपासिद्धिवारकस्येति ।** संयोगत्वसमानाधिकरणसत्तागुणत्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य यावदन्तर्गतत्त्वाद् वृत्तेऽसत्त्वात्स्वरूपासिद्धिरतस्तद्वारकस्येत्यर्थः । **उभयावृत्तिपदस्येति ।** तथा च गुणत्वसत्तादेरुभयावृत्तित्वविरहेण धर्मपदेन तद्ग्रहणान्न स्वरूपासिद्धिरिति भावः । वैयर्थ्ये हेतुमाह । **व्यभिचारावारकत्वादिति ।** तथाचोभयावृत्तित्वविशेषणस्य व्यर्थतया व्यर्थविशेषणघटितत्वेन संयोगत्वजातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकयावदभावत्वं न हेतुतावच्छेदकमित्याशयः ।

---

### दिव्या

संख्यायाः गुणत्वादिति वाच्यम् । समवायेन तदवृत्तित्वेपि पर्याप्तिसंबन्धेन संख्यात्मकयावत्त्वस्याभाववृत्तित्वात् । तथा च तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकयावत्त्वस्यैव हेतुतावच्छेदकत्वं तच्च तादृभावेष्वेवास्ति न तु त्रिचतुर्ष्विति ध्येयम् । केचित्तु स्वाभाववदवृत्तित्व—स्वव्यापकत्वोभयसंबन्धेन स्वविशिष्टतादृशाभावत्वकयावत्त्वमेव हेतुतावच्छेदकं । स्वन्यूनवृत्तियावत्त्वादिवारणाय दलद्वयम् । स्वं—यावत्त्वमिति प्राहुः ।

लक्ष्मीः

न चोभयावृत्तिपदोपादानेपि उभयावृत्तिधर्मे जातिसामानाधिकरण्यघटकजात्यधिकरणवृत्तित्वं स्वरूपेण वाच्यम्। अन्यथा कालिकेन तत्तद्रूपत्वादेरपि संयोगत्वाधिकरणवृत्तितया उभयावृत्तित्वेन च तदवच्छिन्नप्रतियोगिताकयावदभावस्य वृत्तेऽसत्वात्स्वरूपासिद्धितादवस्थ्यात्। एवं चोभयावृत्तिपदं व्यर्थम्, सत्तागुणत्वादेः स्वरूपेण जात्यधिकरणनिरूपितवृत्तित्वविरहादिति वाच्यम्। सत्वगुणत्वाद्यवच्छिन्नेत्यत्राऽऽदिपदसत्वात्, आदिना प्रमेयत्वादेपि परिग्रहः। एतेनोभयावृत्तिधर्मावच्छिन्नत्वं स्वरूपेण वाच्यं अन्यथा रूपादेरपि कालिकेन तत्संयोगत्वावच्छिन्नतया स्वरूपासिध्यापत्तेः। एवं च धर्मावच्छिन्नत्वमेव स्वरूपेण निवेश्यम्. तावतैव स्वरूपेण सत्तागुणत्वावच्छिन्नस्याऽप्रसिद्धत्वेन स्वरूपासिद्धिविरहादुभयावृत्तिपदं व्यर्थमित्यपि समाहितम्।

केचित्तु उभयावृत्तित्वदशायां यज्जातिसामानाधिरण्यघटकाधेयत्वं स्वरूपसंबन्धावच्छिन्नं ग्राह्यम्, अन्यथा वृत्तत्वादिनिष्ठतद्व्यक्तित्वादेरपि कालिकेन संयोगत्वसमानाधिकरणतया तदवच्छिन्नाभावस्य वृत्तेऽसत्वेन स्वरूपासिध्यापत्तेः। तथाच कथं सत्वगुणत्वाद्यवच्छिन्नाभावमादाय व्यावृत्तिदानम्, सत्वादेः स्वरूपसंबन्धेनाऽवर्त्तमानत्वादिति चेत्। सत्यम्। यथाश्रुतं तादृशाभावमादाय व्यावृत्तिः प्रदर्शिता। एतादृशसूक्ष्मानुधावने तु सत्ताधिकरणत्वत्वाद्यवच्छिन्नाभावमादाय व्यावृत्तिर्दातव्येति[1]प्राहुः।

---

दिव्या

१. न च सत्ताधिकरणत्वावच्छिन्नाभावस्य सत्तायां एव प्रतियोगितावच्छेदकत्वं स्वीकार्यं लाघवादिति वाच्यम्। वस्तुगत्या यत्सत्ताधिकरणत्वं तदवच्छिन्नाभावस्य धर्त्तव्यत्वात्। न च तत्तद्व्यक्तित्वेन तत्तदधिकरणत्वव्यक्तेरवच्छेदकत्वं स्वरूपतः सत्तादेरेवावच्छेदकत्वकल्पनस्य युक्तत्वात्तथाविधानमसंगतमिति वाच्यम्। तत्तद्व्यक्तित्वादेरभावप्रतियोगितावच्छेदककोटौ उपलक्षणत्वमते तत्तद्व्यक्तित्वोपलक्षितावच्छिन्नाभावस्य धारणसंभवात्। अथवा संयोगत्वसमानाधिकरणघटपटाद्यवृत्तित्वावच्छिन्नाभावमादाय व्यावृत्तिर्देयेत्याहुः। परे तु यत्संबन्धेन जातिसामानाधिकरण्यं तत्संबन्धेनोभयावृत्तित्वं तत्संबन्धावच्छिन्नावच्छेदकताकाऽभावा एव निविष्टाः, तथाचोभयावृत्तित्वदलासत्त्वदशायां यत्सं-

लक्ष्मीः

अत्र निष्प्रयोजनत्वरूपवैयर्थ्यं न घटते स्वरूपासिद्धिवारकतया तत्सार्थक्यात्। किन्तु स्वसमानाधिकरणं प्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरं तद्घटितत्वं वैयर्थ्यम्। न च नीलधूमत्वादेर्वैयर्थ्यासंभवः, नीलधूमत्वस्य धूमत्वानतिरिक्ततया धूमत्वे तादृशधर्मान्तरत्वविरहादिति वाच्यम्। स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं प्रकृतसाध्यव्याप्यतावच्छेदकं यत्स्वसमानाधिकरणरूपं तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वरूपत्वात्[1]। संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तादृशाभावत्वव्याप्यतावच्छेदकं संयोगत्वसमानाधिकरणधर्मावच्छिन्नं प्रतियोगिताकाभावत्वं (उभयावृत्तित्वाघटितं) विशिष्टान्तरं तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वस्य हेतुतावच्छेदके सत्वाद् व्यर्थविशेषघटितत्वमस्ति इति भावः।

---

दिव्या

बन्धेन सामानाधिकरण्यं तत्संबन्धावच्छिन्नावच्छेदकताकाभावा इत्येतावन्मात्रं स्थितं, तथा च सत्वगुणत्वावच्छिन्नाभावमादाय व्यावृत्तिदानं यथाश्रुतमेव सम्यगित्याहुः।

१ एतच्च प्रकृतेऽपि न संभवति स्वपदं हेतुतावच्छेदकपरम्। तथा च यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं उभयावृत्तिपदाघटिततादृशकूटवानिति प्रतीतिविषयतावच्छेदकप्रकृतसाध्यव्याप्यतावच्छेदकं स्वसमानाधिकरणसत्तावच्छिन्नाभावगतसाधारणकूटत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य हेतुतावच्छेदके सत्वादनवच्छेदकत्वविरहेण वैयर्थ्यविरहात्।

न च यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्ववृत्तित्वमेव हेतुः, वृत्तित्वं च स्वव्याप्यत्वसम्बन्धेन। व्याप्यताघटकस्वाभावश्च स्वरूपसंबन्धावच्छिन्नाधेयतासंबन्धेन। तथा विशिष्टान्तररूपं यज्जातिसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्ववृत्तितात्वं तदविषयताया हेतुविषयकज्ञानेपि सत्वेन तदवच्छिन्नाविषयकप्रतीति विषयतावच्छेदकत्वस्य हेतुतावच्छेदके सत्वान्न वैयर्थ्यासंगतिरिति वाच्यम्। स्वाभाववदवृत्तित्वरूपव्याप्यत्वस्य

## दिव्या

यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वे स्वरूपसंबन्धावच्छिन्नाधेयतासंबन्धेन वृक्षस्य तत्तत्संयोगाभावादौ सत्वेन वृक्षाभावस्य तत्तत्संयोभावादावसत्वेपि वृक्षाभावस्य द्रव्यत्वाभावेपि सत्वेन तत्राभावत्वस्य वृत्तित्वेन विशिष्टाभावत्वस्य वृत्तित्वात् व्याप्यत्वविरहेण तादृशहेतोरसत्वात्। न च तादृशाभावत्वावच्छिन्ननिरूपकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमेव हेतुः, रूपवृत्तित्वं च स्वाभावत्वनिरूपितवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेनेति वाच्यम्। घटवति भूतले भूतलपक्षे द्रव्यत्वावच्छिन्नाभावस्याऽसिद्धत्वापत्ते। संबन्धघटकभिन्नत्वेन तादृशानवच्छेदकत्वस्य सत्वात्। ननु यज्जातिवृत्तित्वमेव हेतुरस्तु—वृत्तित्वं च स्वाभाववद्वृत्तित्वसं०। स्वाभावश्चस्वरूपसंबन्धावच्छिन्नाधेयतासंबन्धेन। तद्घटकीभूतवृत्तित्वं च स्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वसंबन्धेन। तथा च तादृशजातौ वृक्षादीनां तादृशसंबन्धेन सत्वेन तदवच्छिन्नविषयताया हेतुविषयकज्ञाने सत्वेन तच्छून्यत्वविरहात्, तच्छून्यं घट इति ज्ञानं तन्निरूपितविषयतानवच्छेदकत्वस्य हेतुतावच्छेदके सत्वेन वैयर्थ्यसंभवादिति चेन्न। स्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावउभयावृत्तिपदाघटिततादृशप्रतियोगिताकाभावभिन्नत्वेन विशिष्टान्तररूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य हेतुतावच्छेदके सत्वेन तदनवच्छेदकत्वस्याऽसत्वेन वैयर्थ्याभावादिति। न च यज्जातिसामानाधिकरण्यनिष्ठावच्छेदकताभिन्नोभयावृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितजातिसामानाधिकरण्यनिष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितधर्मनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगितानिष्ठावच्छेदकतानिरूपिताभावत्वनिष्ठावच्छेदकतानिरूपितानुयोगितानिरूपकपर्याप्तिप्रतियोगिकूटत्वेनैव तादृशकूटत्वस्य हेतुतावच्छेदकत्वं वाच्यम्, उभयावृत्तित्वस्य न्यूनवारकपर्याप्तिर्न निवेश्यते, तथा च तादृशकूटत्वविषयकप्रतीतिविषयतावच्छेदकं उभयसाधारणं रूपं तदवच्छिन्नाविषयकघटवानिति प्रतीतिविषयतानवच्छेदकत्वस्य हेतुतावच्छेदके सत्वान्न वैयर्थ्यासंगतिरिति वाच्यम्। तथा सति उभयावृत्तिपदानुपादानेपि स्वरूपासिद्धिविरहेण ग्रन्थासंगतेः। तादृशकूटत्वस्य सत्ताद्यवच्छिन्नाभावसाधारणकूटत्वाउभयावृत्तिधर्मावच्छिन्नाभावमात्रवृत्तिकूटत्वसाधारणतया तदेकस्य पक्षे सत्वादिति चेत्। उच्यते। यज्जातिसमानाधिकरणोभया-

व्यभिचारवारकस्येवाऽसिद्धिवारकस्यापि विशेषणस्य सार्थकतायाः पक्षधरमिश्रादिसंमतत्वात् । अत एव नित्यत्वसाध्यकानुमाने शब्दो नित्यः सामान्यवत्वे सति

---

लक्ष्मीः

समाधत्ते । व्यभिचारवारकस्येवेति । यथा व्याप्तौ व्यभिचारवारकविशेषणस्य सार्थक्यं तथेत्यर्थः । मिश्रादिसंमतत्वादिति । अत्र साध्यगमकत्वरूपं हेतुत्वं हि किञ्चिद्धर्मिण्येव साध्यगमकत्वम्, निर्धर्मिकानुमित्यभावात्, तथा च गमकतायां साध्यव्याप्तेरिव पक्षधर्मत्वस्यापि प्रयोजकतया वैयर्थ्यशरीरे प्रकृतसाध्यव्याप्यतावच्छेदकत्वस्येव प्रकृतपक्षधर्मतावच्छेदकत्वस्यापि विशेषणत्वं वाच्यमिति स्वरूपासिद्धिवारकस्यापि न वैयर्थ्यमिति मिश्राणामाशयः ।

संमतिं दर्शयति । अत एवेति । स्वरूपासिद्धिवारकस्यापि विशे

---

दिव्या

वृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटस्यैव हेतुत्वम् । न च घटवति भूतले रक्तघटपीतघटनीलघटाभावगतकूटत्वाश्रयस्य सत्वात्तत्र च घटसामान्याभावस्यासत्त्वाद् व्यभिचार इति वाच्यम् । यत्किञ्चिद्घटवति भूतले यावद्घटवानिति प्रतीत्यनुदयेन व्यासज्यवृत्तिधर्मप्रकारकबोधे स्वोद्देश्यतावच्छेदकव्यापकपर्याप्तिरेव संसर्गः । तस्याश्च वह्नित्वावच्छिन्नप्रतियोगितायाः यथा प्रतियोगितात्वेन संसर्गता तथाऽत्रापि पर्याप्तित्वेनैव न तु तादृशपर्याप्तित्वेन, एवं च तादृशपर्याप्तित्वविशिष्टसंसर्गेण विशिष्टान्तरतावच्छेदककूटत्वस्य व्याप्यतानवच्छेदकत्वेपि न क्षतिः । तादृशस्य हेतुतावच्छेदकताघटकसम्बन्धत्वविरहात् । तथा च शुद्धप्रतियोगितात्वेन प्रतियोगित्वस्य तादृशसंसर्गत्वेपि वह्निविशिष्टाभावो न महानसीयवह्न्यभावः, तथोक्तपर्याप्तेः पर्याप्तित्वेन संसर्गत्वेपि तादृशाभावकूटत्वं न कतिपयाभाववर्तीति न व्यभिचारः, तथाचोभयावृत्तित्वानुपादाने यद्धर्मसमानाधिकरणधर्मावच्छिन्नाभावकूटस्य हेतुतया तत्र कूटत्वस्य तादृशाभाववव्यापकपर्याप्तेरेव संसर्गत्वेन स्वरूपासिद्धिसंगतिः । एवं च तादृशविशिष्टान्तरं यज्जातिसमानाधिकरणधर्मावच्छिन्नाभावकूटत्वं तदवच्छिन्नविषयताया हेतुविषयकप्रतीतौ सत्वेन तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वस्य सत्वेन हेतुतावच्छेदके वैयर्थ्यसंगतिरिति ध्येयम् ।

विशेषगुणान्तरासमानाधिकरणबहिरिन्द्रियग्राह्यत्वादिति हेतावसिद्धिवारकस्य शब्देतरार्थकस्याऽन्तरपदस्य शब्दमण्यालोके सार्थकत्वं तैः समर्थितम् ।

लक्ष्मीः

षणस्य सार्थकत्वादेवेत्यर्थः । अत्र मीमांसकमतेन शब्दे नित्यत्वसाधनम् । तैर्वर्णात्मकशब्दस्य नित्यत्वस्वीकारात् । शब्दत्वसामानाधिकरण्येन नित्यत्वसाधनस्य तेषामिष्टतया ध्वन्यात्मकशब्दस्य तन्मतेऽनित्यत्वेपि न बाधः । एवं च हेतौ ध्वनिभिन्नत्वं विशेषणमपि देयम्, अन्यथा ध्वन्यात्मकशब्दे हेतोः सत्वेन तन्मते नित्यत्वसाध्यस्याभावाद् व्यभिचारापत्तेः । ध्वन्यात्मकशब्दध्वंसे शब्दभिन्नविशेषगुणासामानाधिकरण्यस्य बहिरिन्द्रियग्राह्यत्वस्य च सत्वेन व्यभिचारवारणाय । **सामान्यवत्वे सतीति** । घटीयरूपे सामान्यस्य बहिरिन्द्रियग्राह्यत्वस्य च सत्वेन तत्र नित्यत्वाभावाद्व्यभिचारवारणाय । **विशेषगुणान्तरासमानाधिकरणेति** । मनः क्रियायां सामान्यवत्वस्य विशेषगुणान्तरासामानाधिकरण्यस्य च सत्वात्तत्र नित्यत्वाभावेन व्यभिचारवारणाय बहिरिन्द्रियग्राह्येति । अत्र बहिःपदमव्यावर्तकम्, मनोरूपेन्द्रियग्राह्यत्वस्यात्मनि सत्वेपि तत्र नित्यत्वसत्त्वेन व्यभिचाराभावात् । एवं मनोरूपेन्द्रियग्राह्यत्वस्य जन्यज्ञानादौ सत्वेपि तत्र शब्दभिन्नविशेषगुणासामानाधिकरण्यविरहान्न व्यभिचारसंभावना । अन्तरपदस्य स्वयं फलमाह । **असिद्धिवारकस्येत्यादिना** । अन्तरपदानुक्तौ सामान्यवत्वे सति विशेषगुणासमानाधिकरणबहिरिन्द्रियग्राह्यत्वमात्रोक्तौ शब्देपि स्वात्मकविशेषगुणसामानाधिकरण्यात्स्वरूपासिद्धिः तद्वारणायान्तरपदोपादाने च शब्दे शब्दभिन्नविशेषगुणाऽसामानाधिकरण्यसत्वान्न स्वरूपासिद्धिः । इदमुपलक्षणम् । विशेषपदमपि स्वरूपासिद्धिवारणायैव, शब्दे शब्दभिन्नसामान्यगुणसामानाधिकरण्यासत्वादिति [1]ध्येयम् ।

तदुक्तं—शब्दध्वंसे घटे चेतः क्रियायां व्यभिचारतः ।
नित्यत्वसाध्यके देयं क्रमात्तत्तद्विशेषणम् ॥

दिव्या

१. ननु विशेषपदस्याऽन्तरपदस्य चानुक्तौ सामान्यवत्वे सति गुणासमानाधिकरणत्वे सति बहिरिन्द्रियग्राह्यत्वहेतोरप्रसिद्धिरेवेति कथं तयोरनुक्तौ

लक्ष्मीः

शब्दोऽनित्य इति नैयायिकमतम्। तत्र शब्दत्वावच्छेदेन साध्यसिद्धेरुद्देश्यत्वम्। इन्द्रियाग्राह्ये शब्दे भागासिद्धिवारणाय बहिरिन्द्रियग्राह्येति, बहिरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकधर्मपरम्। शब्दत्वे व्यभिचारवारणाय सामान्यवत्त्वे सतीति। बहिरिन्द्रियग्राह्येति गगने व्यभिचारवारणाय जलीयपरमाणुरूपे व्यभिचारवारणाय विशेषगुणान्तरासमानाधिकरणेति। न च तत्र बहिरिन्द्रियग्राह्यत्वदलासत्वेन न व्यभिचार इति वाच्यम्। अश्रुतशब्दे भागासिद्धवारणाय बहिरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकधर्मवत्वस्य विवक्षणीयतया परमाणुरूपे रूपत्वजातिमादाय व्यभिचारतादवस्थ्यात्। नैयायिकमते कालस्यातीन्द्रियतया न तत्र व्यभिचार इति ध्येयम्। उक्तंच शब्दत्वे खे जलीयाणौ रूपे च व्यभिचारतः।

---

दिव्या

स्वरूपासिद्धिः, कुत्रचिद्धेतुप्रसिद्धिस्थले एव पक्षे तदभावसत्वे स्वरूपासिद्धिर्भवतीति चेन्न। मीमांसकमते कालस्यापि बहिरिन्द्रियवेद्यत्वेन तस्य चावृत्तित्वेन गुणासामानाधिकरण्यस्य द्रव्यत्वस्य च सत्वात्तत्रैव हेतोः प्रसिद्धिसंभवात्। केचित्तु सामान्यलक्षणाजन्यप्रत्यक्षविषयतामादाय मनः क्रियायां व्यभिचारवारणाय बहिःपदस्य लौकिकविषयत्वार्थकतयाऽऽत्मन एव दृष्टान्तत्वसंभवादित्याहुः।

अथाश्रुतशब्दे भागासिद्धिवारणाय बहिरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वादित्येव बहिरिन्द्रियग्राह्यत्वात् इत्यस्यार्थो वाच्यः, गुणत्वद्रव्यत्वादिकमादाय गगनमनः संयोगे व्यभिचारतादवस्थ्यमिति चेन्न। सामान्यवत्वे सति विशेषगुणान्तरासमानाधिकरणवृत्तिबहिरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकधर्मवत्वस्यैव हेतुत्वात्। न तु विशेषगुणान्तरासामानाधिकरण्यस्य बहिरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकधर्मस्य स्वातन्त्र्येण द्वयोर्निवेशः। गुणत्वे द्रव्यत्वेपि बहिरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकत्वसत्वेपि विशेषगुणान्तरासमानाधिकरणवृत्तित्वविरहादेव न व्यभिचारावकाशः।

केचित्तु उक्त भागासिद्धिवारणाय सामान्यवत्वे सति बहिरिन्द्रियग्राह्यत्वादिति दलद्वयस्य बहिरिन्द्रियग्राह्यतावच्छेदकजातिमत्वरूपार्थे तात्पर्यम्। पुनर्गगनादौ द्रव्यत्वजातिमादाय व्यभिचारवारणाय तादृशजातौ द्वीन्द्रियग्राह्यतावच्छेदकत्वं विशेषणीयमित्याहुः।

यद्वा यो यदीय यावद्विशेषाभाववानित्यस्य यो यदीयानां यद्धर्मावच्छिन्नप्रतियोगित्वानां—यावतां विशेषाभाववान्, प्रत्येकावच्छिन्नप्रतियोगिताकाभाववान्—स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववानित्यर्थः। तथा च संयोगत्वावच्छिन्नप्रतियोगिताव्यक्तीनां प्रत्येकावच्छिन्नाभावकूटवत्त्वस्य पक्षे सत्वान्नासिद्धिर्न वा व्यर्थविशेषणत्वमित्यवधेयम्।

---

लक्ष्मीः

अनित्यसाध्यके देयं क्रमात्तद्विशेषणम् इति। सामान्यवत्वे सति विशेषगुणान्तासमानाधिकरणैकमात्रवृत्तिगुणत्वादित्यपि पाठः। तत्र सामान्यवत्वे सतीति न व्यावर्तकम्। एकमात्र वृत्तिगुणत्वस्य घटीयरूपे तत्र नित्यत्वाभाववद् व्यभिचारवारणाय विशेषगुणान्तरासमानाधिकरणेति। विशेषगुणान्तरासामानाधिकरण्यस्य कालदिग्वृत्ति द्वित्वे सत्वाद् व्यभिचारवारणाय एकमात्रवृत्तित्वोपादानम्। तन्मते महाकालनिष्ठैकत्वं दृष्टान्तः। अत्र मनोनिष्ठपरत्वापरत्वे वेगाख्यसंस्कारे च व्यभिचारवारणाय मनोऽवृत्तित्वे सतीति विशेषणीयम्। गुणत्वानुक्तौ मनः क्रियायां व्यभिचारः स्यादिति।

असिद्धिवारकविशेषणशून्यं कल्पान्तरमाह। **यद्वेति। यद्धर्मावच्छिन्नप्रतियोगित्वानां।** संयोगत्वावच्छिन्नप्रतियोगित्वानां। **प्रत्येकावच्छिन्नप्रतियोगिताकाभाववान्।** तत्तत्प्रतियोगित्वावच्छिन्न "प्रतियोगितावन्निष्ठ" प्रतियोगिताकाभाववान्। तत्तत्प्रतियोगितावान्नास्तीत्यभावानामिति यावत्। तथा च यो यद्धर्मावच्छिन्नप्रतियोगितात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नावच्छेदकताक 'प्रतियोगितावन्निष्ठ' प्रतियोगिताकाभाववान् स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववानित्यर्थः। संयोगत्वावच्छिन्नप्रतियोगित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य संयोगत्वावच्छिन्नप्रतियोगितावान्नास्तीत्याकारकस्य यावदन्तर्गततया वृत्तेऽसत्वात्स्वरूपासिद्धिवारणाय प्रत्येकपदमुभयावृत्तित्वार्थकम्। **नासिद्धिर्न वा व्यर्थविशेषणत्वमिति।** नन्वत्र प्रत्येकपदस्याऽसिद्धिवारकस्य सत्त्वात्कथं न व्यर्थविशेषणता। एवं यद्धर्म 'संयोगत्व' निष्ठकालिकसंबन्धावच्छिन्नावच्छेदकताकतद्रूपनिष्ठप्रतियोगित्वावच्छिन्नाभावस्य पक्षेऽसत्वेनाऽसिद्धिवारणाय यद्धर्मनिष्ठावच्छेदकतायां समवायसंबन्धावच्छिन्नत्वं निवेश्यम्.

योे यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नयावदभाववान स तद्धर्मावच्छिन्नाभाववानित्यर्थस्तु

लक्ष्मीः

एवं प्रतियोगितानिष्ठकालिकसंबन्धावच्छिन्नावच्छेदकताक 'प्रतियोगितावद्रूपनिष्ठ' प्रतियोगिताकाभावस्य वृत्तेऽसत्वात्स्वरूपासिद्धिवारणाय प्रतियोगित्वनिष्ठावच्छेदकतायां स्वरूपसंबन्धावच्छिन्नत्वं निवेश्यम्। एवं संयोगत्ववृक्षत्वत्वैतदन्यतरावच्छिन्नप्रतियोगितानिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य वृत्तेऽसत्त्वात्स्वरूपासिद्धिवारणाय यद्धर्मेतरानवच्छिन्नत्वं निवेश्यम्। एवं च स्वरूपासिद्धिवारकविशेषणस्यात्रापि सत्वेन "नासिद्धिर्न वा व्यर्थं विशेषणत्वमिति ग्रन्थासंगतिरिति चेन्न। यो यद्धर्मावच्छिन्नप्रतियोगितात्वव्यापकः स तद्धर्मावच्छिन्नाभाववानित्यर्थे तात्पर्यात्। व्यापकता च स्ववृत्यभावप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्ना। स्वं-वृत्तः।

ननु निरुक्तसंबन्धेन प्रतियोगितायां सर्वपदार्थानां सत्त्वाद् व्यापकताघटकभेदप्रतियोगितावच्छेदकत्वाप्रसिद्धिरिति चेन्न। स्ववृत्त्यभावनिरूपितस्वरूपसंबन्धावच्छिन्नावच्छेदकत्वीय स्वरूपसंबन्धेन प्रतियोगितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्योक्तत्वात्।

नव्यास्तु यद्धर्मावच्छिन्नप्रतियोगितात्वावच्छिन्नाभावत्वव्यापककूटत्वावच्छिन्नमेव हेतुः। एवं च व्यापकतानिवेशेनाऽभावस्य वैलक्षण्यान्न वैयर्थ्यावकाश इति प्राहुः।

यतो न स्वरूपासिद्धिरतो न वैयर्थ्यमिति हेतु हेतुमद्भावप्रदर्शनपरोयं ग्रन्थः, असिद्धिवारकविशेषणस्यापि सार्थक्यादित्यपरे।

विशेषपदस्य न्यूनवृत्तिधर्मवदर्थकतामभ्युपगच्छतां मतमुपन्यस्य दूषयति। **यो यद्धर्मन्यूनवृत्तीति।** तथा च संयोगत्वन्यूनवृत्तिर्यो धर्मस्तत्तत्संयोगत्वं तदवच्छिन्नप्रतियोगिताकयावदभाववान् यः स संयोगत्वावच्छिन्नप्रतियोगिताकाभाववानिति प्रकृतम्। न्यूनवृत्तित्वं चात्र स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्। सत्तात्वस्य न्यूनवृत्तित्ववारणाय सत्यन्तम्। गुणत्वस्य न्यूनवृत्तित्ववारणाय विशेष्यदलम्।

अथात्र किं लाघवम्। न च स्वरूपासिद्धिवारकविशेषणाप्रवेशेन लाघवमिति वाच्यम्। उभयावृत्तित्वार्थकस्य न्यूनवृत्तिपदस्य स्वरूपा-

संयोगत्वन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य घटावृत्तिसंयोगत्व-वृक्षान्यासमवेतत्वावच्छिन्नाभावस्य यावदन्तर्गतस्य वृक्षादौ स्वरूपासिद्धत्वादनुपादेयः।

लक्ष्मीः

सिद्धिवारकत्वात्, अन्यथा संयोगत्वसमानाधिकरणसत्तागुणत्वावच्छिन्नाभावस्य पक्षेऽसत्त्वात्स्वरूपासिद्धिः स्यादिति चेत्—स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्व निवेशापेक्षया स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपन्यूनवृत्तित्वनिवेशे एव लाघवादिति। इत्यर्थस्तु इति। यो यदीययावद्विशेषाभाववानित्यस्येत्यादिः। स्वरूपासिद्धत्वादिति। घटवृत्तिसंयोगे घटावृत्तिसंयोगत्वस्य वृक्षान्यासमवेतत्वस्य च विरहेण संयोगत्वन्यूनवृत्तितया तदवच्छिन्नाभावस्य हेत्वन्तर्गततया वृक्षेऽसत्वादित्यर्थः। ननु न्यूनवृत्तिधर्मे पक्षतावच्छेदकविशिष्टान्यत्वं विशेषणीयम्, वै० स्वाश्रयवृत्तिवृत्तित्व-स्वानाश्रयवृत्तिवृत्तित्वोभयसं०। एवं च घटावृत्तिसंयोगत्वस्य वृक्षपटादिसंयोगद्वयवृत्तित्वान्न पक्षतावच्छेदकविशिष्टान्यत्वमत उक्तं। वृक्षान्यासमवेतत्वेति। तथा च वृक्षान्यासमवेतत्वे स्वपदग्राह्यवृक्षत्वानाश्रयवृत्तिवृत्तित्वविरहेण पक्षतावच्छेदकविशिष्टान्यत्वमस्त्येवेति भावः। अत एव नञ्द्वयोपादानम्, अन्यथा वृक्षसमवेतत्वस्य वृक्षतदितरोभयवृत्तिसत्तावृत्तित्वेन पक्षतावच्छेदकविशिष्टान्यत्वविरहात्स्वरूपासिद्धयलग्नकतापत्तेः[1]।

न च वृक्षान्यासमवेतत्वस्य वृक्षत्ववृक्षरूपादावेव सत्वान्न संयोगत्वसामानाधिकरण्यमिति वाच्यम्। वृक्षद्वयसंयोगा-

दिव्या

१ अथ पक्षतावच्छेदकविशिष्टान्यत्वस्य वृक्षसंयोगनिष्ठतत्तद्व्यक्तित्वेपि न संभवः, तस्य वृक्षान्यकप्यादिवृत्तिवृत्तित्वात्। न च वृक्षद्वयसंयोगनिष्ठतद्व्यक्तित्वे एव तस्य संभव इति वाच्यम्। एतद् वृक्षत्वस्य पक्षतावच्छेदकत्वे उक्ततद्व्यक्तित्वेपि पक्षतावच्छेदकविशिष्टान्यत्वासंभवादिति चेन्न। वैशिष्ट्यस्य स्वविशिष्टवृत्तिवृत्तिघटितत्वेन विवक्षितत्वात्। वै० स्वानाश्रयत्व-स्वानाश्रयवृत्तिगुणानाश्रयत्वोभयसं०। तथा च कप्यादेः स्वानाश्रयत्वेपि स्वानाश्रयवृत्तिसंयोगात्मकगुणानाश्रयत्वविरहेण वृक्षसंयोगनिष्ठतद्व्यक्तित्वे विशिष्टान्यत्वसंभवादिति।

संयोगयावद्विशेषाभाव इति । मानं-मानतावच्छेदकम्, आचार्यमतेनेदं वा ।

लक्ष्मीः

न्तर्भावेण तत्सत्वात्तस्य च वृक्षान्यासमवेतत्वात् ।

ननूत्पत्तिकालावच्छेदेन वृक्षे कस्यापि संयोगव्यक्तेरसत्वाद् घटावृत्तिसंयोगाभावस्यापि वृक्षे सत्वात्कुतः स्वरूपासिद्धिरित्यत आह । **वृक्षान्येति इति कश्चित्** । तत्र प्रतियोगिव्यधिकरणतादृशसंयोगाभावस्यासत्वादिति ध्येयम् ।

**मानमिति** । अनुमानविधया संयोगसामान्याभावे मानमित्यर्थः । लिङ्गज्ञानस्य मानत्वेत्वाह । **मानतावच्छेदकमिति** । विषयतयेति शेषः । **आचार्यमतेनेति** । तन्मते ज्ञायमानलिङ्गस्यैव मानत्वादिति भावः । न च सामान्यतो व्याप्त्या सामान्यरूपेण तत्सिद्धावपि संयोगसामान्याभावत्वरूपेण तदसिद्ध्या न प्रकृतसिद्धिरिति वाच्यम् । सामान्यरूपेण व्याप्तिज्ञानस्य विशेषरूपेण च पक्षधर्मताज्ञानस्य हेतुत्वात्, तथा च यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावसमानाधिकरणाभावप्रतियोगितानवच्छेदकतज्जात्यवच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नसमानाधिकरणसंयोगीय यावद्विशेषाभावकूटवान् वृक्ष इति परामर्शादेव वृक्षः संयोगसामान्याभाववानित्यनुमितिरिति ध्येयम् ।

ननु वृक्षादौ सर्वावयवावच्छेदेन वृत्तिराकाशसंयोगो व्याप्यवृत्तिरेव, अत एव च तस्यैक्यम् । तथा च वृक्षत्वावच्छेदेन संयोगयावद्विशेषाभावान्तर्गतगगनसंयोगाभावविरहेण स्वरूपासिद्धिरित्याशंकते । **न चेति** । **सर्वावयवावच्छेदनेति** । शाखामूलादिसर्वावयवावच्छेदनेत्यर्थः । एतत्कथनं च वृक्षे तत्तदवयवावच्छिन्नगगनस्यैक्यप्रतिपादनार्थम् । न च वृक्षगगनसंयोगाद् गगनघटसंयोगस्याऽप्यभेदोऽस्तु लाघवादिति वाच्यम् । सर्वेषां गगनसंयोगानामैक्ये यत्रैकक्रियया एकत्र संयोगनाशः तत्र निष्क्रियेप्यपरत्र संयोगनाशापत्तेः वृक्षविनाशात्तत्संयोगनाशे विद्यमानघटादिष्वपि नाशापत्तेश्चेति[1] ।

दिव्या

१ न च क्रियया आश्रयनाशेन च संयोगनाशो न स्वीक्रियते लाघवादिति

न च सर्वावयवावच्छेदेन वृक्षादौ गगनादेरेक एव संयोगो लाघवादिति तस्यैवाभावविरहात्, संयोगयावद्विशेषाभावत्वं पक्षे स्वरूपासिद्धमिति वाच्यम्। अतिप्रसंगभंगाय शाखादितत्तदवयवावच्छिन्नवृत्तिकसंयोगं प्रति तत्तदवयवत्वेन हेतुत्वस्यावश्यकतया वृक्षे व्याप्यवृत्तिगगनस्याऽसंभवादिति भावः।

---

लक्ष्मीः

**लाघवादिति**। अनन्तसंयोगकल्पने गौरवादिति भावः। **तस्यैव**। गगनसंयोगाभावस्यैव। **स्वरूपासिद्धमिति**। गगनसंयोगाभावस्य संयोगयावद्विशेषाभावान्तर्गतस्य वृक्षेऽभावादिति भावः। ननु समवायेन तत्तत्संयोगं प्रति तादात्म्येन वृक्षत्वेन कार्यकारणभावेऽन्वयव्यभिचारः, तादात्म्येन वृक्षस्य मूले सत्त्वात्, तत्र च शाखावृत्तिकपिसंयोगाभावादतोऽवच्छेदकतासंबन्धेन तत्संयोगं प्रति तादात्म्येन तत्तदवयवत्वेन कारणत्वं वाच्यम्, एवं विशिष्यकारणत्वे गगनसंयोगस्य निखिलवृक्षावयवावच्छिन्नतया तं प्रति तत्तदवयवत्वेनानन्तकारणत्वकल्पनापेक्षया वृक्षत्वेन द्रव्यत्वेन कारणत्वे लाघवम्, तथा च गगनसंयोगस्यैक्यं निष्प्रत्यूहमिति चेत्तत्राह। **अतिप्रसंगभंगायेति**। परस्परजन्ये व्यभिचारवारणायेत्यर्थः। अवच्छेदकतासंबन्धेन संयोगस्य मूलेपि सत्वेन तत्र तादात्म्येन शाखारूपकारणाभावेन व्यतिरेकव्यभिचारवारणायेति यावत्। **आवश्यकतयेति**। तथा च मूलावच्छिन्नवृत्तिकसंयोगं प्रति तादात्म्येन मूलस्य कारणतया नोक्तव्यभिचारः। एवं च वृक्षत्वेनाऽतिरिक्तकार्यकारणभावकल्पने एव गौरवाद् गगनसंयोगोपि अव्याप्यवृत्तिरेव, स च नैकः (गगनसंयोगस्य लाघवेन ऐक्ये फलावच्छिन्नस्य तस्य शाखावच्छिन्नत्वे शाखायां फलस्यासत्वेन व्यतिरेकव्यभिचारः स्यात् विभुसंयोगान्यस्य निवेशेतु महागौरवं) अतो न स्वरूपासिद्धिः।

---

दिव्या

वाच्यम्। तथा सति पाकेनाऽऽश्रयनाशतो वा रूपनाशस्याप्यप्रामाणिकत्वापातात्, एवं चैकरूपवादिन एव विजयेरन् अनुभवविरोधिलाघवस्याकिञ्चित्करत्वादिति सिद्धम्। मम तु शाखादौ क्रियायां वृक्षेपि संयोगप्रतिद्वन्द्वि विभागोत्पत्त्या निष्क्रियदेशावच्छिन्नोपि संयोगो नश्यत्येवेति।

यत्तदर्थयोरननुगमात्, एकावच्छेदेन संयोगयावद्विशेषाभाववत्त्वस्योपाधित्वाच्च ।

---

प्राचां मते यत्तदर्थयोरनुगतत्वादाह एकावच्छेदनेति । इदमुपाधेः साधनाव्यापकत्वरक्षायै ।

---

लक्ष्मीः

ननु अवच्छेदकतासंबन्धेन तत्तदवयवावच्छिन्नवृत्तिकत्वविशिष्टसंयोगं प्रति तादात्म्येन तत्तदवयवत्वेन कारणत्वे तच्छाखावच्छिन्नवृत्तिताविशिष्टगगनसंयोगस्य शाखान्तरेऽसत्वेनातिप्रसंगविरहाद् गगनसंयोगस्य नानात्वस्वीकारे प्रमाणाभाव इति चेन्न । लाघवेन तत्तदवयवाच्छिन्नवृत्तिकत्वोपलक्षितसंयोगं प्रति तादात्म्येन तत्तदवयवस्य कारणत्वे गगनसंयोगस्यैकत्वेऽतिप्रसंगतादवस्थ्यात् । न च यत्र कपिक्रियया शाखाद्यवच्छेदेन वृक्षे संयोग उत्पन्नस्तत्र स्वावच्छिन्नवृत्तिकत्वोपलक्षितसंयोगस्य कपिचरणेपि सत्त्वात्तत्र तादात्म्येन शाखाद्यभावाद् व्यभिचार इति वाच्यम् । अनुयोगितासंबन्धस्यैव कार्यतावच्छेदकसंबन्धत्वोपगमात् ।

यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानिति व्याप्तौ दोषमाह । दीधितौ—यत्तदर्थयोरननुगमादिति । हेतुसाध्यघटकयत्तच्छब्दार्थयोः संयोगत्वघटत्वावच्छिन्नयोरित्यर्थः । अननुगमादिति । एकरूपेण निवेशासंभवादित्यर्थः । यत्पदनैकधर्मावच्छिन्नोपादाने तत्पदेन तद्धर्मावच्छिन्नस्यैवोपादानमिति नियमे मानाभावादिति भावः । यत्तत्पदयोः सर्वनामत्वेन यत्तद्भ्यां घटसंयोगयोरूपादातुं शक्यतया घटविशेषाभावसंयोगसामान्याभावयोर्व्याप्त्यभावेन विशेषव्याप्तौ पर्यवसानात् । तथा च घटविशेषाभावकूटघटसामान्याभावयोर्व्याप्तेः संयोगसामान्याभावसिद्धावनुपयोगित्वेन संयोगविशेषाभावे संयोगसामान्याभावव्याप्तेश्चाग्रे 'एतेनेत्यादिना' निराकरिष्यमाणत्वान्नोक्तानुमानसंभव इति भावः ।

यत्तदर्थयोरनुगतत्वादिति । बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने यत्तत्पदयोरनुगतशक्तिरित्यन्यत्र व्यवस्थापितत्वादिति भावः । इदन्तु बोध्यम् । प्रकृते यत्त्वतत्त्वयोरननुगतत्वेपि न क्षतिः ।

न चैवं तत्तत्संयोगाभावस्य गुणे व्याप्यवृत्तित्वात् एकावच्छेदेन साध्यव्याप-

---

जातिर्जातिमती जातित्वात् घटत्ववदित्यनुमानादेव तत्सिद्धेः। जातिमत्ता च स्वतादात्म्य—स्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्न-प्रतियोगिताकयावदभावव्यापकाभावप्रतियोगितावच्छेदकत्वोभयसं०। तथा च नानुगतत्वम्। एतादृशपरंपराया अनभ्युपगमाभिप्रायेण यत्तदर्थयोरित्याद्युक्तमिति ध्येयम्।

अन्ये तु यो यन्निरूपितवृत्तितावान् स तन्निष्ठाभावप्रतियोगितावच्छेदकः। वृत्तिता च स्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्न-प्रतियोगिताकाभाववत्त्वसंबन्धावच्छिन्नेत्याहुः।

**इदम्।** एकावच्छेदेनेति विशेषणम्। **साधनाव्यापकत्वरक्षायै।** अन्यथा हेतूपाध्योरैक्येन स्वस्मिन्स्वाव्यापकत्वं न स्यादिति भावः। ननु 'निरवच्छिन्नवृत्तित्वार्थक' एकावच्छेदेनेति विशेषणानुपादानेपि संयोगयावद्विशेषाभाववत्त्वरूपोपाधेः साधनाऽव्यापकत्वमक्षतमेव, संयोगयावद्विशेषाभाववत्त्वस्यावृत्तितया साधनसमानाधिकरणाभाव-प्रतियोगित्वरूपाऽव्यापकत्वसत्वादिति चेन्न। साधनसमानाधिकरण-प्रतियोगिव्यधिकरणाभावप्रतियोगित्वमेव साधनाव्यापकत्वम्। अन्यथा संयोगी द्रव्यत्वादित्यादि सद्धेतुस्थले संयोगयावद्विशेषा-भावस्य वर्तमानत्वादुपाधित्वापत्तेः। प्रतियोगिवैयधिकरण्यघटित-साध्यव्यापकत्वसत्वात्। प्रतियोगिवैयधिकरण्याघटितसाधनाव्याप-कत्वस्योक्तरीत्या सत्वाच्च। वस्तुतस्तु व्यापकताया द्वैविध्याद् भेदस्य व्याप्यवृत्तितानये संयोगयावद्विशेषाभाववद् भेदस्य वृक्षादावसत्वेन साधनसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वाभावरूपाऽव्यापक-त्वस्य यावद्विशेषाभावेऽसत्वादेकावच्छेदेनेति।

तथा च गुणादौ एकावच्छेदेन संयोगयावद्विशेषाभावसत्त्वा-त्साध्यव्यापकत्वम्, वृक्षे तदसत्वात्साधनाव्याकत्वं चोपाधेर्बोध्यम्। एकावच्छेदेनेत्यस्य यथाश्रुतार्थाभिप्रायेण शङ्कते। **नचेति।** यत्किञ्चि-दवच्छेदेनेति तस्य यथाश्रुतोर्थः। **दुर्घटमिति।** यथाश्रुते गुणनिष्ठायाः यावत्संयोगाभावाधिकरणतायाः व्याप्यवृत्तितया[1]ऽवच्छेदकविरहेणो-पाधेः साध्यव्यापकत्वानिर्वाहात्। न च गुणनिष्ठायाः यावत्संयोगा-भावाधिकरणतायाः व्याप्यवृत्तित्वेपि गुणत्वावच्छिन्नत्वमावश्यकम्,

---

१ निरवच्छिन्नवृत्तितया।

कत्वं दुर्घटम्, व्याप्यवृत्तेरवच्छेदकानङ्गीकारादिति वाच्यम्। एकावच्छेदेनेत्यस्य निरवच्छिन्नवृत्तिकत्वविशिष्टस्य विवक्षितत्वात्।

---

लक्ष्मीः

अन्यथा धर्मितावच्छेदकप्रकारकज्ञानाभावेन गुणादौ तदभावग्रहा-संभवादिति वाच्यम्। अव्याप्यवृत्तितानियामकीभूतावच्छेदकतायाः अवच्छेद्यताया वा विवक्षितत्वात्। तथा च गुणादौ साध्यव्यापकत्वं दुर्घटमिति शंकितुराशयः। साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः। साध्यीभूत संयोगसामान्याभावस्य गुणे सत्वेन तत्र यत्किञ्चिदवच्छेदेन संयोगयावद्विशेषाभाववत्व-रूपोपाधिविरहान्न साध्यव्यापकत्वमिति समुदितार्थः। **विवक्षितत्वा-दिति।** तथा च निरवच्छिन्नवृत्तिकत्वविशिष्टसंयोगयावद्विशेषा-भाववत्वस्य विवक्षितत्वादित्यर्थः। तस्य साध्यव्यापकत्वं गुणे, द्रव्ये च हेतोः सत्वेन तत्र च निरवच्छिन्नवृत्तिकत्वविशिष्टसंयोग-यावद्विशेषाभाववत्वविरहेण साधनाव्यापकत्वं बोध्यम्। एवं च साध्यव्यापकतानिर्वाहार्थं यथा श्रुतार्थपरित्याग इत्यावधेयम्।

ननु उपाधेर्दूषकताबीजं व्याप्तिधीविरोधित्वम्, विरोधित्वं च न साक्षात् किन्तु व्यभिचारानुमापकत्वेन, यथा धूमवान् वह्नेरित्यत्राऽऽर्द्रेन्धन-संयोग उपाधिः, ततश्च वह्निर्धूमव्यभिचारी धूमव्यापकाऽऽर्द्रेन्धन-संयोगव्यभिचारित्वादित्यनुमानेन हेतौ साध्यव्यभिचारनिश्चये व्याप्तिज्ञानं प्रतिबध्यते इति सार्वजनीनम्। प्रकृते च संयोगसामा-न्याभाव संयोगयावद्विशेषाभावयोः समान्यत एव व्याप्तेर्गृहीतत्वेन तत्र सामान्यत एव साध्योपाध्योर्व्याप्तिनिश्चयस्य विरोधित्वं वाच्यम्, साध्योपाध्योः सामान्यतो व्याप्तिर्न संभवति कपिसंयोग-सामान्याभावव्यापकत्वस्य निरवच्छिन्नवृत्तिकत्वविशिष्टकपिसंयोग-यावद्विशेषाभावकूटवत्वेऽभावात्, इत्याशंकते। **नचेति।** वाच्यमि-त्यनेनान्वयः। **तथापि।** निरवच्छिन्नवृत्तित्कत्वविशिष्टत्वोक्तावपि। **तदीय यावद्विशेषाभावस्य।** कपिसंयोगयावद्विशेषाभावस्य। **असत्वादिति।** वृक्षादौ किञ्चिदवच्छिन्नस्यैव कपिसंयोगाभावस्य सत्वादिति भावः। उक्तव्याप्तौ साध्यविधया प्रवेशादिति। साध्य-

नचाऽभिघातादिसंयोगसामान्याभावस्य वृन्ते सत्वात् तत्र च निरवच्छिन्न-वृत्तिकत्वविशिष्टस्य तदीय यावद्विशेषाभावस्यासत्त्वादेवमपि उपाधेः साध्याव्याप-कत्वमिति वाच्यम् । गुणविभाजकजातेरेव हेतुसाध्ययोः प्रवेशात् ।

लक्ष्मीः

साधनयोर्व्याप्तौ कम्बुग्रीवादिमत्वमादाय व्यभिचारवारणाय जात्यवच्छिन्नाभावस्योक्तत्वादित्यर्थः । जात्यवच्छिन्नाभावस्यैवेत्यनेन जातिप्रवेशस्य स्मारितत्वात् । अत एवोपाधिदानार्थं जात्यवच्छिन्ना-भावप्रवेशो नोचित इत्याशंकापि निरस्ता । न च तथापि कपिसंयोगा-भावस्य संयोगत्वरूपजात्यवच्छिन्नप्रतियोगिताकतया उपाधेः साध्या-व्यापकत्वतादवस्थ्यमिति वाच्यम् । जातिमात्रावच्छिन्नप्रतियोगिता-काभावस्य प्रवेशात् । तदर्थश्च जातिगतैकत्ववृत्तिप्रतियोगिताका-भावः । वृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-नुयोगितावच्छेदकत्व सं० । तेन संयोगघटोभयाभावमादाय न सिद्धसाधनमिति ध्येयम् ।

**अतथात्वेन ।** जातिमात्रावच्छिन्नप्रतियोगिताकत्वाभावेन । **तं प्रति ।** कपिसंयोगाभावं प्रति । **तदीययावद्विशेषाभावस्य ।** कपिसंयोगीय यावद्विशेषाभावस्य । **उक्तरूपेण ।** निरवच्छिन्नवृत्ति-कत्वरूपेण । **वृत्त्यभावात् ।** कपिसंयोगाभावस्य साध्यनन्तर्गतत्वा-दिति यावत् ।

अभिघातसामान्याभावस्य जातिमात्रावच्छिन्नप्रतियोगिताकत्वेन साध्यान्तर्गततया तस्य च वृन्ते सत्त्वातत्र च निरवच्छिन्नवृत्तिकत्व-विशिष्टाभिघातविशेषाभावस्यासत्त्वात्साध्योपाध्योर्व्याप्तिभङ्ग इत्या-शंकते । **न चेति ।** वाच्यमिति परेणान्वयः । **तत्र च ।** वृन्ते च । **तदीयेति ।** अभिघातीयेत्यर्थः । **एवमपि ।** जात्यवच्छिन्नाभावोक्ता-वपि । **गुणविभाजकजातेरेवेति ।** एव कारेण गुणविभाजकविभा-जकत्वव्यावृत्तिः । एवं चाभिघातत्वस्य संयोगविभाजकत्वेन गुण-विभाजकत्वाभावात्तदवच्छिन्नाभावस्यापि साध्यानन्तर्गतत्वान्न व्याप्तिभङ्गः[1] ।

टि० १ गुणविभाजकत्वं च गुणत्वव्याप्यत्वे सति गुणत्वव्याप्यव्याप्यजातित्वम् ।

केचित्तु एकावच्छेदेनेत्यस्य अवच्छेदकतासंबन्धेन तदभावाधिकरणीभूतदेशस्यावच्छेद्यतासंबन्धेनाभाववत्त्वेनेत्यर्थः । तथा च तद्विशिष्टयावद्विशेषाभाववत्वमुपाधिरित्याहुः । तच्चिन्त्यम् ।

---

लक्ष्मीः

**केचित्त्विति** । तथा चाऽवच्छेदकतासंबन्धावच्छिन्नप्रतियोगिताकसंयोगाभावाधिकरणीभूतो यो देशः शाखामूलादिरूपः अवच्छेद्यतासंबन्धावच्छिन्नप्रतियोगिताकतादृशदेशाभावविशिष्टसंयोगयावद्विशेषाभाववत्वमुपाधिरित्यर्थः ।

---

दिव्या

तच्च गुणत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकजातिमदन्यजातित्वम् । जातिमत्ता च स्वसमानाधिकरण्य-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसं० । वस्तुतस्तु गुणसूत्रजन्यबोधीयोद्देश्यतावच्छेदकत्वमेव गुणविभाजकत्वम् । **हेतुसाध्ययोः प्रवेशादिति** । हेतुघटकतया साध्यघटकतया च गुणविभाजकजातिः प्रवेश्येत्यर्थः । **अत्रेदं बोध्यम्** । हेतुघटकतया गुणविभाजकजातेः प्रवशे कृते एव साध्तघटकतया प्रवेशो । न तु द्विधा तेन एकत्रैव प्रवेश्यत्वमिति पूर्वपक्षः समाहितः । तथा च गुणविभाजकजातिमात्रावच्छिन्नप्रतियोगिताकाभाववान् यः स निरवच्छिन्नवृत्तिकत्वविशिष्टगुणविभाजकजातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववानिति साध्योपाध्योर्व्याप्तिः । तथा च गुणविभाजकजातिपदेन संयोगत्वस्यैव धर्त्तव्यतया तदवच्छिन्नाभाववति गुणे निरवच्छिन्नवृत्तिकत्वविशिष्टसंयोगयावद्विशेषाभावस्य स्वत्वादुपाधेः साध्यव्यापकत्वं सुसंपन्नमिति ।

अथ गुणविभाजकत्वनिवेशेपि ज्ञानविशेषाभावकूटहेतुना ज्ञानसामान्याभावेसाधने उपाध्यभावान्न सर्वत्रोपाधिसंभवः, घटाद्यवच्छेदेन ज्ञानसामान्याभाववति आत्मनि निरवच्छिन्नवृत्तिकत्वविशिष्टयावद्ज्ञानविशेषाभावासत्वादुपाधेः साध्याव्यापकत्वात्, ज्ञानादेरव्याप्यवृत्तित्वादिति चेन्न । गुणविभाजकजातौ सविषयकान्यवृत्तित्वेनापि विशेषणीयत्वात् । च तुः क्षणवृत्तिजन्यवृत्तित्वेन विशेषणीया इत्यपरे । तेन देशान्तरावच्छेदेन शब्दाभाववति निरवच्छिन्नवृत्तिकत्वविशिष्टयावच्छब्दविशेषाभावासत्वेपि न क्षतिः । एवं दैशिकाव्याप्यवृत्तित्वावच्छेदकत्वमपि विशेषणीयमिति संक्षेपः ।

ननूपाधिदानार्थं गुणविभाजकत्वनिवेशोऽयुक्त इति चेन्न । यैर्द्रव्ये संयोग-

यत्तु एकावच्छेदनेत्यस्य परस्परानवच्छेकानवच्छेद्यवृत्तिकत्वविशिष्टेत्यर्थमाह ।

लक्ष्मीः

यत्त्विति । परस्परशब्दः एतत्संयोगाभावपरः । नञर्थोऽत्यन्ताभावः । स्वाभावावच्छेदकत्वसंबन्धेन तत्संयोगाभावविशिष्टो देशः स एव परस्परानवच्छेदको देशः तथा च तत्तत्संयोगाभावानवच्छेदकीभूतदेशानवच्छिन्नवृत्तिकत्वविशिष्ट तदीय यावद्विशेषाभाववत्त्वमुपाधिरित्यर्थः । संयोगसामान्याभाववति गुणे तत्तत्संयोगाभावस्य परस्परानवच्छेदको यो देशः "परस्परसंयोगाधिकरणो देशः" तदनवच्छिन्नवृत्तिकत्वविशिष्टस्य तत्तत्संयोगीय यावद्विशेषाभाववत्त्वस्य सत्वादुपाधेः साध्यव्यापकता, संयोगयावद्विशेषाभावरूपहेतुमति च वृक्षे तत्तत्संयोगाभावयोः परस्परानवच्छेदकदेशानवच्छिन्नवृत्तिकत्वविशिष्टस्य तादृशसंयोगयावद्विशेषाभावस्यासत्त्वान्निरुक्तोपाधेः साधनाव्यापकतापि[1] ।

वायौ रूपसामान्याभावे साध्ये रूपविशेषाभावकूटहेतौ परस्परानवच्छेदकानवच्छिन्नतत्तद्रूपयावद्विशेषाभावउपाधिर्न स्यात्, तत्तद्रूपादेर्व्याप्यवृत्तितया तद्विशेषाभावस्यापि तथात्वेन तदवच्छेदकीभूतदेशस्याऽप्रसिद्धतया तदनवच्छेदकस्याप्यप्रसिद्धत्वादित्याशयेन दूषयति । तन्नेति । व्याप्यवृत्तिरूपादिनां । निरवच्छिन्नवृत्तिकत्वरूपादीनां । विशेषाभावस्य । तद्रूपाभावस्य । अवच्छेकाप्रसिध्या । निरवच्छिन्नवृत्तिकतयेति शेषः । तदनवच्छेदकस्य ।

दिव्या

सामान्याभावो न स्वीक्रियते तैर्यः संयोगसामान्याभाववान् स निरवच्छिन्नवृत्तिकत्वविशिष्टसंयोगयावद्विशेषाभाववानिति साध्योपाध्योः सामान्यव्याप्तिः स्वीक्रियते, एवं चाभिघातसामान्याभाववति वृक्षे निरवच्छिन्नवृत्तिकत्वविशिष्टाभिघातयावद्विशेषाभावस्याऽसत्वाद् व्यभिचारः स्यादतो जातौ गुणविभाजकत्वप्रवेश आवश्यक इति प्राञ्चः ।

१ नन्वत्र नञ्द्वयोपादानं किमर्थमिति चेन्न । तत्तत्संयोगाभावावच्छेदकान्तर्देशावच्छिन्नत्वस्य सर्वस्मिन्नेव तत्संयोगाभावे सत्वादुपाधेर्साधनाव्यापकत्वताद्वस्थ्यापातात् । परस्परावच्छेदकं यद्यत्तदनवच्छिन्नत्वं तु निवेश्यम् । तस्य निरवच्छिन्नत्वे एव पर्यवसानेन पूर्वकल्पाविशेषादिति ।

तत्र । व्याप्यवृत्तिरूपादीनां विशेषाभावस्यावच्छेदकाप्रसिद्ध्या तदनवच्छेदकस्याप्यसंभवेन तत्रैव साध्याव्यापकत्वतादवस्थ्यादिति दिक् ।

---

लक्ष्मीः

तद्रूपाभावानवच्छेदकस्य । तत्रैव । रूपसामान्याभावसाध्यकस्थले एव । साध्याव्यापकत्वतादवस्थ्यादिति । रूपसामान्याभाववति गुणादौ रूपाभावानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टरूपयावद्विशेषाभावस्याप्यसंभवादुपाध्यभावस्यैव सत्वेन साध्यव्यापकत्वाभावादिति भावः ।

ननु प्रकृतेपि रूपविशेषाभावकूटरूपोपाधेः साधनाव्यापकत्वाभावेन कथं तन्मतेपि उपाधिसंभव इति चेन्न । तत्रोपाधित्वं साध्यतावच्छेदकावच्छिन्नव्यापकत्वे सति साधनतावच्छेदकाश्रयाऽव्यापकत्वम्, न तु साधनतावच्छेदकावच्छिन्नाव्यापकत्वम्, प्रयोजनाभावाद् गौरवाच्च । तथा च निरवच्छिन्नवृत्तिकत्वविशिष्टरूपविशेषाभावकूटात्मकोपाधेः 'साधनतावच्छेदकाश्रय' घटादिनिष्ठाभावप्रतियोगित्वसत्त्वात्, साधनतावच्छेदकाश्रयसमानाधिकरणाभावप्रतियोगित्वमक्षतमेव ।

न चोक्तरूपस्योपाधित्वे द्रव्यत्वसाध्यकविशिष्टसत्ताहेतोः सोपाधित्वापत्तिः । तत्र साध्यव्यापकसाधनाव्यापकद्रव्यत्वरूपोपाधेः सत्वादिति वाच्यम् । विशिष्टसत्तायाः शुद्धसमवायेन हेतुतायां द्रव्यत्वव्यभिचारितया तत्रोपाधित्वस्येष्टत्वात् । विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशिष्टप्रतियोगिकत्वस्यैव संसर्गतया भानात्, यत्र विशिष्टप्रतियोगिकत्वविशिष्टसमवायेन हेतुता तत्रैव विशिष्टसत्तायां द्रव्यत्वव्याप्यत्वव्यवहारात्, तत्र साध्यव्यापकद्रव्यत्वादेः प्रकृतहेतुतावच्छेदकसंबन्धेन साधनाऽव्यापकत्वविरहादेव सोपाधित्वापत्त्यसंभवादिति ध्येयम् ।

दीधितौ । अयं संयोगसामान्याभाववानित्यादि । एतद्व्याप्तिनिष्कर्षेपि पूर्ववद्बोध्यः। इत्यस्यैवेति । एव कारेणैतत्संशयस्य व्यवच्छेदः । तथा च संयोगसामान्याभावस्येवाऽभाववत्त्वस्यापि केवलान्वयितयाऽभाववत्वस्य हेतुत्वसंभवादिति भावः । न च पूर्वहेतावपीदं कुतो नोक्तमिति वाच्यम् । तत्र घटपटादिघटितहेतावितरांशानिवेशे व्यभिचारात् । अथ परमाणुद्वयसंयोगस्याभावो पर-

**एतेन अयं संयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादिति निरस्तम्। व्यर्थविशेषणत्वादप्रयोजकत्वान्निर्गुणत्वादेरुपाधित्वाच्च।**

---

यत्तद्भ्यां विना कृतमनुगतानुमानमाशंक्य निषेधति। एतेनेति। वक्ष्यमाणदोषेणेत्यर्थः। व्यर्थेति। संयोगसामान्याभावस्य तन्मते केवलान्वयितया तत्साध्यतायाममावबत्त्वादित्यस्यैव सम्यक्त्वादिति भावः। अथाऽभाववत्त्वादिकमेव तर्हि हेतुरस्तु अत आह। अप्रयोजकत्वादिति। अनुकूलतर्कविरहादित्यर्थः। ननु निरूपाधिकत्वमेव प्रयोजकमत आह। निर्गुणत्वादेरिति। आदिना द्रव्यभिन्नत्वादेः परिग्रहः।

---

लक्ष्मीः

माणौ न संभवति, तस्य निरवयवत्वात्। एवं च संयोगाभावस्य केवलान्वयित्वाभावे परमाणावेव व्यभिचारवारणाय हेतुविशेषणसार्थक्यसंभवाद्वैयर्थ्यकथनमसंगतमिति चेन्न। परमाणावपि दिग्विशेषावच्छेदेन संयोगाभावसत्त्वात्। उक्तं चोपस्कारे शंकरमिश्रैः। **अभाववत्त्वादिकमेवेति।** एवकारेण संयोगयावद्विशेषपर्यन्तव्यावृत्तिः। तथा चायं संयोगसामान्याभाववान् अभाववत्त्वादित्येवास्तु इति भावः। तदाप्याह। **अनुकूलतर्कविरहादिति।** व्यभिचारशंकानिराकरणानुकूलतर्कविरहादिति भावः। अभाववत्त्वं यदि संयोगसामान्यभावव्यभिचारिस्यात्तदा न किमपि दूषणमित्यनुकूलत्तर्काभावेन हेतौ व्यभिचारसंशयाद् व्याप्तिग्रहानुत्पत्त्या संयोगसामान्याभावानुमित्यनुत्पत्तेरिति तत्त्वम्। **निरुपाधिकत्वमेवेति।** संयोगयावद्विशेषाभावः यदि संयोगसामान्याभावव्यभिचारी स्यात्तर्हि उपाधिमान् स्यादिति तर्क एव प्रयोजक इत्यर्थः। स एव नास्तीत्याह। **उपाधित्वाच्चेति।** ननु निर्गुणत्वं यदि गुणसामान्याभाववत्त्वं तदा न साधनाव्यापकत्वं उत्पत्तिकालावच्छेदेन संयोगाभाववद्स्यापि द्रव्येऽङ्गीकारादाह। **आदिनेति।** तथा च द्रव्यभिन्नत्वस्य वृत्तेऽसत्वात्साधनाव्यापकत्वम्। गुणादौ साध्यव्यापकत्वं च बोध्यम्। उपाधेर्दूषकतामुपक्रमते। **यद्यपीति। स्वाभावेन।** उपाध्यभावेन

न च प्रतियोग्यनवच्छेदकतयैव वृक्षत्वादेरभावावच्छेद-

---

अत्र यद्यपि निर्गुणत्वोपाधेः स्वाभावेन साध्याभावोन्नायकतया न दोषत्वम्, संयोगस्यैव साध्याभावतया वृक्षादौ तस्येष्टत्वात्, नापि व्यभिचारोन्नायकतया तत एव तथापि स्वव्याप्यत्वेन साध्यस्य पक्षावृत्तित्वोन्नायकतया दूषकत्वं बोध्यम्। संयोगसामान्याभावो न वृक्षवृत्तिः निर्गुणत्वव्याप्यत्वादित्यनुमानेनापि वृक्षः संयोग-सामान्याभाववानित्यनुमितेः प्रतिरोधादिति ध्येयम्।

---

लक्ष्मीः

हेतुना। **साध्याभावोन्नायकतया**। साध्याभावानुमापकतया। अनुमानं च वृक्षो न संयोगसामान्याभाववान् निर्गुणत्वरूपोपाध्यभाभावादित्याकारकम्। **व्यभिचारोन्नायकतया**। संयोगयावद्विशेषाभाववत्त्वं संयोगसामान्याभावव्यभिचारि निर्गुणत्वव्यभिचारित्वादित्यनुमानेनापि उपाधेर्दोषत्वं न निर्वहतीत्यर्थः। **तत एव**। संयोगस्य इष्टत्वादेव। संयोगसामान्याभावस्य केवलान्वयितया प्रकृतहेतोः संयोगाभाववद्वृत्तित्वस्येव संयोगवद्वृत्तित्वस्यापीष्टत्वादिति भावः। उपाधेर्दूषकतामाह। **तथापीति**। संयोगस्येष्टत्वेपीत्यर्थः। **इत्यनुमानेनापि**। इत्यनुमित्यापि। **प्रतिरोधादिति**। प्रतिबन्धादित्यर्थः। उपाधेः साध्यव्यापकत्वे साध्यस्योपाधिव्याप्यत्वम्, तथा च व्यापकाभावाद् व्याप्याभावसिद्धिरिति भावः। समानविषयकज्ञानस्य विरोधित्वे विवादसूचनाय ध्येयमित्युक्तम्।

**दीधितौ। नचेति।** अस्याऽभावावच्छेदकत्वमित्यनेनान्वयः। **प्रतियोग्यनवच्छेदकतयैवेति**। प्रतियोगिनः-संयोगस्याऽनवच्छेदकत्वेन हेतुनेत्यर्थः। **तदभावावच्छेदकत्वमिति**। प्रतियोग्यभावावच्छेदकत्वमित्यर्थः। संयोगाभावावच्छेदकत्वमिति यावत्। वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगानवच्छेदकत्वादित्यनुमानेन वृक्षत्वावच्छेदेन संयोगसामान्याभावसिद्धिर्भविष्यतीति शंकातात्पर्यम्। सामान्यव्याप्तिमाह। **य इति**। वृक्षत्वमित्यर्थः। **यद्धर्मस्य**। प्रतियोगिनः। संयोगस्येति यावत्। **सः**। वृक्षत्वं। **तद-**

**कत्वम् । गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्व-प्रसंगात् ।**

---

ननु यो यद्धर्मस्यानवच्छेदकः स तदभावस्यावच्छेदक इति व्याप्त्यैव वृक्षत्वादेः संयोगाभावावच्छेदकत्वं सेत्स्यतीत्याशंक्य निराचष्टे । न चेति । गुणादीति । तथा च व्यभिचारान्नोक्तव्याप्तेरिति भावः ।

ननु वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेदकत्वादिति विशिष्यैव व्याप्तिर्वाच्या, प्रमेयत्व-सत्त्वादेः पक्षसमत्वादतः स्वरूपासिद्धिमाह । यथाचेति । प्रतिदण्डमिति । भिन्नत्वेपीति परेणान्वयः । ननु अव्यहितपूर्व-

---

लक्ष्मीः

**भावस्य ।** प्रतियोग्यभावस्येति । संयोगाभावस्येति यावत् । **तथा च ।** गुणाभावावच्छेदकत्वाभाववति प्रमेयत्वे गुणानवच्छेदकत्वसत्वे च । आपत्तेरापाद्यव्यतिरेकनिश्चयाधीनतया प्रसंगादित्युक्त्या व्यभिचारलाभः । एवं च गुणानवच्छेदकत्वस्य प्रमेयत्वे सत्वेन तत्र गुणाभावावच्छेदकत्वरूपसाध्यस्याऽसत्वाद् व्यभिचारान्नोक्ताव्याप्तिः साधीयसीति भावः । **नन्विति । विशिष्यैव व्याप्तिर्वाच्येति ।** यथा वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेदकत्वादिति विशेषव्याप्तिस्तथैव प्रमेयत्वं सत्ता वा, गुणसामान्याभावावच्छेदकं गुणसामान्यानवच्छेदकत्वादिति व्याप्तिरस्तु । एवं च न व्यभिचारनिश्चयः, तयोः सन्दिग्धसाध्यवत्वेन पक्षसमत्वादित्याह । **प्रमेयत्व-सत्त्वादेःपक्षसमत्वादिति ।** सन्दिग्धसाध्यकत्वादित्यर्थः । तथा च प्रमेयत्वसत्वादावपि साध्याभावस्य 'गुणसामान्याभावावच्छेदकत्वस्य सन्दिग्धतया पक्षसमे व्यभिचारग्रहस्य व्याप्तिग्रहाप्रतिबन्धकतया निरुक्तविशेषव्याप्तिग्रहोत्पत्तौ न विवाद इति भावः ।

तदुक्तम् । नहि पक्षे पक्षसमे वा व्यभिचारो दोष इति । नन्वत्र प्रमेयत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेदकत्वादित्यनुमानेन प्रमेयत्वावच्छेदेन साध्यसिद्धौ वृक्षेपि तत्सिद्धेरावश्यकत्वेन वृक्षे तत्साधनं ग्रन्थकृतामनुचितमिति चेन्न । प्रमेयत्वं हि प्रमाविषयत्वम्, तच्च विषयभेदेन भिन्नमिति द्रव्यवृत्तिप्रमेयत्वस्य पक्षत्वे स्वरूपासिद्धिः, गुणादिनिष्ठस्य तथात्वे सिद्धसाधना-

यथा च घटपूर्ववर्त्तित्वस्य प्रतिदण्डं-वह्निसामानाधिकरण्यस्य वा प्रतिधूमं भिन्नत्वेपि दण्डत्वं धूमत्वं वा तत्सा-

---

वर्त्तिताया अवच्छेदकं न दण्डत्वमतिप्रसंगात्, किन्तु अव्यवहितपूर्ववर्त्तिजातीयतायाः, सा च न भिन्ना, अतः संयोगस्थल एवानुरूपं दृष्टान्तमाह। तत्सामान्यस्येति। घटपूर्ववृत्तित्वसामान्यस्य वन्हिसामानाधिकरण्यसामान्यस्यचेत्यर्थः।

केचित्तु कथितव्याप्तावप्रयोजकत्वम्, अन्यथा तदभावानवच्छेदकत्वहेतुना तदवच्छेदकत्वमेव कुतो न वृक्षत्वादेः साध्यते, वृक्षत्वावच्छेदेन तत्तत्संयोगव्यक्तीनामसत्वेपि संयोगसामान्यस्य संभवादित्यभिप्रायकोयं ग्रन्थ इत्याहुः।

---

लक्ष्मीः

पक्ष्या वृक्षत्वावच्छेदेन तत्साधनात्। न च गगनाभाव एव पक्षः क्रिन्न कृत इति वाच्यम्। तस्यापि अधिकरणभेदेन भिन्नत्वात्। नचैवं सत्तैव तथास्तु इति वाच्यम्। दीधितिकृता सत्ताया अस्वीकारात्।

अतः। विशेषव्याप्तौ व्यभिचाराभावात्। स्वरूपासिद्धिं। वृक्षत्वे संयोगसामान्यावच्छेदकत्वमाह। दीधितौ। यथाचेति। केचित्तु यद्धर्माश्रयानवच्छेदकमित्यत्र यत्पदेन व्याप्यवृत्त्यवृत्तिधर्म एव विवक्षणीयः, गुणत्वादेश्च व्याप्यवृत्तिरूपादिवृत्तितया तदाश्रयानवच्छेदकत्वस्य न तदवच्छिन्नाभावावच्छेदकतापादकत्वमिति व्यभिचारवारणेपि वृक्षत्वादौ संयोगसामान्याभावावच्छेदकत्वसाधकसंयोगसामान्यानवच्छेदकत्वहेतोरसिद्धिमाह। यथा चेतीत्याहुः। घटपूर्ववर्त्तित्वस्येति। दण्डनिष्ठकारणताघटकघटाव्यवहितपूर्ववर्त्तित्वस्येत्यर्थः। भिन्नत्वेपि दण्डत्वं तत्सामान्यस्यावच्छेदकमित्यग्रिमेणात्वयः। अव्यहितपूर्ववर्त्तितायाः। घटाव्यवहितपूर्ववर्त्तितायाः। अवच्छेदकं। अव्यवहितपूर्ववर्त्तितानतिरिक्तवृत्ति। अतिप्रसंगादिति। दण्डत्वस्य घटाव्यवहितपूर्ववर्त्तित्वाभाववति अरण्यस्थ दण्डे सत्वादिति भावः। अव्यवहितपूर्ववर्त्तिजातीयताया इति। तच्चाव्यवहितप्राक्वृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्वम्। सा च। अव्यव-

**मान्यस्यावच्छेदकं तथैव संयोगसामान्यस्यावच्छेदकं द्रव्यत्वादिकमित्यस्यापि सुवचत्वाच्चेति संप्रदायविदः ।**

गुणस्येति । सामान्याभाव इति परेणान्वयः । ननु आद्यक्षणे घटे गुणो

लक्ष्मीः

हितपूर्ववर्त्तिजातीयता च । **अनुरूपं दृष्टान्तं** । प्रत्येकातिप्रसक्तस्य सामान्यानतिप्रसक्तत्वेन सामान्यस्यावच्छेदकं दृष्टान्तान्तरम् । **वन्हिसामानाधिकरण्यस्येति** । प्रतिधूमं भिन्नत्वेपि धूमत्वं तत्सामान्यस्यावच्छेदकमित्यन्वयः । तत्पदेन वन्हिसामानाधिकरण्यपरामर्शः । धूमत्वस्य तदनवच्छेदकत्वे वन्हिव्याप्यतावच्छेदकत्वानुपपत्तिः स्यात् । **दीधितौ संयोगसामान्यस्येति** । वृक्षादौ संयोगस्य भिन्नत्वेपीत्यादि । **दण्डत्वादिकमिति** । आदिना वृक्षत्वपरिग्रहः । **सुवचत्वादिति** । तथा च वृक्षत्वादौ संयोगानवच्छेदकत्वहेतुना संयोगाभावावच्छेदकत्वं साधनीयम् , तच्च स्वरूपासिध्या न संभवतीति भावः । वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेदकत्वादित्यनुमानवत्, वृक्षत्वं संयोगसामान्यावच्छेदकं संयोगसामान्याभावानवच्छेदकत्वादिप्यनुमानेन संयोगसामान्यावच्छेदकत्वं संभवति, अनुकूलतर्कविरहस्तु उभयत्रापि समान एवेति यथा चेत्यादिग्रन्थस्याशयं वर्णयतामतमाह । **केचित्तु इति** । **अन्यथा** । उक्तव्याप्तेः प्रयोजकत्वोपगमे । **संप्रदायविद इति** । कर्मणि च संयोगाभाव इति वक्ष्यमाणमूलग्रन्थासंगतिरत्रास्वरसः ।

**सामान्याभाव इतीति** । ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वस्य दूषितत्त्वादिति भावः । तथा च गुणवान् द्रव्यत्वादित्यत्रोत्पत्तिकालावच्छेदेन हेत्वधिकरणे घटे गुणो नास्तीत्यभावप्रतियोगितावच्छेदकताया साध्यतावच्छेदके सत्वाद्व्याप्तिवारणाय प्रतियोग्यसामानाधिकरण्यदलमिति भावः । संयोगत्वव्यापकगुणत्वावच्छिन्नाभावसत्वे संयोगाभावस्य सुतरां सत्वं सूचितम् ।

ननु उत्पत्तिकालावच्छेदेन घटादौ गुणसामान्याभावसत्वे मानाभावः । न च तत्र प्रत्यक्षं प्रमाणं संभवति । सन्निकर्षाभावात्,

नवीनास्तु उत्पत्तिकालावच्छेदेन घटादौ गुणस्य, प्रलया-

नास्तीति प्रत्यक्षमसंभवि, सन्निकर्षाद्यभावात्, प्रथमक्षणे घटादौ गुणो नास्तीति

लक्ष्मीः

संयुक्तविशेषणतायाः सन्निकर्षतया संयोगाभावेन तस्या अप्यभावा-दित्याशंकते। नन्विति। सन्निकर्षाभावादिति। न च रूपादिवृत्त्य-भावचाक्षुषं प्रति कारणत्वेन क्लृप्तायाः चक्षुः संयुक्तसमवेत विशेषण-ता सैवात्र सन्निकर्ष इति वाच्यम्। तथापि आत्मवृत्त्यभावप्रत्यक्षं प्रति संयुक्तविशेषणतायाः कारणत्वेन क्लृप्तायास्तदभावादेव तत्प्रत्य-क्षासंभवात्[१]।

ननु प्रथमक्षणावच्छिन्ने घटे गुणो नास्तीति व्यवहारादेव प्रथम-क्षणावच्छिन्ने घटादौ गुणसामान्याभावसिद्धिरत आहु। व्यवहारा-दिकं चेति। व्यवहारः शब्दप्रयोगः। व्यवहारं प्रति व्यवहर्तव्यज्ञा-नस्य कारणतया तदभावे व्यवहारासंभवादिति भावः। सन्निधिगध-

दिव्या

१ न च घटवृत्तिअभावप्रत्यक्षस्योभयकार्यतावच्छेदकाक्रान्ततया सन्निकर्ष-संभवादिति वाच्यम्। द्रव्यसमवेतवृत्तिअभावचाक्षुषं प्रति चक्षुः संयुक्तसमवेत-विशेषणतायाः कारणत्वे संयुक्तांशे समवेतांशे योग्यत्वं निवेशनीयम्, परमाणौ चक्षुः संयोगदशायां द्व्यणुकत्वादौ रूपसामान्याभावस्य चाक्षुषत्वापत्तेः। चक्षुः संयुक्तयोग्यसमवेतविशेषणतायाः सत्वात्। अतः संयुक्तांशे निवेशनीयम्। एवं घटनिष्ठगुरुत्ववृत्तिरूपाभावचाक्षुषापत्तिवारणाय समवेतांशेपि निवेशनीयम्। एवं त्रसरेणुवृत्त्यभावचाक्षुषे व्यतिरेकव्यभिचारवारणाय समवेतांशे द्रव्यान्यत्वं विशेषणीयम्। तथा च त्रसरेणोर्द्रव्यान्यत्वाभावेन कार्यतावच्छेदकानाक्रान्ततया न व्यभिचारः। एवमेव घटादौ उत्पत्तिकालावच्छेदेन रूपसामान्याभावस्य चाक्षुषत्वं न संभवतीति ध्येयम्।

अथ कार्यकारणभावानुरोधेन उत्पत्तिकालावच्छेदेन घटादौ गुणसामान्या-भावस्वीकार आवश्यकः। तथा हि—कारणत्वं कार्याव्यवहितपूर्ववर्तित्वं, एवं चोत्पत्तिक्षणावच्छिन्नो घटो गुणसामान्याभाववान् गुणसमवायिकारणत्वादित्यनु-मानं फलितमिति चेन्न।

वच्छेदेन गगनादौ संयोगस्य सामान्याभावो वर्तते,

तथा धूमवत्यपि विरहो दहनस्य इह पर्वते नितंबे हुताशनो न शिखरे इति प्रतीतेः, संयोगेन द्रव्यस्याप्यव्याप्यवृत्तित्वात् वृत्तेर्व्याप्यवृत्तित्वे वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तमसंभावितत्वाच्च।

---

व्यवहारादिकं च सन्दिग्धप्रामाण्यकमतः स्थलान्तरमाह। प्रलयावच्छेदेनेति। तदानीं जन्यभावसत्वे प्रलय एव व्याहन्येतेति भावः।

ननु महाप्रलये मानाभावात्तदवच्छेदेनेत्ययुक्तमत आह। तथेति। ननूक्तप्रतीतिः पर्वतवृत्तिहुताशनावच्छेदकत्वाभावं शिखरे, शिखरावच्छिन्नपर्वतवृत्तित्वाभावं वा

---

लक्ष्मीः

प्रामाण्यकमिति। आप्तोक्तत्वानिश्चयादिति भावः। प्रलयावच्छेदेन गगनादौ संयोगस्येति। संयोगिद्रव्यत्वादित्यत्र द्रव्यत्वाधिकरणे गगने प्रलयावच्छेदेन संयोगाभावसत्वात्तत्प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके सत्ताद्व्याप्तिवारणाय प्रतियोग्यसामानाधिकरण्यनिवेश इति भावः। जन्यभावानधिकरणस्य सुतरां संयोगाभाववत्वमिति भावः। महाप्रलय एव व्याहन्येतेति। जन्यभावानधिकरणस्यैव महाप्रलयरूपत्वात्। भावकार्यत्वं स्वाश्रयप्रागभावानधिकरणकालवृत्तिध्वंसप्रतियोगिवृत्ति कार्यमात्रवृत्तित्वात् देवदत्तत्ववत् इत्यनुमानस्यैव प्रमाणतया तेनैव कार्यानधिकरणतयैव तत्सिद्धेः। मानाभावादिति। स्वत्वस्याननुगततया दृष्टन्तपक्षयोरनुगतसाध्याभावेनानुमानाऽसंभवात्, आगमस्य च तात्पर्यानिर्णयादिना सन्दिग्धप्रामाण्यादिति भावः। दीधितौ धूमवत्यपि विरहो दहनस्य। तथा च वह्निमान् धूमादित्यत्राव्याप्तिरिति भावः। शंकते। नन्विति। उक्त प्रतीतिः। इह पर्वते नितंबे हुताशनो न शिखरे इति प्रतीतिः। इह पवते नितंबे हुताशनो न शिखरे इति वाक्यात् शिखरावच्छिन्नपर्वतनिरूपितवृत्तित्वाभाववान् हुताशनः, तुल्यवित्तिवेद्यतया वा पर्वतवृत्तिहुताशनावच्छेदकत्वाभाववच्छिखरमिति बोधो जायते, प्रथमान्तार्थमुख्यविशेष्यत्वानुरोधेन पर्वतो वन्ह्यभाववानिति बोधो न भवति तथा

एवं प्रतियोगिमतोरपि कालदेशयो

हुताशनेऽवगाहते न तु पर्वते हुताशनाभावमिति यदि ब्रूयात्तदाप्याह वृत्तेरिति। वृत्तेः संबन्धस्य। वृत्तिमतः—संबन्धवतः। तथा च यो यदवच्छेदेन यदीय यत्संबन्धाभाववान् स तदवच्छेदेन तत्संबन्धावच्छिन्नतदभाववानिति व्याप्त्या शिखरावच्छेदेन संयोगसंबन्धावच्छिन्नवन्ह्यभावसिद्धिरिति भावः।

ननु उक्तव्याप्तावप्रयोजकत्वम्, अन्यथा तुल्यन्यायेन योयदीययत्संबन्धवान् स तत्संबन्धेन तद्वानिति व्याप्त्यापि कुण्डादिसंयोगिनो वदरादेः कुण्डादिमत्तापत्तेरित्युक्तावाह। एवमिति। भेदः—विशेषः। घटवत्यपिकाले इदानीं तन्तौन

लक्ष्मीः

च पर्वते वन्ह्यभावसत्वे न मानमिति भावः। नन्वेवं वन्ह्यभावस्य कुत्रापि वृत्तित्वं न स्यादित्यस्वरसादाह। यदि ब्रूयादिति। संयोगेन द्रव्यस्याप्यवृत्तित्वादिति। अपिना तादृशाभावसमुच्चयः। संयोगेन वन्हेरव्याप्यवृत्तित्वे युक्तिमाह। वृत्तरिति। तथा च संबन्धसत्तायाः संबन्धिसत्ताप्रयोजकतया प्रयोजकविरहे प्रयोज्यविरहस्यावश्यकतामाह। तथा चेति। पर्वतः शिखरावच्छिन्न संयोगसंबन्धेन प्रतियोगिताकवन्ह्यभाववान् वन्हिसंयोगाभाववत्वादित्यनुमानेन वन्ह्यभावसिद्धिरिति भावः शंकते। नन्विति। उक्तव्याप्तौ। यो यदवच्छेदेन यत्संबन्धाभाववान् स तदवच्छेदेनतत्संबन्धावच्छिन्नतदभाववानिति व्याप्तौ। अन्यथा। उक्तव्याप्तेः अनुकूलतर्कविरहेपि प्रयोजकत्वोपगमे। तुल्यन्यायेन। प्रयोजकाभावस्य कार्याभावे इव प्रयोजकस्य कार्येपि नियामकतया एतद्व्याप्तेरपि सप्रयोजकत्वं स्यात्। तथा च पर्वतः संयोगेन वह्निमान् वह्निसंयोगवानित्यपि स्यादिति स्यात्। तथा सति आपत्तिमाह।

कुण्डादिमत्तापत्तेरिति। तथा च यत्पदेन बदरमादाय तत्र

दिव्या

द्रव्योत्पत्त्यपत्तौ अवयवद्वयसंयोगस्यासमवायिकारणतया तदाश्रयतयाऽवयवस्य समवायिकारणस्य प्राक्सत्वमस्तु असमवायिकारणगुणजन्ये गुणे समवायिकारणं कार्यसहभावेनैवापेक्ष्यते इत्यप्रयोजकशंकाकवलितत्वादनुमानस्येति ध्येयम्।

देशकालभेदावच्छेदेन तदभावः,

घट इति प्रतीत्या तन्त्ववच्छेदेन एतत्काले घटाभावः, तथा घटवत्यपि कपाले घटनाशदशायां इदानीमिह कपाले न घट इत्यनुभवात् एतत्कालावच्छेदेन कपाले घटाभावः सिद्धयति ।

न च 'इदानीं तन्तुषु न घट' इत्यादिप्रतीतेरेतत्कालावच्छेदेन तन्तुष्वेव

लक्ष्मीः

कुण्डसंयोगसत्वेन बदरादिः कुण्डादिमानित्यनुमितिः स्यात् न चेष्टापत्तिः । अनुभवविरोधादिति भावः । आह । प्रतियोग्यसामानाधिकरण्यानुक्तौ स्थलान्तरेऽव्याप्तिमाह ।

न च रूपसमवायवति वायौ रूपासत्वेन व्यभिचार इति वाच्यम् । समवायस्य नानात्वोपगमात्, बदरादेरित्यादिपदग्राह्य वायावपि रूपापत्तिदानाच्च ।

केचित्तु यो यन्निरूपितत्वविशिष्टसंबन्धवान् स तत्संबन्धेन तद्वानिति व्याप्तिः । संबन्धवत्ता च अनुयोगितासंबन्धेन । एवं रूपसमवायी वायुरित्यप्रत्ययाद् रूपनिरूपितत्वविशिष्टसमवायानुयोगित्वं वायौ न स्वीक्रियते, स्वीक्रियते च कुण्डनिरूपितत्वविशिष्टसंयोगानुयोगित्वं बदरे कुण्डसंयोगिवदरमिति प्रत्ययात् । नापि सम्बन्धपदोत्तरमत्वर्थीयार्थस्य प्रतियोगित्वमर्थः, घटसमवायिरूपमित्यप्रत्ययादित्याहुः ।

**देशकालभेदावच्छेदेनेति ।** देशकालविशेषावच्छेदेनेत्यर्थः । तथा च प्रतियोगिमति काले देशविशेषावच्छेदेन, प्रतियोगिमति देशे कालविशेषावच्छेदेन तदभावः । तदेवाह । **घटवत्यपि काले इति ।** घटवत्यपि काले इदानीं तन्तौ न घट इति प्रतीत्या तन्त्ववच्छेदेने तत्काले घटाभावः सिद्धयति, तथा च समयो घटवानेतत्कालत्वादित्यत्राव्याप्तिवारणाय प्रतियोग्यसामानाधिकरण्यविशेषणमिति भावः । **तथेति ।** घटवत्यपि कपाले घटनाशदशायां इदानीमिह कपाले न घट इति प्रतीत्या घटानधिकरणकालावच्छेदेन कपाले घटाभावसत्वाद् कपालं घटवद् घटध्वंसादित्यत्राव्याप्तिवारणाय तद्दलमिति भावः ।

**न चेति ।** वाच्यमिति परेणान्वयः । एवकारव्यवच्छेद्यमाह ।

घटाभावो विषयो, न तु तन्त्ववच्छेदेनैतत्काले तथेति वाच्यम्। तन्तुषु घटाभावस्य व्याप्यवृत्तितया एतत्कालस्य तदवच्छेदकत्वावगाहने उक्तप्रतीतेर्भ्रमत्वापातात्।

न च तथाप्येतत्कालवृत्तिघटाभाव एव तन्तुषु भासतां तथेति वाच्यम्, कालस्य प्रतियोगिकुक्षावग्रहेऽपि तादृशप्रतीतेस्तन्त्ववच्छेदेन समये घटाभावावगाहित्वस्यानुभवसिद्धत्वादिति भावः।

---

लक्ष्मीः

**नन्विति। तथेति।** घटाभावो विषय इत्यर्थः। तथाचोक्त प्रतीत्या घटवति काले न घटाभावसिद्धिरिति भावः। **न च विनिगमनाविरह इति वाच्यम्।** स्वारसिकोक्तप्रतीतेः क्लृप्तेन तन्तुनिष्ठघटाभावे न विषयपर्यवसानसंभवे क्लृप्तैतत्कालवृत्तिघटाभावविषयकत्वस्याव्याप्यताया एवं विनिगमकत्वात्। **समाधत्ते। व्याप्यवृत्तितयेति।** व्याप्यवृत्तिरवच्छेदकानंगीकारादिति भावः। **तदवच्छेदकत्वावगाहने।** कालस्य तन्त्वावच्छेदकत्वे। नतु तन्त्ववच्छेनैतत्काले इति यावत्। **उक्तप्रतीतेः।** इदानीं तन्तौ न घट इति प्रतीतेः। **भ्रमत्वापातादिति।** न च भ्रमत्वमत्र तन्तुवृत्तिघटाभावावच्छेदकत्वाभाववति "एतत्काले घटावावच्छेदकत्वम्, तच्च न संभवति- तन्तुषु घटाभावस्य व्याप्यवृत्तितया तदवच्छेदकाप्रसिद्ध्या तदवच्छेदकत्वाभावस्यापि अप्रसिद्धत्वादिति वाच्यम्। तन्तुवृत्तिघटाभावस्यैतत्कालावच्छिन्नत्वावगाहने न भ्रमत्वम्, किन्तु एतत्कालनिष्ठावच्छेदकतायां तन्तुवृत्तिघटाभावीयत्वावगाहनेन तस्यैव भ्रमत्वसंभवात्। **तथापि।** व्याप्यवृत्तेरवच्छेदकत्वासंभवेपि। **तत्र।** इदानीं तन्तुषु न घट इति प्रतीतौ। **कालस्य प्रतियोगिकुक्षौ अग्रहेपीति।** यस्मिन् काले कालवृत्तित्वेन घटाद्यग्रहेपीत्यर्थः। **तादृशप्रतीतेः।** इदानीं तन्तुषु न घट इति प्रतीतेः। **अनुभवसिद्धत्वादिति।** तादृशप्रतीत्यनुरोधेनैव तन्त्ववच्छेदेनैतत्काले घटाभावः स्वीकर्त्तव्य इति भावः। ननु एतत्कालवृत्तित्वस्य तन्तुविशेषणत्वे नायं दोष इति चेन्न। मूले वृक्षे न कपिसंयोग इत्यत्रापि वृक्षे इति सप्तम्या अवच्छेदकत्वार्थकत्वमभ्युपेत्य वृक्षावच्छेदक मूलवृत्तिकपिसंयोगाविषयकत्व-

तथा च तत्तत्साध्यकाव्याप्तिवारणाय तत्। नोपादेयं च सर्वथैव व्याप्यवृत्तिसाध्यके, साध्यताधनभेदेन व्याप्तिभेदादिति वदन्ति।

---

तथाचेति। गुणवत् संयोगवत् वा द्रव्यत्वात् वन्हिमान् धूमात्, समयो घटवान् एतत्कालत्वात्, कपालं घटवत् घटध्वंसादित्यादावव्याप्तिवारणायेत्यर्थः। तत् असमानाधिकरणान्तम्। नोपादेयञ्चेति। येन संबन्धेन येन रूपेण च यद् व्याप्यवृत्ति तेन संबन्धेन तेन रूपेण तत्साध्यतायां नोपादेयमित्यर्थः। तेन संयोगत्वेनाऽव्याप्यवृत्तेरपि संयोगस्य समवेतत्वेन साध्यतायां, कालिकतयाऽव्याप्यवृत्तेरपि द्रव्यत्वस्य समवायेन साध्यतायां च न प्रतियोगिवैयधिकरण्यपदमुपादेयम्। परन्तु समवायेन व्याप्यवृत्तेरपि द्रव्यत्ववृत्तत्वादेः कालिकेन साध्यतायान्तूपादेयमेव।

व्याप्यवृत्तिसाध्के प्रयोजनविरहात्सर्वत्रैव नोपादेयम्, अव्याप्यसाध्यके तु क्वचिद्देयम् वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यादौ, संयोगाभाववान् नित्यगुणत्वादित्यादौ क्वचिदेव न देयम् इत्यावेदयितु व्याप्यवृत्तिसाध्यके सर्वथैवेत्युक्तम्। साध्यसाधनभेदेनेति। साध्यताघटकसंबन्धादेरप्युपलक्षणम्।

---

लक्ष्मीः

संभवादव्याप्यत्वाभावोच्छेदप्रसंगात्। यद्व्याप्यवृत्ति। यत्स्वाधिकरणवृत्त्यभावा प्रतियागि। तत्संबन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणतावन्निष्ठ तत्संबन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकतद्धर्मवत्वं तेन रूपेण व्याप्यवृत्तित्वमर्थः। न च नित्यज्ञानानुयोगिकविषयिता संबन्धेन घटादेर्व्याप्यवृत्तित्वानुपपत्तिः, तत्संबन्धावच्छिन्नाभावाप्रसिद्धेरिति वाच्यम्। यत्सम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणतावन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नयद्धर्मावच्छिन्नत्वोभयाभाववत्वस्य विवक्षितत्वात्। येन रूपेणेत्यस्य फलमाह। तेनेति। येन रूपेण यद्व्याप्यवृत्तीत्युक्तौ चेत्यर्थः। समवेतत्वेनसाध्यतायां। समवेतवान् द्रव्यत्वादित्यादौ। द्रव्यत्वाधिकरणे समवेतसामान्याभावस्याऽसत्त्वादव्याप्तिविरहेण प्रतियोगिवैयधिकरण्यमनोपादेयम्। एवं समवायेन द्रव्यत्वसाध्यतायामपि नोपादेयम्। द्रव्यत्वस्य समवायेन साध्यतायां चेति। ननु समवायेनापि द्रव्यत्वम्

यद्यपि व्याप्यवृत्तिसाध्यकस्यते तदप्रवेशे सत्तावान् जातेरित्यादावव्याप्तिः, साधनवति स्पन्दादौ समवायेन सत्ताभावस्यापि कालिकादिसंबन्धेन वृत्तेः।

---

लक्ष्मीः

व्याप्यवृत्ति घटे गुणे न द्रव्यत्वमिति प्रतीतेरिति वाच्यम्। उक्तप्रतीतेर्गुणावच्छेदेन घटे द्रव्यत्वाभानो न विषयः, किन्तु घटे द्रव्यत्वं, गुणे तदभावः, घटवृत्तिगुणे वा द्रव्यत्वाभावो विषयः। यद्वा तादृशप्रतीतिरेवाऽप्रामाणिकी, प्रामाणिकी च घटे द्रव्यत्वं न गुणे इत्यादिः। **कालिकेन साध्यतायां तु इति**। इदानीं यद्द्रव्यत्वं तद्घटे न तु गुणे इत्यादि प्रतीत्यैव काले कोलिकेन द्रव्यत्वस्याव्याप्यवृत्तित्वम् बोध्यम्। **प्रयोजनविरहादिति**। प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानस्य प्रमात्वादिति शेषः। **संयोगाभाववान् नित्यगुणत्वादित्यादौ क्वचिदेव न देयमिति**। संयोगाभावाभावस्य संयोगरूपस्य साध्याभावस्य नित्यगुणे केनापि संबन्धेनाऽसत्वादभावान्तरमादाय लक्षणसमन्वयसंभवादिति भावः। अथात्र नित्यपदोपादानं किमर्थमिति वाच्यम्। गुणत्वाधिकरणे जन्यगुणे संयोगात्मकसाध्याभावस्य कालिकेन वृत्तितया प्रतियोगिवैयधिकरण्यस्योपादेयता स्यात् अत उक्तं। **नित्येति**। ननु तथापि हेत्वधिकरणे नित्यज्ञाने विषयितया साध्याभावस्य सत्वादव्याप्तिरतस्तदुपादेयमेवेति चेन्न। स्वविषयकान्यत्वविशिष्टनित्यगुणत्वस्य हेतुत्वात्।

व्याप्यवृत्तिसाध्यकस्थलेपि प्रतियोगिवैयधिकरण्यसभावे विशेषणीयम्, अन्यथाऽव्याप्तिमाह। **यद्यपीति**। **तदप्रवेशे**। प्रतियोगिवैयधिकरण्याप्रवेशे। **साधनवति**। जातिमति। **समवायेन सत्ताभावस्य**। समवायसंबन्धावच्छिन्नप्रतियोगिताकसत्ताभावस्य। कालिकादिसंबन्धेन हेत्वधिकरणवृत्तेः। हेत्वधिकरणवृत्तित्वस्य संबन्धविशेषेणाऽविवक्षितत्त्वादिति भावः। तथा च हेत्वधिकरणे स्पन्दे कालिकेन सत्ताभावसत्त्वात्तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादव्याप्तिरिति भावः। **नचेति**। अस्य नोक्तदोष इत्यनेनान्वयः। तथा च सत्ताभावस्य स्वरूपेण हेत्वधिकरणावृत्तित्वाद्-

न चाभावे हेत्वधिकरणावृत्तित्वस्याभावीयविशेषणतया विवक्षणान्न दोषः। तथा सत्यपि द्रव्यत्वाभाववान् सत्त्वादित्यत्रातिव्याप्तेः। द्रव्यत्वरूपसाध्याभावस्य विशेषणतया वृत्तित्वविरहात्। द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि द्रव्यत्वानतिरेकात्।

---

लक्ष्मीः

भावान्तरमादाय नाव्याप्तिः। **तथासत्यपि**। हेत्वधिकरणनिरूपितवृत्तितायां स्वरूपसंबन्धावच्छिन्नत्वनिवेशेपि। द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्य स्वरूपेण हेत्वधिकरणावृत्तितया तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वान्नातिव्याप्तिरिति समाधानेत्वाह। **द्रव्यत्वानतिरेकादिति**। समनियताभावयोरैक्येन तादृशविशेष्यत्वाभावस्यापि द्रव्यत्वस्वरूपतया स्वरूपेणावृत्तित्वादिति भावः।

ननु द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्याऽतिरिक्तत्वेपि कथमतिव्याप्तिवारणम्, तादृशाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात्। न च समनियताभावयोरैक्योपगमेन हेतुसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्वान्नातिव्याप्तिरिति वाच्यम्। विशिष्टसत्ताभाववान् गुणत्वादित्यादौ विशिष्टसत्ताभावाभावस्य सत्तारूपतया हेतुसमानाधिकरणत्वेनाव्याप्तिवारणाय हेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वपर्यन्तनिवेशस्यावश्यकतयाऽतिव्याप्तितादवस्थ्यादिति चेन्न। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकमिति पारिभाषिकावच्छेदकाभिप्रायेण तदभिधानात्[1]।

---

दिव्या

१. ननु पारिभाषिकावच्छेदकत्वाभिप्रायेण यद्ययं ग्रन्थः तदाऽनतिरेकेपि तद्घटीय रूपध्वंसाभावाभावमादायैवातिव्याप्तिवारणसंभवः इति चेन्न। रूपभिन्नं गुणत्वादित्यत्रातिव्याप्तौ तात्पर्यात्। न च तत्रापि तद्रूपनिष्ठविषयत्वाभावाभावमादाय नातिव्याप्तिः, रूपनिष्ठविषयताया विषयतावच्छेदकीरूपत्वस्वरूपतया तत्स्वरूपाभावस्य स्वरूपेण हेत्वधिकरणावृत्तित्वादिति वाच्यम्। विषयताया रूपत्वस्वरूपत्वेपि विषयतात्वेन स्वरूपसंबन्धावच्छिन्नवृत्तितावत्वात्। केचित्तु द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यतावान् सत्वादित्यत्रातिव्याप्तिप्रदर्शनायैव द्रव्यत्वानतिरेकादित्युक्तमिति प्राहुः।

न चाभावत्वप्रतीतेः प्रमात्वरक्षार्थमभावाभावस्यातिरिक्ततया उक्तातिव्याप्ति-वारणमिति वाच्यम् । अभावत्वं चेदग्रिमग्रन्थेन भावाभावसाधारणस्याऽभावत्वस्य निर्वचन विरोधापत्तेः ।

घटत्वाभावस्य कालिकसंबन्धावच्छिन्नाभावे स्वरूपेण साध्ये गगनत्वादि-हेतावव्याप्तेस्तथाप्यनुद्धारात् । विशेषणतया गगननिष्ठस्य घटत्वाभावस्यैव तादृश-घटत्वाभावाभावाभावत्वकल्पनात्, तावतैवाभावत्वप्रतीतेः प्रमात्वसंभवात् । अत

---

लक्ष्मीः

ननु अभावत्वं भावभिन्नत्वम्, एवं च द्रव्यत्वाभावाभावस्य द्रव्यत्वरूपत्वे द्रव्यत्वाभावाभावोऽभावः इत्याकारकाभावत्वप्रतीतेः प्रमात्वानुपपत्तिः, तस्या अभावत्वाभाववति अभावत्वप्रकारकत्वा-दित्याशङ्कते । **नचेति** । **अतिरिक्ततयेति** । द्रव्यत्वाभावाभावस्याऽ-तिरिक्तत्वे स्वरूपेण हेत्वधिकरणवृत्तित्वान्नातिव्याप्तिः । **अग्रिम-ग्रन्थेन** । 'अभावत्वं चेदमिह नास्ति इदमिदं न भवती प्रतीतिनियाम-को भावाभावसाधारणः स्वरूपसंबन्धविशेष इति ग्रन्थेन । अभावत्व-स्याऽभावमात्रवृत्तित्वाङ्गीरेऽपि अव्याप्तिमाह । **घटत्वाभावस्येति** । अत्र घटत्वाभावः संयोगसंबन्धावच्छिन्नप्रतियोगिताको बोध्यः । अन्यथा समवायसंबन्धावच्छिन्नप्रतियोगिताकघटत्वाभावस्य स्वान-धिकरणदेशे प्रसिद्धत्वेनाव्याप्यवृत्तितया तस्य कालिकसंबन्धा-वच्छिन्नप्रतियोगिताकाभावस्याप्यवृत्तितया तत्साध्यके प्रतियोगि-वैयधिकरण्यस्योपादेयतयाऽव्याप्त्यसंगत्यापत्तेः । अत एव घटत्व-पदमपि सार्थकम् । **तथापि** । अभावाभावस्यातिरिक्तत्वेपि । **अनुद्धारादिति** । साध्याभावस्य तृतीयाभावस्य घटत्वाभावरूपतया स्वरूपेण हेत्वधिकरणवृत्तित्वात् । **तावतैव** । तृतीया-भावस्य प्रथमाभावस्वरूपत्वादेव । **अत एव** । घटत्वा-भावाभाववान् गगनत्वादित्यत्राव्याप्तेरेव । **साध्यताघटकसंब-न्धेनेति** । साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदका-वच्छिन्नप्रकारताशालिबुद्धेरित्यर्थः । वन्हिमान् धूमादित्यत्र साध्यता-वच्छेदकसंबन्धेन साध्यवत्ताबुद्धिः संयोगेन वन्हिमानित्याकारिका

एव साध्यतावच्छेदकसंबन्धेन साध्यवत्ताबुद्धेर्विषयविधया प्रतिबन्धतावच्छेदको यः संबन्धस्तेन हेतु सामानाधिकरण्यमभावस्य ग्राह्यमित्युक्तावपि न निस्तारः। तथाविधसंबन्धेन हेतुसामानाधिकरण्याप्रसिध्या प्रागुक्तगगनत्वादिहेतौ द्रव्यत्वाभाववान् जातित्वादित्यादौ चाव्याप्तेः।

---

लक्ष्मीः

तद्विरोधी यो निश्चयः स्वरूपेण वन्ह्यभाववानित्याकारकः विषयविधया प्रतिबन्धकतावच्छेदको यः स्वरूपसंबन्धस्तेन हेत्वधिकरणवृत्तिघटाभावमादाय लक्षणसमन्वयः।

सत्तावान् जातेरित्यत्र समवायेन सत्तावत्ताबुद्धिविरोधिनः स्वरूपेण सत्ताभाववानिति निश्चयस्य विषयविधया प्रतिबन्धकतावच्छेदकस्वरूपेण सत्ताभावस्य हेत्वधिकरणेऽवर्त्तमानतयाऽभावान्तरमादाय लक्षणसमन्वयः।

स्वरूपेण द्रव्यत्वाभाववत्ताविरोधी यः समवायेन द्रव्यत्ववत्तानिश्चयः तत्र विषयविधया प्रतिबन्धकतावच्छेदकसमवायेन साध्याभावस्य द्रव्यत्वस्य हेत्वधिकरणे वर्तमानत्वान्नातिव्याप्तिः। **न निस्तार**। न दोषनिवृत्तिः। **तथाविधसंबन्धेन**। साध्यतावच्छेदकीभूतस्वरूपसंबन्धेन तादृशघटत्वाभावाभाववत्ताविरोधी यो निश्चयः कालिकेन तदभाववानिति निश्चयः तत्र विषयविधया प्रतिबन्धकतावच्छेदककालिकसंबन्धेनेत्यर्थः। हेत्वधिकरणगगननिरूपिवृत्तित्वाप्रसिद्ध्या गगनत्वहेतावव्याप्तिरित्यर्थः। एवं द्रव्यत्वाभाववान् जातित्वादित्यत्रापि तादृशप्रतिबन्धकतावच्छेदकसमवायसंबन्धेन हेत्वधिकरणजातिनिरूपितवृत्तित्वाप्रसिध्याऽव्याप्तिमाह। **द्रव्यत्वाभाववान् जातित्वादित्यादौ चाव्याप्तेरिति**।

सामानाधिकरण्यप्रत्यासत्त्या निश्चयस्य प्रतिबन्धकतया सर्वत्र प्रतिबन्धकतावच्छेदकसंबन्धःसमवाय एव, एवं च संयोगसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावस्य साध्यतायां वन्ह्यवयवत्वहेतौ तादृशप्रतिबन्धकतावच्छेदकीभूतसमवायसंबन्धेन वन्ह्यात्मकसाध्याभावस्य हेत्वधिकरणे वर्त्तमानतयाऽव्याप्तिरतो। **विषयविधयेति**। एवं च प्रकृतसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकाव-

तथापि साध्यतावच्छेदकसंबन्धेन स्वप्रतियोगिमत्ताबुद्धेर्विषयविधया प्रतिबन्धकतावच्छेदको यः संबन्धस्तेन हेत्वधिकरणवृत्तित्वमभावस्य विवक्षितमित्यदोषः। तथा च द्रव्यत्वाभाववान् जातित्वादित्यादौ विशेषणताविशेषसंबन्धेन जातित्वा-

## लक्ष्मीः

च्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसंबन्धेनेत्यर्थः[1]।

यद्यपीत्यादेः समाधानं—तथापीति। स्वं—अभावः। स्वप्रतियोगिमत्ताबुद्धेरिति। अभावप्रतियोगिमत्ताबुद्धेरित्यर्थः। विषयतया। प्रकारतया। प्रतिबन्धकतावच्छेदको यः संबन्ध इति। प्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसंबन्ध इत्यर्थः। तथा च तत्तदभावप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसंबन्धेन हेत्वधिकरणवृत्तित्वं फलि-

## दिव्या

१. ननु येन केनचित्संबन्धेन साध्यवत्ताबुद्धेर्विरोधित्वनिवेशेनैव प्रागुक्तदोषवारणसंभवे साध्यतावच्छेदकसंबन्धनिवेशो व्यर्थः। न च घटत्वाभावस्य कालिकसंबन्धावच्छिन्नाभावे साध्ये गगनत्वादिहेतावव्याप्तिः, कालिकसंबन्धेन साध्यवत्ताबुद्धेर्विरोधिताघटकस्वरूपसंबन्धेन साध्याभावस्य हेत्वधिकरणवृत्तित्वादिति वाच्यम्। साध्यतावच्छेदकसंबन्धेन साध्यवत्ताबुद्धेर्विरोधित्वनिवेशेऽपि उक्तस्थले तादृशसाध्यवत्ताबुद्धेर्विरोधिताघटककालिकसंबन्धेन हेतुसमानाधिकरणाभावस्यैव दुर्लभतया एतत्कल्पे उक्ताव्याप्तेः स्वहस्तितत्वादिति चेन्न। समवायेन घटावृत्तेः समवायसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेण साध्यतायां घटत्वादिहेतौ कालिकसंबन्धेन साध्यवत्ताबुद्धेर्विरोधिताघटकस्वरूपसंबन्धमादाय प्रमेयत्वादिस्वरूपसाध्याभावस्य हेतुसमानाधिकरणतयाऽव्याप्तिः स्यादतः साध्यतावच्छेदकसंबन्धनिवेश इति दिक्।

अनुगमस्तु साध्यताविशिष्टो योऽभावस्तत्प्रतियोगितानवच्छेदकेत्यादि। वैं० स्त्रावच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावत्त्वसं०।

भावबुद्धेर्विषयविधया प्रतिबन्धकतावच्छेदको यः स्वरूपसबन्धस्तेन जातित्वस्वरूपाभावस्य तत्र प्रसिद्धत्वादिति भावः।

---

लक्ष्मीः

तम्। अतिव्याप्तिं निरस्यति। **तथा चेति**। स्वप्रतियोगिमत्ताबुद्धेर्विषयविधया प्रतिबन्धकतावच्छेदकसंबन्धेन हेत्वधिकरणवृत्तित्वनिवेशे चेत्यर्थः। साध्यवत्तास्थाने स्वप्रतियोगिमत्तानिवेशे चेति यावत्। **जातित्वाभावबुद्धेरिति**। हेत्वधिकरणे जातौ वर्तमानो यो जातित्वाभावाभावस्तत्प्रतियोगिजातित्वाभावबुद्धेरित्यर्थः। **तेन**। तादृशबुद्धिविरोधी यो जातित्ववानिति निश्चयः विषयविधया तत्र प्रतिबन्धकतावच्छेदकसमवायसंबन्धेन। **तत्र**। हेत्वधिकरणे। एवं गगनत्वहेतौ गगनत्वस्वरूपाभावमादाय लक्षणसमन्वयः[1]।

---

दिव्या

१. ननु साध्याभावस्य घटत्वाभावाभावाभावस्य घटत्वाभावस्वरूपत्तया तस्य प्रतियोगी यथा घटत्वाभावाभावस्तथा घटत्वं च, तथा च साध्यतावच्छेदकस्वरूपसंबन्धेन घटत्ववत्ताबुद्धिविरोधिताघटकस्वरूपसंबन्धेन घटत्वाभावस्य हेत्वधिकरणवृत्तित्वादव्याप्तितादवस्थ्यमिति चेन्न। स्वीय यादृशप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रकारताशालिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसंबन्धेन हेत्वधिकरणनिरूपितवृत्तितावत्स्वनिरूपिततादृशप्रतियोगितानवच्छेदकत्वस्योक्तत्वात्। अत्र यादृशप्रतियोगितापदेन घटत्वाभावाभावनिष्ठा स्वरूपसंबन्धावच्छिन्ना गृहीतुं न शक्यते, तादृशप्रतियोगितावच्छेदकावच्छिन्नप्रकारकग्रहप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदककालिकसंबन्धेन गगनवृतित्वाप्रसिद्धेः। घटत्वनिष्ठप्रतियोगित्वस्यैव धर्तव्यतया तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्नाति व्याप्तिरिति भावः। एतेन समवायसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावस्य स्वरूपेण साध्यत्वे धूमादिहेतावव्याप्तिः, वह्निस्वरूपसाध्याभावस्य संयोगसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावस्य स्वप्रतियोगिमत्ताबुद्धेर्विरोधिताघटकसंयोगेन हेत्वधिकरणवृत्तित्वादिति निरस्तम्।

अत्र प्रतिबध्यतावच्छेदकप्रकारतायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वानुपादाने समवायेन गुणावृत्तेः समवायेनाभावस्य स्वरूपेण साध्यतायां गुणाव-

दिव्या

हेतावव्याप्तिः, गुणावृत्त्यभावाभावस्य संयोगेन स्वप्रतियोगिगुणावृत्त्यभाववत्ताबुद्धिविरोधिताघटकसंबन्धत्वस्य स्वरूपेपि सत्त्वात् ।

यथाश्रुतानुगमस्तु अभावविशिष्टाभावप्रतियोगितानवच्छेदकेत्यादि । वै० स्वतादात्म्य, स्वनिरूपितप्रतियोगितावच्छेदकधर्मावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रकारताशालिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावत्त्वोभयसं० ।

अथात्र घटभिन्नं कपालत्वादित्यत्राव्याप्तिः, घटभेदाभावस्य घटघटत्वोभयरूपतया घटस्वरूपसाध्याभावस्य घटात्मकस्य स्वप्रतियोगिमत्ताबुद्धेर्विरोधिताघटकसमवायेन हेत्वधिकरणवृत्तित्वादिति चेन्न । प्रतिबन्धकतावच्छेदकप्रकारतायां स्वनिष्ठत्वविशेषणीयत्वात् ।

तादृशप्रकारतावच्छेदकसंबन्धावच्छिन्न हेत्वधिकरणवृत्तितेत्यस्य तादृशप्रकारताविशिष्टवृत्तितेत्यर्थः । वै० स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्वसामानाधिकरण्योभय सं० । अनुयोगिताविशिष्टानुयोगितानिरूपितप्रतियोगितानवच्छेदकेत्यादि । वै० निरुक्तोभय सं० । तेन साध्याभावस्य घटत्वाभावस्वरूपतया तस्योक्तोभयसंबन्धेन स्वविशिष्टत्वेपि घटत्वाभावसाध्यकगगनत्वहेतौ नाव्याप्तिः ।

नन्वेवमपि सत्तावान् जातेरित्यादौ सत्तावत्ताबुद्धिं प्रति कालिकेन सत्ताभाववान् स्वरूपेण सत्ताभाववानिति निश्चयविशिष्टस्य कालिकेन सत्तावान् घट इति निश्चयस्य निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतया एतादृशप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदककालिकसंबन्धेन साध्याभावस्य हेत्वधिकरणे स्पन्दादौ सत्त्वेनाव्याप्तिः । न च प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं विशेषणीयमिति वाच्यम् । कालिकेन सत्ताभावव्याप्यवानिति निश्चयप्रतिबन्धकतामादाय तत्प्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदककालिकसंबन्धेन हेत्वधिकरणे स्पन्दादौ साध्याभावसत्वादव्याप्तितादवस्थ्यात् इति चेन्न । अनुयोगिताविशिष्टानुयोगितानिरूपितप्रतियोगितानवच्छेदकेत्यादि । वै० स्वतादात्म्य, स्वविशिष्टप्रकारतावच्छेदकसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वोभय सं० । प्रकारतायां अनुयोगिता वै० स्वावच्छिन्नत्व, स्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयसं० ।

वस्तुतस्तु प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकमित्यादि । वै० स्वतादात्म्य-स्वावच्छेदकधर्मावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रकारताशालिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकप्र-

वस्तुतो व्याप्यवृत्तित्वमत्र साध्यतावच्छेदकसंबन्धेन यत्स्वाधिकरणं तद्वृत्त्यभावस्य तादृशसंबन्धावच्छिन्नप्रतियोगित्वाभावरूपं ग्रन्थकृतोऽभिप्रेतम्। तादृशसाध्यकं च समवायादिना आत्मत्वसाध्यकज्ञानवत्त्वादिकं, समवायेन आत्मत्ववति

---

लक्ष्मीः

साध्याधिकरणे यस्य साध्यस्याभावः केनापि वृत्तिनियामकसंबन्धेन न वर्त्तते स एव व्याप्यवृत्तिःयथाऽऽत्मत्वं, आत्मनि समवायसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वाभावस्यावर्तमानत्वात्, नित्येषु कालिकायोगात्, तथा च तादृशसाध्यके एव नोपादेयमित्याह—**वस्तुत इति । अत्र ।** नोपादेयं च सर्वथैव व्याप्यवृत्ति साध्यके इत्यत्र । **स्वं ।** साध्यं । साध्यतावच्छेदकावच्छिन्नमिति यावत् । तेनाऽऽत्मवृत्तित्वविशिष्टसत्तासाध्यकस्य 'सत्ताधिकरणे स्पन्दादौ समवायसंबन्धावच्छिन्नप्रतियोगिताकसत्ताभावस्य वृत्तावपि' न व्याप्यवृत्तित्वहानिः । **तद्वृत्त्यभावस्य ।** साध्याधिकरणनिरूपितसंबन्धसामान्येन वृत्तितावदभावस्य । **तादृशसंबन्धावच्छिन्नप्रतियोगित्वाभावरूपमिति ।** साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगित्वाभावरूपमित्यर्थः । तथा च साध्यतावच्छेदकसंबन्धेन साध्याधिकरणं यत्तन्निरूपितसंबन्धसामान्येन वृत्तिर्योऽभावस्तदीय साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगित्वाभाववत्वं व्याप्यवृत्तित्वमिति यावत् । यथाऽयमात्मा ज्ञानादित्यत्र समवायेनात्मत्वाधिकरणे आत्मनि समवायसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वाभावस्याऽवर्तमानत्वात्, वर्त-

---

दिव्या

कारतावत्त्वोभयसं० । प्रकारतावत्ता च स्वविशिष्टाभावीयत्वसं० । अभावे स्ववै० स्वाश्रयत्व, स्वावच्छेदकसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावत्त्वोभयसं० ।

इदं पुनरिहावधेयम् । स्वप्रतियोगिमत्ताबुद्धेरित्यादि परिचायकमेव, न तु तद्रूपेण लक्षणे निवेशः । किन्तु अभावसाध्यके समवायत्वादिना, विशेषणतात्वेन भावसाध्यके, अन्यथा प्रतियोगिवैयधिकरण्यानिवेशेपि व्याप्यवृत्तिसाध्यकस्थले लाघवानुपपत्तेः, वृश्चिकभिया पलायमानस्येत्यादिन्यायग्रस्ततापत्तेः एतद्दोषं दृष्ट्वैव वस्तुतस्तु कल्पानुसरणमित्यपि वदन्ति ।

समवायेनाऽऽत्मत्वाभावस्य केनापि संबन्धेनाऽवृत्तेः। तथा च तादृशसाध्यके एव नोपादेयम्, सत्तावान् जातेरित्यादौ पुनरुपादेयमेव, सत्त्ववति स्पन्दादौ समवायावच्छिन्नसत्ताभावस्य कालिकसंबन्धेन वर्त्तमानतया सत्तादेर्निरुक्तव्याप्यवृत्तित्वाभावात्, व्याप्यवृत्तित्वघटकस्य स्वाधिकरणवृत्तित्वस्य संबन्धसामान्येन प्रविष्टत्वात्।

---

## लक्ष्मीः

मानोऽभावः कालिकसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वाभावस्तदीय समवायसंबन्धावच्छिन्नप्रतियोगित्वाभावः आत्मत्वेऽस्तीति आत्मत्वं व्याप्यवृत्तीति बोध्यम्। अत्र कालिकेनाऽऽत्मत्वाधिकरणे स्पन्दादौ समवायसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वाभावस्य कालिकेन वृत्तितया तदीय साध्यतावच्छेदकीभूतसमवायसंबन्धावच्छिन्नप्रतियोगिताया एवात्मत्वे सत्वेनाऽऽव्याप्यवृत्तित्वानुपपत्तिरतः। **साध्यतावच्छेदकसंबन्धेनेति**। साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यनिष्ठाधेयतानिरूपिताधिकरणनावानित्यर्थः। साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताकत्वम्। तेनाऽऽत्मानुयोगिकसमवायेन न सत्ताया व्याप्यवृत्तित्वहानिः। एवं समवायेनाऽऽत्मत्वाधिकरणे आत्मनि कालिकसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वाभावस्य सत्वेन तद्दोषतादवस्थ्यमतः। **तादृशसंबन्धावच्छिन्नेति। तथाच।** समवायसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वाभावस्याऽऽत्मनि केनापि संबन्धेनाऽवर्तमानत्वे च। **तादृशसाध्यक एवेति**। आत्मत्वसाध्यके एवेत्यर्थः। **नोपादेयमिति**। प्रतियोगिवैयधिकरण्यमिति शेषः। एवकारव्यवच्छेद्यमाह। **सत्तावानिति। स्वाधिकरणवृत्तित्वस्य।** अभावनिष्ठसाध्यवद्वृत्तितायाः। वृत्तित्वं च संबन्धिभिन्नं ग्राह्यम्। अयमात्मा ज्ञानादित्यत्राऽऽत्मत्वाधिकरणे आत्मनि समानकालीनत्वादिसंबन्धेन आत्मत्वाभावस्य संबन्धित्वाद् व्याप्यवृत्तित्वानुपपत्तेः। एवं हेत्वधिकरणवृत्तित्वमपि संबन्धिभिन्नं ग्राह्यम्। अन्यथा-तत्रैव ज्ञानाधिकरणे आत्मनि समानकालीनत्वादिसंबन्धेनाऽऽत्मत्वाभावमादायाव्याप्तेः।

एतल्लाभार्थं सर्वथैव व्याप्यवृत्तेरित्युक्तम् । तस्य संबन्धविशेषानियन्त्रितत्वात्, व्यभिचारादिस्तु संबन्धो न वृत्तितानियामकः, तेनाऽऽत्मत्वादेरपि न व्याप्यवृत्तिताहानिरिति ध्येयम् ।

सर्वथैव व्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्याघटितव्याप्तिविशिष्टहेतुमत्तानिश्चयोत्तरानुमितौ । नोपादेयम् । प्रतियोग्यसमानाधिकरणांशो जनकतावच्छेदके नोपादेयः । साध्यसाधनभेदेन । व्याप्तेः । कारणतावच्छेदकघटकव्याप्तेः । भेदात् । भिन्नत्वादित्यपि वदन्ति ।

---

## लक्ष्मीः

**एतल्लाभार्थमेवेति ।** स्वाधिकरणनिरूपितवृत्तितायां संबन्धसामान्यावच्छिन्नत्वसूचनायैवेत्यर्थः । वस्तुतस्तु व्याप्यवृत्तिसाध्यकेपि प्रतियोगिवैयधिकरण्यविशेषणादानमावश्यकम्, अन्यथा व्याप्यवृत्तेरव्याप्यवृत्तित्वभ्रमदशायां तद्विधेयकानुमितिर्न स्यात् । एतेन सर्वथैव देशतः कालतो व्याप्यवृत्तिसाध्यके केवलान्वयिसाध्यके इति यावत् । तत्र तन्न देयम्, इति कस्यचिन्मतम् । तदपि तुच्छम् । तस्याऽव्याप्यवृत्तित्वभ्रमदशायामनुमितेरुत्पादनाय तन्निवेशस्यावश्यकत्वात् । अत्राहुः । यस्मिन् व्याप्यवृत्तौ नाव्याप्यवृत्तित्वभ्रमःतद्व्याप्यवृत्तितत्साध्यके नोपादेयमिति[1] ।

---

## दिव्या

१. ननु तादात्म्येन गगनवद्भेदस्य साध्यत्वे गगनत्वहेतावतिव्याप्तिः, साध्याभावस्य गगनस्वरूपतया हेत्वधिकरणेऽवृत्तित्वात् । अभावान्तरस्यैव धर्तव्यत्वात् । अभावे हेत्वधिकरणवृत्तिताया एव निवेशात् । न च व्याप्यवृत्तितावच्छेदकत्वस्य साध्यतावच्छेदके निवेशान्नातिव्याप्तिरिति वाच्यम् । स्वाधिकरणवृत्तित्वस्याप्यसत्वेन तत्र व्याप्यवृत्तित्वस्यानपायात् इति चेन्न । स्वाधिकरणावृत्तित्व-वृत्तिमत्त्वोभयाभाववदभावाप्रतियोगित्वरूपव्याप्यवृत्तित्वस्य तत्रासत्वेन व्याप्यवृत्तितावच्छेदकत्वनिवेशेनैव वारणात् । स्वं०साध्यम् । गगनवद्भेदाभावस्तु उभयाभाववान् तत्र स्वपदग्राह्यगगनवद्भेदाधिकरणावृत्तित्वसत्वेपि वृत्तिमत्त्वविरहात् । आत्मत्वाभावस्तु नोभयाभाववान्, तत्र आत्मत्वाधिकरणावृत्तित्व-वृत्तिमत्त्वोभयोरेव सत्वात् । ननु आत्मत्वाभावस्य व्यभिचारित्वादिसंबन्धेनात्मवृत्तित्वादात्मत्वस्य व्याप्यवृत्तित्वमनुपपन्नमत आह । व्यभिचारादीति । स्वाभाववत्वं व्यभिचारः । आदिना समानकालीनत्वस्य संग्रहः ।

प्रतियोग्यसमानाधिकरण्यं च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यम्, तेन अयं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः—भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ नातिव्याप्तिः।

---

एकधर्मावच्छिन्नप्रतियोगितायाः प्रतियोगिव्यक्तीनां भेदेपि ऐक्यमिति नव्यमते वह्निमान् धूमादित्यत्र साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिरण्यमात्रोक्तावपि वन्ह्यादिसामान्याभावमादायाऽव्याप्त्यसंभवादतिव्याप्तिवारणात्मकप्रयोजनमाह तेनेति।

---

लक्ष्मीः

प्रतियोगिवैयधिकरण्यविशेषणं समर्थ्य तत्परिष्करोति। दीधितौ— प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यमिति। तथा च स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणाऽवृत्तिर्योऽभाव इति फलितम्। कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभावस्य स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणवृत्तित्वाद्वारणम्। प्रतियोगितावच्छेदकावच्छिन्नत्वञ्च प्रतियोगितावच्छेदकताघटकसंबन्धेन बोध्यम्, तेन वन्हेः कालिकेन धूमत्वविशिष्टतया धूमाभावस्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्येन लक्षणाघटकत्वेपि नातिव्याप्तिरित्यग्रे व्यक्तीभविष्यति। ननु वह्निमान् धूमादित्यादावव्याप्तिसंभवेऽतिव्याप्तिप्रदर्शनं दीधितिकृतोऽसंगतम्। तथाहि— प्रतियोगिवैयधिकरण्यमित्यस्य स्वप्रतियोगिताश्रयानधिकरणवृत्तित्वार्थकत्वे गौरवमसंभवश्च। घटाभावादेरपि घटीयसंयोगेन प्रमेयाभावतया प्रतियोग्यसमानाधिकरणाभावाप्रसिद्धेः, अतो लाघवाच्च स्वीय यत्किञ्चित्प्रतियोगिताश्रयानधिकरणत्वं हेत्वधिकरणे निवेशनीयम्। एतेन एकधर्मावच्छिन्नप्रतियोगिताया भिन्नत्वेपि कथं वन्ह्यभावः प्रतियोगिव्यधिकरणः, तत्प्रतियोग्यनधिकरणत्वस्य हेत्वधिकरणेऽसत्वादिति समाहितम्। प्रतियोगिभेदेन प्रतियोगिताभेदात्स्वीय यत्किञ्चित्प्रतियोगिताश्रयीभूतमहानसीयवन्ह्याद्यनधिकरणत्वस्य

---

दिव्या

तथा च व्याप्यवृत्तित्वघटकस्वाधिकरणवृत्तित्वं वृत्तिनियामकसंबन्धसामान्येनैव विवक्षणीयमिति भावः।

न च विशिष्टसत्वस्य व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादिदमयुक्तमिति वाच्यम् ।

---

लक्ष्मीः

पर्वते सत्वात्पर्वतनिष्ठवन्ह्यभावस्यापि लक्षणघटकत्वादित्यत आह । **ऐक्यमिति नव्यमते इति** । तथा च प्रतियोगिताया ऐक्ये तादृशप्रतियोगिताश्रयो यथा महानसीयवन्हिस्तथा पर्वतीयवन्हिरपि तदनधिकरणत्वस्य पर्वते विरहादभावान्तरमादाय नाव्याप्तिरित्याह । **अव्याप्त्यसंभवादिति । अतिव्याप्तिवारणात्मकेति** । विशिष्टसत्तावान् जातेरित्यत्र जात्यधिकरणगुणादिनिष्ठविशिष्टसत्ताभावप्रतियोगिताश्रयशुद्धसत्ताधिकरणत्वस्यैव गुणे सत्त्वादभावान्तरमादायातिव्याप्तिवारणात्मकेत्यर्थः । **तेन** । प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशेन । **नातिव्याप्तिरिति** । तथा च जात्यधिकरणगुणादिनिष्ठाभावप्रतियोगितावच्छेदकं यद्विशिष्टसत्तात्वं तदवच्छिन्नानधिकरणत्वस्य गुणे सत्वेन साध्याभावोपि प्रतियोगिव्यधिकरण इति नातिव्याप्तिः । भूतत्वमूर्तत्वोभयवानित्यत्र मूर्त्तत्वाधिकरणे मनसि भूतत्वमूर्तत्वोभयाभावप्रतियोगिताश्रयमूर्त्तत्वाधिकरणताया मनसि सत्वेपि तादृशप्रतियोगितावच्छेदकीभूतभूतत्वमूर्तत्वोभयत्वावच्छिन्नानधिकरणत्वस्य मनसि सत्वेनोभयत्वावच्छिन्नाभावस्य प्रतियोगिव्यधिकरणतया नातिव्याप्तिरिति भावः ।

व्याप्यवृत्तिसाध्यकस्थलीयलक्षणे प्रतियोगिवैयधिकरण्यस्याऽनिवेशेन तद्घटितलक्षणस्य तत्रातिव्याप्तिदानमनुचितमित्याशयेनाशंकते **न चेति** । वाच्यमित्यनेनान्वयः । **विशिष्टसत्वस्य** । गुणकर्मान्यत्वविशिष्टसत्तायाः । **व्याप्यवृत्तितया** । अवच्छिन्नवृत्तिकान्यतया । **तत्साध्यके** । विशिष्टसत्वसाध्यके । **प्रतियोगिवैयधिकरण्याप्रवेशादिति** । नोपादेयं च सर्वथैव व्याप्यवृत्तिसाध्यके इत्युक्तत्वादिति भावः । **इदम्** । अतिव्याप्तिकथनम् । **अयुक्तमिति** । व्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्याप्रवेशात्, प्रतियोगिवैयधिकरण्याघटितलक्षणस्य चातिव्याप्तिरेव न संभवति, गुणे साध्याभावसत्वादिति भावः ।

जातौ विशिष्टसत्त्वव्यभिचारज्ञानदशायामपि विशिष्टसत्त्वधर्मिकजातिमन्निष्ठ-

लक्ष्मीः

केचित्तु व्याप्यवृत्तिसाध्यकेपि अव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्यघटितव्याप्त्यवगाहिपरामर्शस्यानुमितिहेतुतया उक्तसाध्यस्य व्याप्यवृत्तित्वेपि साध्याभावस्य प्रतियोगिताश्रयानधिकरणवृत्तित्वरूपप्रतियोगिव्यधिकरणत्वाभावेनाभावान्तरमादाय नातिप्रसंगोऽयुक्त इत्याहुः। तच्चिन्त्यम। व्याप्यवृत्तौ अव्याप्यवृत्तित्वभ्रमस्वीकारे व्याप्यवृत्तिसाध्यकेपि अवच्छेदकविशेषान्तर्भावेण प्रतिबध्यप्रतिबन्धकभावकल्पने गौरवम्, तदस्वीकारे च सामान्यतस्तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयत्वेन प्रतिबध्यप्रतिबन्धकभावकल्पने लाघवम्, अव्याप्यवृत्तिसाध्यकस्थले च शाखामूलादिरूपावच्छेदकान्तर्भावेण प्रतिबध्यप्रतिबन्धकभावोऽनुभवबला गत्याऽभ्युपेय इति नातिप्रसंग संभावनेति चिन्ताबीजम।

अत्रेदं बोध्यम्। अनुमितिजनकतावच्छेदकव्याप्तिज्ञानस्य व्यतिरेकव्यभिचार एवाव्याप्तिपदार्थः, अन्वयव्यभिचार एव चातिव्याप्तिः। एवं चाऽव्याप्यवृत्तिसाध्यकस्थलीयप्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानस्य व्याप्यवृत्तिसाध्यकसद्धेतौ प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानादनुमित्युदयेन व्यतिरेकव्यभिचारपर्यवसन्नाव्याप्तिवारणायाव्याप्यवृत्तिसाध्यकानुमितित्वमेव जन्यतावच्छेदकं वाच्यम्, तथा चान्वयव्यभिचारपर्यवसन्नोक्तव्याप्यवृत्तिसाध्यकातिव्याप्तेरप्यसंभवः, व्याप्यवृत्तिसाध्यकानुमितेस्तज्जनकतावच्छेदकानाक्रान्तत्वेनाप्त्यसंभवात्। न चाऽव्याप्यवृत्तिसाध्यस्यापि व्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानादेवानुमित्युदयेन तत्र तद्घटितव्याप्तिज्ञानस्य व्यतिरेकव्यभिचारो दुर्वारः अव्याप्यवृत्तित्वेन ज्ञायमानसाध्यकानुमितित्वस्य तज्जन्यतावच्छेदकत्वे च व्याप्यवृत्तिविशिष्टसत्तादेरव्याप्यवृत्तित्वभ्रमदशायां तत्साध्यकव्यभिचारिण्यतिव्याप्तिर्दुर्वारैवेति प्रतियोगितावच्छेदकावच्छिन्नत्वं निवेशनीयमिति सिद्धान्तः।

अतिव्याप्तिकथनं युक्तमेवेति समाधत्ते। **जातौ विशिष्टसत्त्वव्यभिचारज्ञानदशायामपीति।** जातौ विशिष्टसत्तात्वावच्छिन्नाभाव-

प्रतियोगिव्यधिकरणाभावाप्रतियोगित्वज्ञानात् विशिष्टसत्वसाध्यकानुमितिप्रसंगस्यैव प्रकृतेऽतिप्रसंगपदार्थत्वात् , विशिष्टसत्वस्याप्युक्तरीत्या व्याप्यवृत्तित्वविरहाच्च ।

---

लक्ष्मीः

वद् वृत्तित्वरूपस्य जातिसमानाधिकरणाभावप्रतियोगिसाध्यकत्वरूपस्य वा व्यभिचारस्य ज्ञानदशायामपीत्यर्थः । अपिना व्यभिचारज्ञानाभावदशायाः समुच्चयः । **विशिष्टसत्वधर्मिकजातिमन्निष्ठप्रतियोगिव्यधिकरणाभावाप्रतियोगित्वज्ञानादिति ।** विशिष्टसत्वं जातिमन्निष्ठत्वप्रतियोगिताश्रयाधिकरणावृत्त्यभावाप्रतियोगीति ज्ञानादित्यर्थः । विशेषाभाववत्ताज्ञानं प्रति सामान्यवत्तानिश्चयस्याऽप्रतिबन्धकत्वादिति यावत् । **अतिप्रसंगपदार्थत्वादिति ।** गुणे विशिष्टसत्तावानित्यनुमित्यापत्तिरिति भावः ।

ननु प्रतियोगिवैयधिकरण्यघटितलक्षणे व्याप्यवृत्तिसाध्यकस्थलेऽतिव्याप्तिवारणार्थकमग्रे साध्यतावच्छेदके व्याप्यवृत्तितानवच्छेदकत्वविशेषणं निवेशयिष्यते एवं च नोक्तातिप्रसंग इत्यत आह । **विशिष्टसत्वस्यापीति ।** एतेन व्यभिचारिणः सर्वलक्षणस्यालक्ष्यतया कथमतिव्याप्तिदानमयुक्तमिति निरस्तम् । व्याप्यवृत्तितानवच्छेदकत्वनिवेशेनैवातिप्रसंगवारणात् । **व्याप्यवृत्तित्वविरहाच्चेति ।** साध्यतावच्छेदकसंबन्धेन यत्स्वाधिकरणं तदवृत्त्यभावस्य तादृशसंबन्धावच्छिन्नप्रतियोगित्वाभावरूपव्याप्यवृत्तित्वस्य साध्ये एव सत्वादित्यर्थः ।

न चैवं पारिभाषिकव्याप्यवृत्तितानवच्छेदकत्वस्यापि सत्त्वात्कथमतिव्याप्तिवारणमिति वाच्यम् । इदानीं पारिभाषिकव्याप्यवृत्तित्वादरे "नच विशिष्टसत्त्वस्य व्याप्यवृत्तितया" ग्रन्थविरोधापत्तेः । विशिष्टसत्वस्य तादृशव्याप्यवृत्तित्वविरहात् । परंतु अव्याप्यवृत्तिसाध्यकस्थलीयव्यवहारौपयिकलक्षणे एव व्याप्यवृत्तितानवच्छेदकत्वं साध्यतावच्छेदके निवेशनीयम् , नानुमित्यौपयिकलक्षणे, प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकमात्मत्वमिति ज्ञानादपि अयमात्मा इति व्याप्यवृत्तिसाध्यकानुमित्युदयात् , एवं च प्रतियोगिवैयधिकरण्यघटितलक्षणस्य तादृशविशेषणानाक्रान्तत्वेनाऽतिप्रसंगोऽ-

विशिष्टस्याऽतिरिक्तत्वमते तत्रातिव्याप्त्यसंभवादाह। भूतत्वेति। प्राञ्चस्तु विशिष्टसत्त्वस्य व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशाद् भूतत्वेति साध्यान्तरम्। तत्र च भूतत्वमात्मान्यत्वे सति विशेषगुणवत्त्वम्। मूर्तत्वमवच्छिन्नपरिमाणवत्त्वम्। तदुभयं चाऽव्याप्यवृत्त्येव, घटादावुत्पत्तिकालावच्छेदेन तदुभयाभावसत्वादित्याहुः।

---

लक्ष्मीः

त्त्येवेति विभावनीयम्।

स्थलान्तरानुसरणे बीजमाह। **विशिष्टस्यातिरिक्तत्वमते इति।** तथाच जात्यधिकरणगुणादिनिष्ठसत्ताभावप्रतियोगिताश्रयीभूता विशिष्टसत्ता एव न तु सत्ता, तस्याः विशिष्टसत्तातो भिन्नत्वादिति प्रतियोगिताश्रयाधिकरणावृत्तित्वनिवेशेपि विशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तिर्न संभवतीति भावः। **तत्र।** विशिष्टसत्तावान् जातेरित्यत्र। **व्याप्यवृत्तितया।** व्याप्यवृत्तित्वमवच्छिन्नवृत्तिकान्यत्वरूपं यथाश्रुतमेवेति भावः। अथ वा स्वसमानाधिकरणाभावाप्रतियोगित्वमेव व्याप्यवृत्तित्वम्। अभावे स्वसामानाधिकरण्यं च स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धेन। **अतिव्याप्त्यसंभवादिति।** विशिष्टसत्ताभावस्यापि प्रतियोगिव्यधिकरणत्वादिति भावः। यथा विशिष्टसत्त्वं व्याप्यवृत्ति तथा भूतत्वमूर्तत्वोभयं न व्याप्यवृत्तीत्याह। **तत्र चेति।** भूतत्वमूर्तत्वोभयस्मिन्नित्यर्थः। सप्तम्यर्थो घटकत्वम् अन्वयश्चास्य भूतत्वमित्यनेन मूर्तत्वमित्यनेन च। **आत्मान्यत्वे सतीति।** वै० सामानाधिकरण्य सं.। अन्यथाऽऽत्मनो भूतत्वं स्यात्। **तदुभयं चेति।** भूतत्वमूर्तत्वोभयं चेत्यर्थः। **तदुभयाभावसत्वादिति।** तादृशविशेषगुणाभाव–तादृशपरिमाणाभावयोः सत्वादित्यर्थः।

केचित्तु समवायेन साध्यतायामतिव्याप्तिमुक्त्वा स्वरूपेण भूतत्वमूर्तत्वोभयसाध्यकस्थले तामाह। **दीधितौ–भूतत्वमूर्तत्वोभयेति।** भूतत्वमूर्तत्वयोः विशेषगुणविशेष-परिमाणविशेषरूपत्वेऽननुगमेन भूताद्यनुगताकारप्रतीत्यनिर्वाहः। एवं पृथिव्यादिचतुष्टयवृत्तिगुणव्यक्तेर्मनस्यभावेनोभयाभावस्य यथाश्रुतप्रतियोग्यसामाना-

न चोभयत्वमेकविशिष्टापरत्वम्, विशिष्टं च केवलादन्यदिति तदभावो मनसि सहजत एव प्रतियोगिव्यधिकरण इति वाच्यम् ।

---

सार्वभौममतमाशङ्कते । नचेति । वाच्यमिति परेणान्वयः । तदभावः । भूतत्वमूर्तत्वोभयाभावः । सहजत एवेति । प्रतियोगितावच्छेदकावच्छिन्नत्वाप्रवेशेपीत्यर्थः ।

उभयत्वं हि न विशिष्टत्वादनतिरिक्तम्, न वा तदवच्छिन्नाभावस्तदवच्छिन्नाभावात्, वैशिष्ट्यविरहेपि घटत्वपटत्वयोरुभयत्वस्य उभयत्वेन तदभावस्य च प्रत्यक्षसिद्धत्वात् ।

---

लक्ष्मीः

धिकरण्यसंभवेन प्रतियोगितावच्छेदकावच्छिन्नेत्यस्य व्यावृत्त्यसंगतिरपि, अतस्तयोः पृथिव्यादिपञ्चान्यतमत्वरूपतैवेति स्वरूपसंबन्धेनैव साध्यत्वम् । दीधितिकृदुक्तयोः साध्ययोर्व्याप्यवृत्तित्वे तु पटान्यत्वविशिष्टसंयोगवान् द्रव्यत्वादित्यत्रातिव्याप्तिर्बोध्येत्याहुः ।

दीधितौ । नचेति । वाच्यमित्यनेनान्वयः । उभयत्वम् । भूतत्वमूर्तत्वोभयत्वम् । एकविशिष्टापरत्वम् । भूतत्वविशिष्टमूर्तत्वत्वम् । वैशिष्ट्यातिरिक्तं उभयत्वं नास्तीत्याशयः । तथा च भूतत्वमूर्तत्वोभयत्वस्य भूतत्वविशिष्टमूर्तत्वरूपप्रतियोग्यसमानाधिकरणत्वादेव नातिव्याप्तिरिति भावः । ननु विशिष्टमूर्तत्वस्य शुद्धमूर्तत्वानतिरिक्ततया मूर्तत्वरूपप्रतियोगिसामानाधिकरण्येन कथं तदभावः प्रतियोगिव्यधिकरण इत्यत आह । विशिष्टं चेति । भूतत्वमूर्तत्वं चेत्यर्थः । केवलात् । मूर्तत्वात् । अन्यत् । भिन्नम् । प्रतियोगितावच्छेदकावच्छिन्नत्वाप्रवेशेपीति । प्रतियोगिताश्रयाधिकरणावृत्तित्वमात्र प्रवेशेपीति यावत् । मनोवृत्तिकेवलमूर्तत्वस्य भूतत्वविशिष्टमूर्तत्वरूपप्रतियोगिनो भिन्नत्वादिति भावः ।

समाधत्ते । उभयत्वं हीति । हि । यस्मात् । उभयत्वं विशिष्टत्वात् एकविशिष्टापरत्वात् नाऽनतिरिक्तम्, अपि तु अतिरिक्तमेव । तस्मान्नदर्शितरीत्या भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यत्रातिव्याप्तिवारणं

लक्ष्मीः

संभवतीति भावः।

अथ उभयत्वं न विशिष्टत्वादनतिरिक्तमित्यत्र नञ्द्वयोपादानं किमर्थम्, उभयत्वं विशिष्टत्वादतिरिक्तमित्यस्यैव सम्यक्त्वादिति चेन्न। उभयत्वत्वावच्छेदेनाऽतिरिक्तत्वलाभार्थं तदुपादानात्। नञोऽनुयोगितावच्छेदकावच्छेदेनान्वयबोधजनकत्वस्य व्युत्पत्तिसिद्धत्वादिति भावः[1]।

---

दिव्या

१. ननु तथापि उभयत्वं न विशिष्टत्वमित्यनुमित्युक्त्यापि तद्बोधसंभवेन तदुपेक्ष्य नञ्द्वयाभिधानमनुचितमिति चेत्—अत्रकेचित्—उभयत्वं विशिष्टत्वादतिरिक्तमित्यनुमितिहेतोर्वैशिष्ट्यविरहेपि घटत्वपटत्वयोरुभयत्वस्य प्रत्यक्षसिद्धत्वादित्यस्य पटत्वांशे घटत्ववैशिष्ट्यज्ञानाविषयत्वेपि तदुभयत्वस्य प्रत्यक्षविषयत्वादित्यर्थः। पटत्वांशे घटत्ववैशिष्ट्याविषयकप्रत्यक्षविषयत्वादिति यावत्। फलतो वैशिष्ट्यत्वेनानवच्छिन्नविषयितानिरूपकत्वादिति पर्यवसितोर्थः। एवं च संख्यापरिमाणोभयीयज्ञानमित्यादौ संख्यापरिमाणोभयत्वस्य फलतस्तादृशैकज्ञानविषयत्वरूपतया वैशिष्ट्यस्यापि तत्र विषयतया तयोरुभयत्वविशिष्टत्वयोर्भेदाऽसंभवेन यथा श्रुतस्य वैशिष्ट्यभेदरूपसाध्यस्यांशतो बाधापत्तेः। वैशिष्ट्यत्वेनाऽनवच्छिन्नविषयितानिरूपकत्वस्य वैशिष्ट्यभेदार्थकस्य साध्यत्वे साध्यहेत्वोरविशेषापत्तिरतो नञ्द्वयाभिधानम्। तेन वैशिष्ट्यत्वेनानवच्छिन्नविषयितानिरूपकत्वाभावाभाववदिति साध्यम्, वैशिष्ट्यत्वेनानवच्छिन्नविषयितानिरूपकत्वादित्येव हेतुरिति पर्यवसितम्। वैशिष्ट्यत्वावच्छिन्नविषयित्वउभयत्वावच्छिन्नविषयित्वयोर्भेदाच्च नोक्तबाधः। असमानप्रकारकतया च हेतोर्भानं न सिद्धसाधनतया विरोधि, नहि वन्हिमदिति ज्ञानं वन्ह्यभावाभाववदिति अनुमितौ विरोधीति कश्चिदभ्युपैतीत्याहुः।

अन्ये तु उभयत्वस्य वैशिष्ट्यस्य चैकस्याभावेन विशिष्यैव पक्षत्वेन साध्यत्वेन च घटत्वपटत्वोभयं घटत्वविशिष्टपटत्वादतिरिक्तमित्यादिरूपेणैव साध्यता, एवं च घटत्वविशिष्टपटत्वासिद्ध्या साध्याप्रसिद्धिवारणाय घटत्ववैशिष्ट्यविषयितानिरूपितपटत्वविषयिताशून्यप्रतीतिविषयत्वमेव साध्यं विवक्षणीयम्, तादृशीविषयिता च भ्रमे एव प्रसिद्धा, तथा च हेतोः साध्याविशेषः, 'वैशिष्ट्यविरहेपि प्रत्यक्षसिद्धत्वादित्यस्यापि वैशिष्ट्यविषयिताशून्यप्रत्यक्षविषयत्वरूप एवार्थे पर्यवसानादिति नञ्द्वयगर्भसाध्यनिर्देशः, तेन तादृशविषयिताशून्यप्रतीतिविष-

ननूभयत्वस्य विशिष्टत्वातिरिक्तत्वेपि सहजतः प्रतियोगिव्यधिकरणस्य विशिष्टत्वावच्छिन्नादिभावस्य प्रतियोगितावच्छेदकमेवोभयत्वमतो नातिव्याप्तिः, विशिष्टत्वावच्छिन्नाभावस्योभयत्वावच्छिन्नाभावानतिरेकादत आह। न वेति। तदवच्छिन्नाभावः। उभयत्वावच्छिन्नाभावः। तदवच्छिन्नाभावात्। वैशिष्ट्यावच्छिन्नाभावात्। लिङ्गव्यत्ययेनाऽनतिरिक्त इत्यनुषज्यते। तथा चाऽतिरिक्त एवेति भावः।

---

## लक्ष्मीः

ननु उभयत्वस्य विशिष्टातिरिक्तत्वमतिव्याप्तिसंपादकतया व्यवस्थापनीयम्, अन्यथा भूतत्वमूर्तत्वोभयाभावस्य भूतत्वविशिष्टमूर्तत्वरूपप्रतियोग्यसमानाधिकरणत्वादेवाऽतिव्याप्तिर्न स्यात्, न तूभयत्वावच्छिन्नाभावस्य विशिष्टाभावातिरिक्तत्वमपि, तस्याऽतिव्याप्त्यसंपादकत्वादिति न वेत्यादिना तदतिरिक्तत्वव्यवस्थापनमसंगतमत आह। **नन्विति। सहजतः।** प्रतियोगितावच्छेदकावच्छिन्नत्वाप्रवेशेपि। **उभयत्वावच्छिन्नाभावानतिरेकादिति।** तथा च विशिष्टाभावस्योभयाभावादनतिरिक्तत्वे उभयत्वस्य हेतुसमानाधिकरणविशिष्टरूपप्रतियोग्यसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वान्नातिव्याप्तिरिति तयोरतिरिक्तत्वस्यातिव्याप्तिसंपादकत्वेन न वेत्यादिना तयोरतिरिक्तत्वव्यवस्थापनं नायुक्तमिति भावः। नपुंसकलिंगस्य अनतिरिक्तमित्यस्य तदवच्छिन्नाभाव इत्यनेनाऽन्वयाऽसंभवादाह। नानतिरिक्त इतीति।

---

## दिव्या

त्वाभावाभावप्रतीतिविषयत्वमेव साध्यमित्याहुः।

वस्तुतस्तु अत्र घटत्वपटत्वोभयत्वरूपेण न पक्षता उभयत्वस्य वैशिष्ट्यानतिरिक्तत्ववादिमते तस्याऽलीकत्वात्, किन्तु प्रसिद्धतावदुभयव्यक्तीनां तावद्विषयकज्ञानविषयत्वरूपेणैव पक्षता। न च सामान्यरूपेण पक्षत्वे घटत्वपटत्वयोरित्यादिहेतोर्भागासिद्धिरिति वाच्यम्। सामान्येन विरुद्धत्वज्ञानकालीनतत्तद्वैशिष्ट्यविषयिताशून्यप्रत्यक्षविषयत्वादित्यस्यैव च हेतुत्वात्। न हि सार्वभौमेण सामान्यतो वैशिष्ट्याभेदः साधयितुं शक्यते, वैशिष्ट्यस्यैकस्याभावात्। किन्तु तत्तद्वैशिष्ट्यातिरिक्तभेद एव साधनीयः, अस्माभिरपि तद्व्यतिरेक एव साधनीय इति साध्यस्य नञ्द्वयगर्भताऽऽवश्यकीति दिक्।

न चान्यत्रोभयाभावस्य विशिष्टाभावातिरिक्तत्वेपि प्रकृते भूतत्वविशिष्टमूर्तत्वाभावस्यैव तदुभयत्वावच्छिन्नप्रतियोगिताकत्वं, समनियताभावयोर्लाघवेनैक्यादिति वाच्यम्। तावतापि हेतुमतो यादृशप्रतियोगिताश्रयानधिकरणत्वं तादृशप्रतियोगितानवच्छेदकत्वस्य भूतत्वमूर्तत्वोभयत्वेऽनपायादतिव्याप्तितादवस्थ्यादिति भावः।

लक्ष्मीः

**नचेति**। वाच्यमित्यनेनान्वयः। **अन्यत्र**। विरुद्धघटत्वपटत्वोभयाभावादौ। **तावतापि**। विशिष्टाभावोभयाभावयोरैक्येपि। अतिव्याप्तेरनुद्धारादित्यनेनान्वयः। **हेतुमतः**। मनसः। यादृशप्रतियोगिताश्रयानधिकरणत्वमिति। अथ यादृशप्रतियोगितापदेन भूतत्वमूर्तत्वोभयत्वावच्छिन्ना प्रतियोगिता धर्तुं न शक्यते, मनसस्तादृशप्रतियोगिताश्रयमूर्तत्वाधिकरणत्वात्, भूतत्वविशिष्टमूर्तत्वत्वावच्छिन्नप्रतियोगिताया धर्तुं शक्यत्वेपि तादृशप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादतिव्याप्तिस्तदवस्थैवेति भावः। इदमत्र तत्वम्। सामान्यतः प्रतियोगिताश्रयाधिकरणत्वाभावस्याप्रसिध्या प्रतियोगितायां यादृशत्वं विवक्षणीयम्। एवं च प्रतियोगितावच्छेदकत्वानुपादाने यदभावीय यत्प्रतियोगिताश्रयानधिकरणं हेत्वधिकरणं तदभावतादृशप्रतियोगितानवच्छेदकत्वमेव वक्तव्यम्, "एको द्वित्वावच्छिन्नाभावप्रतियोगी" ति प्रतीत्या उभयाभावीयप्रतियोगितायाः प्रत्येकस्मिन् सत्वेनोभयाभावीय प्रतियोगितायाः यादृश प्रतियोगिताश्रयानधिकरणं हेत्वधिकरणं" तादृशत्वाभावेन विशिष्टाभावीय प्रतियोगिताया लक्षणघटकतया तदनवच्छेदकत्वस्योभयत्वे सत्वेनातिव्याप्तिदुरुद्धरैव। समनियताभावयोरैक्येपि तत्प्रतियोगिताभेदादिति।

उभयत्वं हि न विशिष्टत्वादनतिरिक्तम्, तत्र हेतुः वैशिष्ट्याग्रहेपि घटत्वपटत्वयोरुभयत्वस्य प्रत्यक्षसिद्धत्वादिति, घटत्वपटत्वयोः सामानाधिकरण्यविरहेपि तत्रोभयव्यवहारविषयतावच्छेदकस्य प्रत्यक्षसिद्धत्वादित्यर्थः। यद्यपि घटत्वपटत्वोभयमिति प्रतीतौ कालिकसंबन्धघटितसामानाधिकरण्यवैशिष्ट्यस्य विषयतासंभवः, तथापि वाच्यत्वघटत्वोभयं समवेतमिति व्यवहारविरहेण उभयं समवेतमिति प्रतीतिव्यवहारयोः समवायिसमवेतत्वरूपवैशिष्ट्यविषयताया अभ्यु-

उभयत्वस्येति। प्रत्यक्षसिद्धत्वादिति परेणान्वयः। तथा च विरुद्धयोरिव समानाधिकरणयोरपि उभयत्वमतिरिक्तमेव, विरुद्धाविरुद्धस्थलीयोभयत्वप्रतीत्योः समानाकारकत्वानुभवात्, भूतत्वमूर्तत्वयोर्विरुद्धत्वभ्रमदशायामपि उभयत्वस्य प्रत्ययाच्चेति भावः।

---

लक्ष्मीः

पर्यन्तव्यतया घटत्वपटत्वोभयं समवेतमित्यादौ तादृशवैशिष्ट्याप्रसिद्धया व्यासज्यवृत्तिधर्म एव विषय इति भावः। तथा च तदनुरोधेन व्यासज्यवृत्तिधर्मविशेषस्य उभयव्यवहारविषयताया आवश्यकत्वे एकविशिष्टापरत्वस्य तद्व्यवहारविषयत्वमप्रामाणिकम्, अतो न भूतत्वमूर्तत्वोभयवानित्यत्र एकविशिष्टापरत्वस्य साध्यतावच्छेदकत्वप्रसक्तिः, तथा सति अनुमितेरुभयवानित्याकारकतानुपपत्तेरित्यलम्।

न वा तदवच्छिन्नाभावस्तदवच्छिन्नाभावादित्यत्र हेतुः वैशिष्ट्यविरहेपि उभयत्वावच्छिन्नप्रतियोगिताकाभावस्य प्रत्यक्षसिद्धत्वादिति। ननु विरुद्धोभयत्वं विशिष्टत्वाद् भिन्नमस्तु वैशिष्ट्याप्रसिद्धेः, न तु समानाधिकरणोभयत्वं तथा वैशिष्ट्यस्य प्रसिद्धत्वादतो भावमाह। **तथा चेति**। विरुद्धोभयत्वस्य तद्भिन्नत्वे चेत्यर्थः। **विरुद्धयोः**। घटत्वपटत्वयोः। **समानाधिकरणयोः**। भूतत्वमूर्तत्वयोः। **समानाकारत्वादिति**। घटत्वपटत्वोभयमिति वत् भूतत्वमूर्त्तत्वोभयमिति प्रतीतेरपि समानाकारत्वानुभवादित्यर्थः। **भूतत्वमूर्तत्वयोर्विरुद्धत्वभ्रमदशायामपि**। भूतत्वमूर्त्तत्वे विरुद्धे इति भ्रमदशायामपि। **उभयत्वप्रत्ययाच्चेति**। भूतत्वमूर्तत्वोभयमिति प्रत्ययाच्चेत्यर्थः। भूतत्वविशिष्टमूर्तत्वमित्यप्रत्ययाच्चेत्यपि बोध्यम्।

ननु तथापि व्यासज्यवृत्तिनिरुक्तोभयत्वेन साध्यत्वे मूर्तत्वस्य व्यभिचारितापि न संभवति एकप्रतियोगिमत्यपि उभयाभावस्य प्रतियोगिसमानाधिकरणतया मूर्तत्वाधिकरणे मनसि उभयाभावस्य प्रतियोगिव्यधिकरणत्वाभावात्, हेतुमति प्रतियोगिव्यधिकरणस्यैव च साध्याभावस्य व्यभिचारित्वात्, व्यभिचारलक्षणे तु प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यपर्यन्तानिवेशादित्याशंकते। **दीधितौ**।

न च तत्र व्याप्तिरेव, उभयत्वाधिकरणस्य मूर्तत्वस्य मनसि सत्वादिति वाच्यम् । तथात्वेपि उभयत्वेन रूपेण तत्रासत्वात्, नात्रोभयमिति प्रतीतेर्दुर्वारत्वात् ।

---

नचेति । वाच्यमिति परेणान्वयः । तत्र । भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यत्र । व्याप्तिरेवेति । तथा च तस्य लक्ष्यतया तद्वारणप्रयोसोऽनुचित इति भावः । तथात्वेपीति । उभयत्वाश्रयस्य मूर्तत्वस्य मनसि सत्वेपीत्यर्थः । तथा च हेतुताव-च्छेदकावच्छेदेन साध्यतावच्छेदकावच्छिन्नवत्तास्थले एव व्याप्तिरतो नैतल्लक्ष्यमिति भावः । वृत्तिमति व्याप्त्यभावस्य व्यभिचारं ग्राहयति । नात्रोभयमिति । अत्र । मूर्तत्वाश्रये मनसि ।

---

लक्ष्मीः

नचेति । व्याप्तिरेव । व्याप्तिरिष्टैव । तथाच । व्याप्तिरिष्टत्वे च । तस्य । मूर्तत्वहेतोः । लक्ष्यतया । व्याप्तिलक्षणलक्ष्यतया । तद्वारणप्रयासः । तत्राप्तिव्याप्तिवारणार्थं प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशः । प्रतियोगिताश्रयानधिकरणत्वस्यैव सम्यक्त्वादिति यावत् । उभयत्वेन रूपेण । उभयत्वावच्छिन्नवत्तायाः । तत्र । मनसि । तत्र चोभयत्वावच्छिन्नाधिकरणताया मनसि असत्वादित्यर्थः । साध्यतावच्छेदकावच्छिन्नवत्तास्थले एवेति । एव कारेण साध्यतावच्छेदकाश्रयवत्तास्थलव्यावृत्तिः । तथा च तत्रोभयत्वविशिष्टवैशिष्ट्यावगाह्यनुमितेर्भ्रमतया तत्प्रयोजकहेतोर्न सद्धेतुत्वस्वीकार इति भावः । अत एव व्यभिचारलक्षणेपि प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यपर्यन्तं निवेश्यमेव । वृत्तिमति । हेतौ । व्यभिचारनियतत्वात् । व्यभिचारव्याप्यत्वात् । गगनहेतौ व्याप्त्यभावेपि व्यभिचारो नास्तीत्यतस्तद्व्यवच्छेदायोक्तम् । वृत्तिमतीति । गगनहेतौ अव्याप्यत्वं तु साध्यासामानाधिकरण्यप्रयुक्तं बोध्यम् । अत्र । मनसि । उभयं । भूतत्वमूर्त्तत्वोभयं । प्रतीतेः । भुतत्वमूर्तत्वोभयाभाववन्मन इति ज्ञानस्य । तथा चोभयत्वावच्छिन्नाभाववद्वृत्तित्वस्य मूर्तत्वे सत्वेन व्यभिचार स्पष्ट एवेति । इदमुपलक्ष-

अत्यन्त पदं चात्यन्ताभावत्वनिरूपक प्रतियोग्यसामानाधिकरण्यस्य—अत्यन्ताभावत्वनिरूपकप्रतियोगितायाश्च लाभाय। अन्यथा सर्वस्यैवाभावस्य स्वसमानाधिकरणाभावान्तरभिन्नत्वा-

---

ननु वन्ह्यादिभेदमादायाव्याप्तेः प्रतियोग्यसमानाधिकरणपदेनैव वारणादत्यन्तपदं व्यर्थमत आह अत्यन्तपदं चेति। अत्यन्ताभावत्वनिरूपकं यत्प्रतियोगित्वं तदाश्रयवैयधिकरण्यविवक्षायाः फलमाह। अन्यथेति। तद्भेदस्य। स्वसमानाधिकरणाभावान्तरभेदस्य। स्वस्वरूपानतिरिक्ततयेति। अनवस्थाभयेनत्यादिः। दुर्लभत्वापत्ते-

---

लक्ष्मीः

णाम्। गुणकर्मान्यत्वविशिष्टसत्ताभाववान् गुण इति प्रतीतेर्दुःखेन वारयितुमशक्यत्वादित्यपि बोध्यम्।

प्रतियोग्यसामानाधिकरण्यस्याभावविशेषणत्वे लक्षणेऽत्यन्तपदं व्यर्थम्, धूमादिसमानाधिकरणवन्ह्यादिभेदप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके सत्वेपि तादृशभेदस्य प्रतियोगिसमानाधिकरणत्वेनैव वारणादित्याशंकते। **नन्विति।** दीधितौ-**अत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यस्येति।** लाभायेत्यग्रिमेणान्वयः। एक एव अभावः कस्यचिदत्यन्ताभावः "यथा घटाभावो घटस्य" कस्यचिद् भेदः "यथा घटाभावः पटाभावस्य"। तत्र यस्यात्यन्ताभावः स "घटः" अत्यन्ताभावत्वनिरूपकप्रतियोगी तदसामानाधिकरण्यलाभायेत्यर्थः। **अत्यन्ताभावत्वनिरूपकप्रतियोगिताया इति।** प्रतियोगितानवच्छेदकमित्यत्र या प्रतियोगिता प्रविष्टा तत्रात्यन्ताभावत्वरूपानुयोगितानिरूपकत्वस्य लाभायेत्यर्थः। **अन्यथा।** प्रतियोग्यसामानाधिकरण्यघटकप्रतियोगितायामत्यन्ताभावत्वरूपानुयोगितानिरूपकत्वस्यानिवेशे। **सर्वस्यैवाभावस्य।** घटाभावादेः। **स्वसमानाधिकरणाभावान्तरभिन्नत्वात्।** **स्वं।** घटाभावः तत्समानाधिकरणं यदभावान्तरं पटाभावादि तद्भिन्नत्वात्। घटाभावस्य पटाभावभेदवत्वादिति यावत्। **तद्भेदस्य।** पटाभावभेदस्य। **स्वरूपपानतिरिक्ततयेति।** घटाभावाभिन्नतयेत्यर्थः। ननु घटा-

**त्तद्भेदस्य स्वस्वरूपानतिरिक्ततया प्रतियोग्यसमानाधिकरणस्यैव दुर्लभत्वापत्तेः ।**

---

रिति । हेतुसमानाधिकरणअभावमात्रस्यैव स्वात्मकभेदप्रतियोगियदभावान्तरं तत्समानाधिकरणत्वादिति भावः ।

---

लक्ष्मीः

भावे वर्त्तमानस्य पटाभावभेदस्य घटाभावस्वरूपत्वं नाङ्गीक्रियते अपि अतिरिक्त एव पटाभावभेद इत्यत आह । **अनवस्थाभयेनेत्यादिः** । तथा चाभावाधिकरणकाभावस्याऽतिरिक्तत्वे पटाभावभेदवत्तदभावभेदभेदादेरप्यतिरिक्ततयाऽनवस्थाप्रसंगादिति भावः । **स्वात्मकभेदप्रतियोगियदभावान्तरमिति** । स्वं घटाभावः तदात्मको यः पटाभावभेदः तत्प्रतियोगी पटाभावः तत्समानाधिकरणत्वात्, अभावाधिकाभावस्याधिकरणस्वरूपत्वादिति भावः । एवं च घटाभावस्य प्रतियोगी यथा घटः तथा पटाभावोपि इति पटाभावात्मकप्रतियोगिसमानाधिकरणत्वात्प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरतोऽत्यन्ताभावत्वनिरूपकत्वस्य प्रतियोगितायां निवेशः ।

यद्यपि घटाभावादिवृत्तेः पटाभावभेदस्य घटाभावादिरूपाधिकरणस्वरूपत्वं न संभवति, तादृशभेदस्याभावमात्राधिकरणकत्वाभावात्, एवं घटाभावात्मकत्वे भावप्रतियोगिकत्वेनाऽभावप्रतियोगिकत्वाभावाच्च । तथापि अधिकरणभेदेनाऽभावभेदाभ्युपगमे अभावमात्राधिकरणकत्वमक्षतमेव, एवं तादृशभेदस्य घटाभात्वेन भावप्रतियोगिकत्वेपि तादृशभेदत्वादिनाऽभावमात्र प्रतियोगिकत्वमस्त्येव, अभावमात्रप्रतियोगिक इत्यनेनाभावमात्रवृत्तिप्रतियोगिताक इति वा विवक्षणीयम्, प्रतियोगितावच्छेदकभेदेन प्रतियोगिताभिन्नैवेति । यद्वा स्वात्मकभेदेत्यनेन घटाभावभिन्नभेदोक्त्या पटाभावभेदस्याधिकरणस्वरूपत्वाऽसंभवेपि न क्षतिरिति ध्येयम् ।

इदमत्राकूतम् । भावात्यन्ताभावो नाधिकरणस्वरूपः, अनवस्थाविरहात् । तथा हि—समानाधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेण योऽभावः स प्रथमाभावप्रतियोग्यात्मा तदभावश्च प्रथमाभावः । व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य

न च भावस्वरूपाभावस्यैव प्रतियोग्यसामानाधिकरण्यं सुलभमिति वाच्यम्। तस्यापि स्वसमानाधिकरणाभावान्तरभिन्नत्वात्, अभावमात्राधिकरक इव अभावमात्रप्रतियोगिकोपि विशिष्टाभावाद्यनात्मकोऽभावो अधिकरणभिन्नो नेष्यते लाघवात्। अग्रे विवक्षणीयस्य साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धेन प्रतियोग्य-

लक्ष्मीः

स्वरूपेण योऽभावः स असिद्ध एव। व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकः सर्वोप्यभावो गगनाभाव एव। नित्याभावस्य कालिकेन सर्वोप्यभावा, कालिकेन घटत्वाभाव एव स्वरूपेण तदभावश्च प्रतियोगिरूपः, एवं विशेषरूपेण संसर्गता च न स्वीक्रियते इति अभावभेद एवाधिकरणात्मा इति सिद्धम्।

ननु वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणघटाभावस्य प्रतियोगी यथा घटस्तथा पटाभावोपि तथा च पटाभावरूपप्रतियोगिसमानाधिकरणतया प्रतियोगिव्यधिकरणाभावस्य दुर्लभत्वेपि वन्ह्यभावाभावस्य प्रतियोगिवैयधिकरण्यं सुलभम् अभावाधिकरणकाभावस्यैवाधिकरणस्वरूपत्वादित्याशंकते। **न चेति।** वाच्यमित्यनेनान्वयः। **भावस्वरूपाभावस्यैवेति।** पर्वतान्यत्वाभावस्य वन्ह्यभावाभावस्यैव चेत्यर्थः। एव कारेण भावभिन्नाभावस्य व्यावृतिः। वन्ह्यभावाभावादिवृत्ति अभावस्याऽभावाधिकरणकत्वाभावेन न तत्स्वरूपतेत्यभिमानः। समाधत्ते। **तस्यापि।** वन्ह्यभावाभावस्यापि। **स्वसमानाधिकरणेति।** स्वं—वन्ह्यभावाभावः तत्समानाधिकरणं यदभावान्तरं—घटाभावः—तद्भिन्नत्वादित्यर्थः। तथा च वन्ह्यभावाभावस्य प्रतियोगी घटाभावोपीति भावः। ननु भाववृत्तेर्भेदस्य नाधिकरणस्वरूपता संभवः, अभावमात्राधिकरणकत्वाभावादत आह। **अभावमात्रप्रतियोगिकोपीति।** तथा च भाववृत्तेर्भेदस्याभावमात्रानधिकरणकत्वेपि :अभावमात्र प्रतियोगिकत्वादेवाऽधिकरणस्वरूपतेत्याशयः। **विशिष्टाभावाद्यनात्मक इति।** अभाव प्रतियोगिकस्य विशिष्टाभावस्यापि अधिकरणरूपत्वे ह्रदे ह्रदवृत्तित्वविशिष्टघटाभावो नास्ति इति प्रत्ययापत्तेः, ह्रदवृत्तित्वविशिष्टरूपवन्ह्यभावस्य तत्र सत्वात्। यद्वा विशिष्टाभावेत्य

सामानाधिकरण्यस्य वन्हिमान् धूमादित्यादौ घटाद्यभावे सत्वान्न सर्वत्राप्रसिद्धिः किन्तु स्वरूपसंबन्धेन अभावस्य साध्यतायामेवेति सूचयितुमप्रसिद्धिमपहाय दुर्लभत्वमित्युक्तम् ।

---

लक्ष्मीः

स्य विशिष्टप्रतियोगिकाभावेत्यर्थः । तथा च विशिष्टाभावस्याधिकरणरूपत्वे घटाभावस्य घटाभावप्रतियोगिकत्वापत्तिः, घटाभावप्रतियोगिकस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्य घटाभावेपि सत्वेन तदात्मकत्वात् । **अग्रे विवक्षणीयस्येति** । वह्निमान् धूमादित्यत्र समवायेन वन्ह्यभावमादायाऽव्याप्तिवारणायेति शेषः । **घटाभावे सत्वादिति** । घटाभावात्मकप्रतियोगिनः साध्यतावच्छेदकीभूतसंयोगसंबन्धेनाधिकरणाप्रसिद्ध्या गृहीतुमशक्यतया घटात्मकप्रतियोग्यसामानाधिकरण्यस्य घटाभावे सत्वादित्यर्थः । **अभावस्य साध्यतायामेवेति** । धूमाभाववान् वन्ह्यभावादित्यादावेत्यर्थः । प्रतियोगिऽव्यधिकरणाभावाप्रसिद्धिरिति पूर्वेणान्वयः । हेतुसमानाधिकरणघटाभावादेः घटाभावरूपप्रतियोगिसमानाधिकरणत्वादिति भावः । इदमुपलक्षणम् । वह्निमत्वप्रकारकप्रमाविशेष्यतावान् धूमादित्यत्राप्यव्याप्तिर्बोध्या[1] ।

---

टिप्पणी

१. केचित्तु ननु अत्यन्ताभावत्वनिरूपकप्रतियोगिताकाभावात्यन्तपदाभावे भावसाध्यके वन्हिमान् धूमादित्यादावव्याप्तिसंभवे तत्परित्यागोऽनुचितः, तत्र घटाभावादेरपि घटाभाववद्भिन्नभेदस्वरूपत्वात्तत्प्रतियोगिताश्रयेण वह्निना समानाधिकरणत्वादिति चेन्न । घटाभाववत्त्वस्य स्वरूपसंबन्धेन विवक्षणे वन्हेरपि स्वरूपेण तद्वत्त्वात्तद्भिन्नत्वविरहात् । वन्हिभिन्नानुयोगिकस्वरूपेण तद्वत्त्वोक्तौ तद्भिन्नभेदप्रतियोगितावच्छेदकत्ववन्हित्वादावेव स्वीकारात् । विषयितासंबन्धेन घटाभाववद्भिन्नभेदमादायाऽव्याप्तिसंभवेपि वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकताघटकत्वानङ्गीकारात्, अतोऽभावसाध्यकस्थलानुसरणम् ।

न च घटाभावानुयोगिकस्वरूपेण घटाभाववद्भिन्नभेदस्यापि घटाभावस्वरूपत्वेन तत्प्रतियोगिताश्रयवन्हेः पर्वते सत्वेन वन्हिमान् धूमादित्यत्रापि प्रतियोगिऽव्यधिकरणाभावाप्रसिद्धिरिति वाच्यम् । स्वावच्छिन्नभिन्नभेदस्य स्वस्वरूप-

सर्वेषामेवाऽभावानां हेतुसमानाधिकरणात्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणाभावान्तरात्मकस्य स्वभेदस्य

अत्यन्ताभावत्वनिरूपकप्रतियोगितानवच्छेदकत्वविवक्षायाः फलमाह । सर्वेषामिति । भावभेदस्यातिरिक्ततास्वीकारादाह । अभावसाध्यकेति । घटभिन्नं पटत्वादित्यादौ पटत्वसमानाधिकरणनिरुक्तप्रतियोगिव्यधिकरणगोत्वाद्यभावस्य घटभेद-

लक्ष्मी

दीधितौ सर्वेषामेवेति। साध्यीभूतानां यावतामभावानामित्यर्थः। प्रतियोगित्वादित्यनेनान्वयः । हेतुसमानाधिकरणेति । हेतुसमानाधिकरणश्चासौ अत्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणश्चेति हेतुसमानाधिकरणात्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणः,स चासौ अभावान्तरश्चेति हेतुसमानाधिकरणात्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणाभावान्तरः 'गोत्वाभाव इति यावत् ।तदात्मकस्येत्यर्थः । स्वभेदस्येति ।स्वं साध्यं घटभेदः तद्भेदस्येत्यर्थः । प्रतियोगित्वादिति । सर्वेषां साध्यीभूताभावानामिति पूर्वेणान्वयः । निरुक्तप्रतियोगिव्यधिकरणेति । अत्यन्ताभावत्वनिरूपकीभूतगोत्वनिष्ठप्रतियोगिताश्रयासमानाधिकरणत्यर्थः । ननु भावसाध्यकेपि अव्याप्तिः संभवति, घटाभावादौ वन्हिभेदस्य सत्वेन घटाभावप्रतियोगिताया वन्हौ सत्वादित्यत आह । भावभेदस्येति । तथा च ।

दिव्या

त्वानवगमात् । विशेषरूपेण संसर्गत्वानवगमाच्च ।

वस्तुतस्तु साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य स्वनिरूपितप्रतियोगितावच्छेदकतायां निवेशान्नाप्रसिद्धिसंभावना । न च वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्यकस्थलेऽव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व, साध्यतावच्छेदकनिष्ठत्वोभयाभावस्य विवक्षणीयतया विषयितासंबन्धेन घटाभाववद्विन्नमादायाऽप्रसिद्धितादवस्थ्यमिति वाच्यम् । साध्यतावच्छेदकतावटकसंबन्धावच्छिन्नावच्छेदकताकनिरूपकताकाधिकरणत्वीयस्वरूप - संबन्धेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्य निवेशात्पारिभाषिकस्य तस्यानिवेशादिति ।

प्रतियोगित्वादभावसाध्यकाव्याप्तेश्चेति संप्रदायविदः।

भिन्नत्वात्तादृशभेदस्य च गोत्वाद्यभावरूपत्वात्तत्प्रतियोगितावच्छेदकमेव घटभेदत्वमित्याव्याप्तिरिति भावः।

संप्रदाय इत्यस्वरसः, तद्बीजं तु उक्तविवक्षायामपि सर्वेषां हेतुसमानाधिकरणात्यन्ताभावानां अत्यन्ताभावत्वनिरूपकेण पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावात्मकेन प्रतियोगिना समं समानाधिकरण्यादभावसाध्यकाव्याप्तितादवस्थ्यम् यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं नादृशप्रतियोगितानवच्छेदकत्वप्रवेशे तु व्यर्थमेवात्यन्तपदमिति ध्येयम्।

लक्ष्मीः

प्रतियोगितानवच्छेदकमित्यत्र प्रतियोगितायां अत्यन्ताभावत्वनिरूपकत्वनिवेशे च। **तादृशभेदस्य**। घटभेदभेदस्य। **गोत्वाद्यभावरूपत्वादिति**। अभावाधिकरणकोऽभावप्रतियोगिकोप्यभावोऽधिकरणभिन्नो नेष्यते इति न्यायादिति भावः। प्रतियोगितायामत्यन्ताभावत्वनिरूपकत्वनिवेशे तु घटभेदभेदीय घटभेदनिष्ठप्रतियोगितायामत्यन्ताभावत्वनिरूपकत्वविरहेण गोत्वादिनिष्ठप्रतियोगिताया एव तादृशतया तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्वान्नाव्याप्तिरिति भावः।

**उक्त विवक्षायां**। प्रतियोगितायामत्यन्ताभावत्वनिरूपकत्वविवक्षायां। **स्वाभावात्मकेन**। स्वं–गोत्वाभावः। तदभावात्मकेन। **सामानाधिकरण्यादिति**। तथा च पूर्वक्षणवृत्तित्वविशिष्टो यो गोत्वाभावस्तस्य योऽभावस्तस्यापि योऽभावः स प्रथमाभाव एव स च गोत्वाभावानतिरेक एव तस्य द्वितीयाभावरूपप्रतियोगिसामानाधिकरण्यादित्यर्थः। तथा च प्रतियोगिव्यधिकरणाभाव एव दुर्लभ इति भावः। **यादृशेति**। पटाभावभेदस्य घटाभावस्वरूपत्वेपि यादृशप्रतियोगितापदेन घटनिष्ठप्रतियोगितैव धर्तव्या न तु पटाभावनिष्ठा, तदवच्छेदकपटाभावत्वावच्छिन्नाधिकरणताया हेत्वधिकरणे सत्वादित्यत्यन्तपदानुपादानेपि घटाभावस्यैव प्रतियोगिवैयधिकरण्यसंभवाद्त्यन्तपदं व्यर्थमिति भावः।

संप्रदायानुमताऽत्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशाभिप्राये-

अथ यदा गोत्वं तदा गौरित्यत्रातिव्याप्तिः, प्रलयस्य गोध्वंसवत्त्वेन गवात्यन्ताभावानधिकरणत्वात् ।

---

गोध्वसवत्त्वेनेति । प्राचीनमते गवात्यन्ताभावस्य गोध्वंसविरोधित्वादित्याशयः । न च दैशिकविशेषणतया यद्गोध्वंसस्याधिकरणं तत्रैव गवात्यन्ताभावस्य विरोधित्वात् कालिकसंबन्धेन गोध्वंसवत्यपि प्रलये तदत्यन्ताभावसत्त्वे विरोधाभावान्ना-

---

लक्ष्मीः

ऽऽशंकते । **दीधितौ । अथेति ।** गो गोत्वयोः कालिकसंबन्धेन साध्यहेतुतालाभाय गोमान् गोत्वादित्यनभिधाय कालिकसंबन्धावच्छिन्नवृत्तिताबोधकदाप्रत्ययघटितस्य यदा गोत्वं तदा गौरित्युदाहरणस्याभिधानम् । एवमग्रेपि । **प्रलयस्येति ।** व्यभिचारनिरूपकहेत्वधिकरणस्येत्यादिः । **गोध्वंसवत्त्वेनेति ।** प्रलयस्य जन्यभावानधिकरणत्वात्, खण्डप्रलयस्यापि जन्यद्रव्यानधिकरणत्वात् । अथ प्रलयस्यास्तु गोध्वंसवत्त्वम्, गवात्यन्ताभावस्य तत्राऽसत्त्वे को हेतुरित्यत आह । **प्राचीनमते इति । गोध्वंसविरोधित्वादिति ।** प्राचीनमते अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वेन प्रतियोगिना समं विरोधादिति भावः । **आशय इति ।** एतद् विरोधित्वं निराकृत्य समाधेयमित्यवगन्तव्यम् । न च समवायसंबन्धावच्छिन्नप्रतियोगिताकगवात्यन्ताभावेन सहैव ध्वंसस्य विरोधेन प्रकृते कालिकसंबन्धावच्छिन्नप्रतियोगिताकगवात्यन्ताभावस्य विरोधित्वं न संभवतीति वाच्यम् । गोध्वंसवति साक्षादौ समवायेन गौर्नास्तीति बुद्धेर्ध्वंसेनैवोपपत्तौ तत्र समवायेन गवात्यन्ताभावसत्त्वे मानाभाव इति युक्तेः संबन्धान्तरमन्तर्भाव्यापि सुवचत्वेन कालिकसंबन्धावच्छिन्नप्रतियोगिताकगवात्यन्ताभावेन सह विरोधस्य संभवात् । **शंकते । नचेति ।** वाच्यमित्यनेनान्वयः । **तत्रैव ।** स्वरूपसंबन्धेन गोध्वंसवत्येव । **तदत्यन्ताभावसत्त्वे ।** गवात्यन्ताभावसत्त्वे । **स्वरूपसंबन्धेनेत्यादिः । नातिव्याप्तिरिति ।** गवाभावस्य स्वरूपेण सत्त्वादिति भावः । न च देशे दैशिकसंबन्धेन विरोधवत्, काले कालिकसंबन्धेन विरोधात्

तिव्याप्तिरिति वाच्यम्। प्राचां मते भूतलादिदेशस्येव कालस्यापि दैशिकविशेषणतया गोध्वंसवत्वात्। अत एव त्वक्संयुक्तकाले विशेषणतया वायुनाशाधीन वायुस्पर्शनाशस्य साक्षात्कारः शब्दानित्यतायां मिश्रैरुक्तः।

यद्यप्येवमपि नातिव्याप्तिसंभवः कालिकसंबन्धावच्छिन्नगवात्यन्ताभावस्यैव प्रलये कालिकसंबन्धेन वर्त्तमानत्वात्, ध्वंसादिमति दैशिकसंबन्धेनैवात्यन्ताभावानुपगमात्, तथापि प्रतियोगिवैयधिकरण्याघटितस्य व्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्याऽवश्यं दैशिकविशेषणतयाऽभावे हेतुसामानाधिकरण्यघटितत्वात्तस्यैवातिव्याप्तिर्बोध्या।

---

लक्ष्मीः

कालस्य कालिकसंबन्धेन गोध्वंसवत्वेपि अतिव्याप्तिसंगतेर्दैशिकसंबन्धेन गोध्वंसवत्त्वाभावेपि न क्षतिरिति वाच्यम्। तथा सति गोध्वंसस्य महाप्रलये दैशिकसंबन्धेनाऽसत्वेन संसर्गाभावनिवेशेपि अतिव्याप्तिवारणाऽसंभवेन संसर्गाभावमात्रोक्तावपि इत्याद्युत्तरग्रन्थासंगतेः। **विरोधाभावादिति**। ध्वंसस्य स्वरूपसंबन्धेन प्रतियोगिसमवायिनियतत्वात्कालस्य चातथात्वादिति भावः। **नातिव्याप्तिरिति**। कालिकेन गोध्वंसवति गवात्यन्ताभावसत्वादिति भावः। **भूतलादिदेशस्येवेति**। भूतले घटो नष्ट इत्यादिप्रतीतेः स्वरूपेण घटध्वंसविषयकत्वम्, कालिकेन ध्वंसावगाहित्वे जले घटो नष्ट इति प्रतीत्यापत्तेः। **कालस्यापि**। महाप्रलयस्यापि। **गोध्वंसवत्वादिति**। न केवलं प्रतियोगिसमवायिदेशस्यैव स्वरूपेण ध्वंसवत्वम्, अपि तु भूतलादिदेशस्यैव महाप्रलयस्यापि गवादिध्वंसवत्वमिति प्राचीनमतम्। **अत एव**। प्रतियोगिसमवायिन एव स्वरूपसंबन्धेन ध्वंसवत्वमिति नियमे मानाभावादेव। **त्वक्संयुक्तकाले इति**। अन्यथा कालस्य स्पर्शसमवायित्वाभावेन स्वरूपेण काले वायुस्पर्शध्वंसग्रहो न स्यादिति भावः। ननु स्वरूपेण गोध्वंसस्य प्रलयवृत्तित्वे स्वरूपेणैव गवात्यन्ताभावस्य विरोधः न तु कालिकेनेति हेत्वधिकरणे प्रलये कालिकेन वर्तमानस्य गवात्यन्ताभावस्य प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके सत्वादतिव्याप्त्यभावमाक्षिपति। **यद्यपीति**। **एवमपि**। प्रलयस्य स्वरूपेण गोध्वंसवत्वेपि। **तथापि**। कालिकेन

न च कालिकसंबन्धावच्छिन्नप्रतियोगिताकस्य दैशिकसंबन्धेन हेतुमन्निष्ठा-

लक्ष्मीः

गत्रात्यन्ताभावस्य प्रलये वृत्तावपि । **अवश्यमिति** । द्रव्यं महाकाल-त्वादित्यादावव्याप्तिवारणायेत्यादिः । **तस्यैव** । प्रतियोगिवैयधिक-रण्याघटितस्यैव ।

ननु प्रतियोगिवैयधिकरण्यघटिताऽव्याप्यवृत्तिसाध्यकस्थलीय-लक्षणस्यापि अतिव्याप्तिसंभवः तथा हि गवात्यन्ताभावस्य प्रति-योगी यथा गौस्तथा गोध्वंसप्रागभावावपि, प्राचीनमते अत्यन्ता-भावस्य त्रितयप्रतियोगिकत्वात्, तथा च प्रलये गोध्वंसरूपप्रतियोग्य-धिकरणत्वस्य सत्वेन गवात्यन्ताभावस्य प्रतियोगिवैयधिकरण्या-भावेन तस्य लक्षणाघटकत्वादिति चेन्न । यथाऽत्यन्ताभावनिरूपित-प्रतियोगित्वं कालिकसंबन्धावच्छिन्नं गोनिष्ठम्, ध्वंसप्रागभावनिष्ठा च स्वरूपसंबन्धावच्छिन्नेति सिद्धान्तः । तथा च साध्यतावच्छेदक-संबन्धावच्छिन्ना या प्रतियोगिता तादृशप्रतियोगितावच्छेदकधर्माव-च्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकत्वस्योक्त-त्वात्, एवं च साध्यतावच्छेदकीभूतकालिकसंबन्धावच्छिन्ना गोनिष्ठ-प्रतियोगितैव तदवच्छेदकावच्छिन्नानधिकरणत्वस्य प्रलये सत्वेन तस्या लक्षणघटकत्वेनाऽतिव्याप्त्यभावादिति ।

यद्वा रूपवान् पृथिवीत्वादित्यादौ विषयितया रूपत्वविशिष्टा-भावमादायाव्याप्तिवारणायावच्छेदकतायां साध्यतावच्छेदकताघटक-संबन्धावच्छिन्नत्वनिवेशस्यावश्यकतया तादृशेन समवायसंबन्धेन ध्वंसत्वावच्छिन्नत्वस्याप्रसिद्ध्या तेन संबन्धेन गोत्वावच्छिन्नत्वस्य च तत्रासत्वेनाऽतिव्याप्त्यभावादिति ।

**न चेति** । वाच्यमित्यनेनान्वयः । **तथापि** । स्वरूपेण हेत्वधि-करणवृत्तित्वोक्तावपि । **नाव्याप्तिरिति** । सर्वस्यैव घटपटादेर्ध्वं-ससत्वेन प्रलये कस्याप्यत्यन्ताभावस्य स्वरूपेणावृत्तित्वादिति भावः । नित्यस्य प्रतियोगिनः सत्वात्, जन्यमात्रस्य ध्वंससत्वादित्याशयः ।

**अत्यन्ताभावस्यैवेति** । कालिकसंबन्धावच्छिन्नप्रतियोगिताकस्ये-त्यादिः । **तादृशस्य** । स्वरूपसंबन्धेन हेतुसमानाधिकरणस्य गोत्व-

त्यन्ताभावस्याप्रसिध्या तथापि नातिव्याप्तिरिति वाच्यम्। सृष्टिकालवृत्तित्व-
विशिष्टगोत्वादेरत्यन्ताभावस्यैव तादृशस्य प्रसिद्धत्वादिति भावः।

---

लक्ष्मीः

स्य ध्वंसाभावात्रादिति भावः। **प्रसिद्धत्वादिति**। ननु शुद्धसाध्यताव-च्छेदकस्थलीयलक्षणे प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वं निवेशितम्, एवं च तादृशगोत्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वाभावेन कथमभावप्रसिद्धिरिति चेन्न। तत्र निरवच्छिन्नत्वपदेनाऽवच्छिन्नत्व साध्यतावच्छेदकनिष्ठत्वोभयाभावस्य विवक्षितत्वात्। अन्यथा गोमान् सृष्टिकालात्वादित्यत्र यथाश्रुतनिरवच्छिन्नावच्छेदकत्वाप्रसिद्ध्याऽव्याप्तिः स्यात्, तत्र प्रलयावृत्तित्वविशिष्टगोत्वाभावस्यैव लक्षणघटकतया तत्र निरवच्छिन्नत्वाभावादिति ध्येयम्।

महाप्रलये गोत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकध्वंसोपगन्तृमते गोध्वंसमादाय नोक्तातिव्याप्तिरित्याशंकायामाह। **दीधितौ-संसर्गाभावमात्रोक्तावपीति**। अत्यन्ताभावपदेनेत्यादिः। अत्यन्ताभावत्वघटकनित्यत्वांशपरित्यागेन तथैव बोधनादिति भावः। **तथा च**। अत्यन्ताभावपदेन संसर्गाभावमात्रोक्तौ च। **गोत्वावच्छिन्नध्वंसवत्वादेवेति**। एव कारेण गोत्वावच्छिन्नात्यन्ताभावव्यावृत्तिः। ध्वंसस्याप्यस्वीकारे ध्वंसस्याऽत्यन्ताभावविरोधाङ्गीकर्तृप्राचीनमते महाप्रलये गौर्नास्तीति प्रतीत्यनुपपत्तेरिति भावः। तथा च संसर्गाभावनिवेशेपि अतिव्याप्तिस्तदवस्थैवेति भावः।

यद्यपि ध्वंसस्य तद्व्यक्तिप्रतियोगिकत्वस्यैवानुभविकतया प्रतियोगितातिप्रसक्तस्य गोत्वस्य न प्रतियोगितावच्छेदकत्वसंभवः। न च यथा गौर्नास्तीति प्रतीतिः समान्यधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावावगाहिनी तथा गौर्नष्टा इति प्रतीतिरपीति वाच्यम्। गौरस्तीति बुद्धिकालेपि अत्र गौर्नष्टा इति बुध्युत्पत्तेः। ध्वंसस्य गोत्वावच्छिन्नप्रतियोगिताकत्वास्वीकारात्। तथापि एकजातीयेषु व्यक्तिषु चरमव्यक्तिध्वंससमये तज्जातीयसामान्यध्वंसप्रतीतेरानुभविकत्वे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं ध्वंसे स्वीकार्यम्, तत्प्रतियोगिताया अतीतनिखिलव्यक्तिसाधारणतया

मिश्रमतं निरसितुमाह । संसर्गाभावेति । अत्यन्ताभावपदेनेत्यादिः । तथा च प्रलये गोत्वावच्छिन्नध्वंसवत्वादेव नातिव्याप्तिरिति भावः । न च गोध्वंसस्य गोत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारेऽपि साध्यतावच्छेदकीभूतकालिकविशेषणतासंबन्धावच्छिन्नप्रतियोगिताकत्वविरहात् कुतस्तमादायाऽतिव्याप्तिव्युदास इति वाच्यम् । साध्यतावच्छेदकसबन्धान्यसंबन्धानवच्छिन्नस्यैव हेतुसमानाधिकरणाभावप्रतियोगित्वस्य लक्षणे प्रवशनीयत्वात्तस्य च ध्वंसप्रतियोगितासाधारण्यादिति भावः ।

---

लक्ष्मीः

अनागतस्य तज्जातीयस्याविद्यमानतया गोत्वं न तदतिप्रसक्तमित्याशयेनाह । **गोत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारेपीति** । अपिना गौर्नष्टा इति प्रतीतेः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य प्रामाणिकत्वे विवादः सूचितः । तमादायेति कालिकविशेषणतासंबन्धावच्छिन्नप्रतियोगिताकत्वविरहादिति । समवायेन वन्ह्यभावमादायाव्याप्तिवारणाय लक्षणस्य साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताघटितत्वादिति भावः । **तमादायेति** । गोध्वंसमादायेत्यर्थः । **अतिव्याप्तिव्युदास इति** । गोध्वंसस्य कालिकसंबन्धावच्छिन्नप्रतियोगिताकत्वविरहेण लक्षणाघटकतया सृष्टिकालवृत्तित्वविशिष्टगोत्वाभावमादायातिव्याप्तितादवस्थ्यादिति भावः । **साध्यतावच्छेदकसंबन्धान्यसंबन्धानवच्छिन्नस्यैवेति** । एव कारेण साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य व्यवच्छेदः । समवायेन वन्ह्यभावप्रतियोगितायाः साध्यतावच्छेदकसंयोगातिरिक्तसमवायसंबन्धावच्छिन्नत्वाद्वारणम् । **तस्य च** । साध्यतावच्छेदकसंबन्धान्यसंबन्धानवच्छिन्नत्वस्य च । **ध्वंसप्रतियोगितासाधारण्यादिति** । ध्वंसीयप्रतियोगितायाः संबन्धानवच्छिन्नत्वादिति भावः[1] ।

---

दिव्या

१ अथ तादात्म्येनाऽभावसाध्यकतद्व्यक्तित्वहेतौ अव्याप्तिः, तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकहेतुसमानाधिकरणसंसर्गाभावाऽप्रसिद्धेरिति चेन्न । अभावविषयकयत्किंचिज्जन्यज्ञानीयविषयताध्वंसमादायाव्याप्तिव्युदाससंभवात् । न च तथापि तादात्म्येनाऽत्यन्ताभावसाध्यकअत्यन्ताभावभेदान्यतरत्वहेतावतिव्याप्तिः

**संसर्गाभावमात्रोक्तावपि यदा स्पन्दस्तदा द्व्यणुकं यदा अदृष्टं तदा जन्यं दुःखं वा यदा तस्याऽदृष्टं तदा तदीयं ज्ञानमित्यादावतिव्याप्तिः ।**

---

यदा स्पन्द इति । स्पन्दवति खण्डप्रलये सर्गान्तरीय द्व्यणुकप्रागभाववत्वेन द्व्यणु-कत्वावच्छिन्नध्वंसविरहादतिव्याप्तिः । न च खण्डप्रलये स्पन्दसत्वे मानाभावः । ब्रह्मणो वर्षशतमायुरित्यागमप्रसिद्धेरेव मानत्वात् । न हि रविक्रियां विना मुहूर्तादि घटितस्य वर्षस्य संभव इति ।

---

लक्ष्मीः

संसर्गाभावमात्रोक्तौ महाप्रलये गोध्वंसमादाय गोमान् गोत्वा-दित्यत्रातिव्याप्तिवारणेऽपि स्थलान्तरेऽतिव्याप्तिमाह । **दीधितौ-यदा-स्पन्दस्तदा द्व्यणुकमिति** । तथा च द्व्यणुकवान् स्पन्दादित्यत्राति-व्याप्तिमाह । **स्पन्दवतीति** । पुनर्द्व्यणुकोत्पत्त्यनुरोधेन परमाणुस्पन्द-वतीत्यर्थः । **खण्डप्रलये** । जन्यद्रव्यानधिकरणे । **सर्गान्तरीयद्व्य-णुकप्रागभावत्वेन** । यत्किञ्चिद्द्व्यणुकप्रागभाववत्वेन । **द्व्यणुकत्वा-वच्छिन्नध्वंसविरहादिति** । नापि द्व्यणुकत्वावच्छिन्नप्रागभावः, यत्किञ्चिद्द्व्यणुकध्वंससत्वात् । ध्वंसप्रागभावयोः सत्वे च न द्व्यणुकत्वावच्छिन्नात्यन्ताभावः । तथा च खण्डप्रलये द्व्यणुकत्वा-वच्छिन्नसंसर्गाभावविरहात्सृष्टिकालवृत्तित्वविशिष्टगोत्वाभावमादाया-तिव्याप्तिरिति भावः ।

अत्र व्यभिचारित्वं न महाप्रलये तत्र स्पन्दाभावात्, परन्तु गोत्वावच्छिन्नध्वंसवति महाप्रलयपूर्वकाले स्पन्दसत्वेन व्यभिचार-निरूपकाधिकरणं तदेव, तमादाय गोसाध्यक स्पन्दहेतौ नातिव्याप्ति-

---

दिव्या

ताद्दशान्यतरत्वाधिकरणेऽ'त्यन्ताभाव'भेदेऽत्यन्ताभावभेदस्य संसर्गाभावत्वविरहेण यत्किञ्चिजन्यज्ञानविषयताध्वंसस्यैव लक्षणघटकत्वादिति वाच्यम् । साध्यतावच्छे-दकसंबन्धान्यसंबन्धावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदका-वच्छिन्नत्वोभयाभावस्य प्रतियोगितायां विवक्षितत्वात् ।

ननु महाप्रलयपूर्वतृतीयक्षणे द्व्यणुकत्वावच्छिन्नध्वंससत्वान्नातिव्याप्तिः, तदानीमपि चरमद्व्यणुकनाशानुगुणस्य परमाणुस्पन्दस्य सत्वात्तत्कालोत्पन्नपरमाणुसंयोगेन प्रलयपूर्वक्षणे एव पश्चात्तस्य विनाश्यत्वात्, तादृशपरमाणूत्तरसंयोगस्य च कार्यद्रव्येण सहैव स्वीकारान्ननित्यत्वमाश्रयनाशादेव तन्नाश संभवादत आह। यदाऽदृष्टमिति। केचित्तु स्वमते द्व्यणुकस्याभावात्स्पन्दस्य च खण्डप्रलये वृत्तौ बलवत्तरप्रमाणाभावाद्यदाऽदृष्टमित्याद्युक्तमित्याहुः। तच्चिन्त्यम्। नित्यज्ञानमादाय सद्धेतुत्ववारणाय जन्यमिति। नित्यसुखाभिव्यक्तेर्मोक्षत्वमते सद्धेतुत्वमाशक्य साध्यान्तरमाह। दुःखं वेति।

---

लक्ष्मीः

संभावना, अतो द्व्यणुकस्य साध्यतानुसरणम्। तथा च महाप्रलयपूर्वकाले द्व्यणुकत्वावच्छिन्नध्वंसविरहाद् भवत्यतिव्याप्तिरित्यभिमानः। एतादृशाभिमानं च नन्वित्यादिना निराकरिष्यते इत्यवधेयम्।

**नन्विति**। स्थूलेषु विनष्टेषु त्रसरेणुविनाशार्थं अदृष्टवदात्मसंयोगात् व्यणुकारंभकपरमाणुषु क्रिया ततो विभागः तत आरंभकसंयोगनाशः तत उत्तरदेशसंयोगो व्यणुकनाशश्च। ततः क्रियानाशस्त्रसरेणुनाशश्च–तत उत्तरदेशसंयोगनाशः स एव महाप्रलय इत्युच्यते। **महाप्रलयपूर्वतृतीयक्षणे**। महाप्रलयः–उत्तरदेशसंयोगनाशक्षणः। तत्पूर्वतृतीयक्षणे–द्व्यणुकनाशक्षणे। महालयपूर्वतृतीयक्षणेस्पन्दसत्वे मानमाह। **तदानीं**। तृतीयक्षणे। **चरमद्व्यणुकनाशानुगुणस्य**। तन्नाशप्रयोजकस्य। **तत्कालोत्पन्नेति**। द्व्यणुकनाशकालोत्पन्नेति। **प्रलयपूर्वक्षणे एव**। त्रसरेणुनाशक्षणे एव। **तस्य**। कर्मणः। **कार्यद्रव्येण**। त्रसरेणुना। **आश्रयनाशादेव**। त्रसरेणुनाशादेव। एतावता स्पन्दरूपहेतोः द्व्यणुकनाशक्षणे सत्वम्, द्व्यणुकनाशोत्तरं स्पन्दनाशो भवतीति सूचितम्। **स्वमते**। शिरोमणिमते। **द्व्यणुकस्याभावादिति**। तर्हि मेरुसर्षपयोः साम्यप्रसंगवारणायावयवधारायाः त्रसरेणावेव विश्रामः कृतः, अपकृष्टमहत्वस्य च नित्यत्वमङ्गीकृतम्। न चापकृष्टमहत्वं प्रति अनेकद्रव्यवत्वं प्रयोजकमिति वाच्यम्। अप्रयोजकत्वात्। अत एव त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वादित्यादिद्व्यणुकसाधकमनुमानमप्यकिंचित्करम्। अणुत्वव्यवहारश्चापकृ-

द्व्यणुकत्वादेर्द्व्यणुकादिशून्यखण्डप्रलयादिनिष्ठध्वंसप्राग-भावप्रतियोगितानवच्छेदकत्वात् ।

ननु कार्यमात्रं प्रति अदृष्टस्य हेतुतया प्रलयप्राक्क्षणेऽपि तस्य सत्त्वम्, तथा च तदानीमेव दुःखत्वावच्छिन्नध्वंससत्त्वान्नातिव्याप्तिः, दुःखादेः स्वसाक्षात्कारनाश्यतया तदानीमसंभवात् उत्तरक्षणे साक्षात्काराऽसंभवात्, अविदिते प्रमाणाभावाच्च । किं च यावत् ब्रह्माण्डानां युगपत्प्रलयानभ्युपगमे ब्रह्माण्डान्तरवर्त्तिदुःखमादाय सद्धेतुरेवायमत आह । यदा तस्येति । अत्र च तदीयसुषुप्त्यादिसमये तदीयज्ञान-विरहाद्व्यभिचारः स्फुट एव ।

द्व्यणुकत्वादेरिति । खण्डप्रलये केषांचिद् ध्वंसस्य केषांचित्प्रागभावस्य सत्त्वात्तस्य प्रतियोगितातिरिक्तवृत्तित्वेनाऽनवच्छेदकत्वादिति भावः । ननु द्व्यणुकत्वावच्छिन्नानधिकरणकालवृत्तित्वविशिष्टस्यैव तद्ध्वंसस्य प्रतियोगितावच्छेदकमेव द्व्यणुकत्वम्, अवच्छेदकत्वं चाऽन्यूनवृत्तित्वमेवेत्यत आह । नहीति ।

लक्ष्मीः

ष्टपरिमाणैरेवोपपादनीयः । तथा च द्व्यणुकस्वीकारो नावश्यकः । **दीधितौ-यदाऽदृष्टमिति** । तथा च जन्यज्ञानवान् अदृष्टादित्यत्र जन्यपदं सद्धेतुतावारणाय सद्धेतुत्वे तद्वारणप्रयासोऽनुचितः स्यात् । **दुःखं वेति** । दुःखवान् अदृष्टादित्यत्रैवातिव्याप्तिरित्यर्थः । **कार्यमात्रं प्रतीति** । लाघवादिति शेषः । **तदानीमपि** । महाप्रलयप्राक्क्षणेऽपि । **तदानीं** । प्रलयपूर्वक्षणे । **असंभवात्** । दुःखासम्भवात् । यदि च महाप्रलयानभ्युपगमे एव तदतिव्याप्तिर्न त्वभ्युपगमे तदाप्याह । **किं चेति** । **तस्य** । द्व्यणुकत्वस्य । **प्रतियोगितातिरिक्तेति** । ध्वंसप्रागभाव-प्रतियोगितातिरिक्तेत्यर्थः । **द्व्यणुकत्वावच्छिन्नानधिकरणेति** । अनेन द्व्यणुकध्वंसस्य प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यं सूचितम् । **तद्ध्वंसस्य** । द्व्यणुकध्वंसस्य । इदमुपलक्षणम् । द्व्यणुकप्रागभावस्येत्यपि बोध्यम् । अन्यूनानतिरिक्तवृत्तित्वरूपावच्छेदकत्वाभावादाह । **अवच्छेदकत्वं चेति** । **गोत्वादिधर्मावच्छिन्नत्वे** । गोत्वादिसामान्यधर्मावच्छिन्नत्वे । **गोप्रतियोगिकध्वंसाद्यवगाहितयैवेति** । एव कारेण गोत्वा-

ध्वंसादिप्रतियोगितायां गोत्वादिधर्मावच्छिन्नत्वे मानाभावः, गोर्नष्टेत्यादिप्रतीतेर्गोप्रतियोगिकध्वंसाद्यवगाहितयैवोपपत्तेः, बाधनिश्चयादिप्रतिबन्धकत्वाद्यनुरोधेनैव भेदात्यन्ताभावयोर्गोत्वाद्यवच्छिन्नप्रतियोगिताकत्वोपगमात्। न चैवं तद्गोत्वाद्यवच्छिन्नवत्ताबुद्धिं प्रति तद्गोत्वावच्छिन्नाभाववत्तानिश्चयत्वेन विरोधितया तद्गवात्यन्ताभावस्येव तद्गोध्वंसस्यापि तद्गोत्वावच्छिन्नप्रतियोगिताकत्वमावश्यकमिति वाच्यम्। एकसंबन्धेन तद्गवात्यन्ताभावग्रहेपि संबन्धान्तरेण तद्गोमत्ताबुद्ध्युत्पादात्संबन्धविशेषमन्तर्भाव्यैवात्यन्ताभावग्रहस्य प्रतिबन्धकतया ध्वंसवत्ताग्रहसाधारण्यासंभवात्,

---

लक्ष्मीः

दिसामान्यधर्मावच्छिन्नावगाहित्वस्य व्यवच्छेदः।

गौर्नास्ति—गौर्नेत्यादिप्रतीतिस्तु गोत्वादिधर्मावच्छिन्नप्रतियोगिताकत्वावगाहिन्येव न तु गोप्रतियोगिकत्वावगाहिनीत्याह। **बाधनिश्चयेति। गोत्वावच्छिन्नप्रतियोगिताकत्वोपगमादिति।** भेदात्यन्ताभावयोः प्रतियोगितायां सामान्यधर्मावच्छिन्नत्वस्य सर्ववादिसिद्धत्वादिति भावः। अयं भावः। गोसत्ताबुद्धौ गौर्नास्तीति निश्चयस्य न गोप्रतियोगिकाभावावगाहित्वेन विरोधित्वम्, तस्य तद्गवात्यन्ताभावनिश्चयसाधारण्यात्, नापि गोत्वसमनियतप्रतियोगिताकाभावावगाहित्वेन यावद् गौर्नास्तीति निश्चयस्य विरोधित्वापत्तेः। अतो गोत्वावच्छिन्नप्रतियोगिताकाभावगाहित्वेनैव विरोधित्वस्य वाच्यतयाऽत्यन्ताभावप्रतियोगितायां सामान्यधर्मावच्छिन्नत्वसिद्धिः।

शङ्कते। **नचेति।** वाच्यमित्यनेनान्वयः। **एवं।** अत्यन्ताऽन्योन्याभावप्रतियोगितायां सामान्यधर्मावच्छिन्नत्वसिद्धौ। **तद्गोध्वंसस्यापीति।** अपिनाऽन्ताभावान्योन्याभावयोः संग्रहः। **आवश्यकमिति।** प्रतिबध्यप्रतिबन्धकभावानुरोधेनेति यावत्। तथा च गोत्वावच्छिन्नप्रतियोगिताकध्वंससत्वान्नातिव्याप्तिरिति भावः। **समाधत्ते। एकसंबन्धेनेति।** संयोगसंबन्धेन। **सम्बन्धान्तरेणेति।** समवायसंबन्धेन। संबन्धविशेषमन्तर्भाव्यैवेति। तथा च संयोगसंबन्धावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नं प्रति संयोगसंबन्धावच्छिन्नगोत्वावच्छिन्नप्रतियोगिताकाभाववत्तानिश्चयस्य प्रतिबन्धकत्वमिति भावः। **ध्वंसवत्ताग्रहसाधारण्यासंभवादिति।** ध्वंसीयप्रतियोगितायां संबन्धानवच्छिन्न-

न हि तयोः सामान्याभावत्ववादिमतेपि एकविशेषप्राग्भावविशेषान्तरध्वंसवत्यपि समये सामान्यावच्छिन्नध्वंसप्रागभावयोः संभव इति चेन्न ।

---

ध्वंसत्वस्याभावत्वाघटितत्वेन तद्वत्ताहिबुद्धेरन्याभावप्रकारकत्वयोरभेदाशये-नाह मतेपीति ।

---

लक्ष्मीः

त्वेऽविवादादिति भावः । तथा च ध्वंसीय प्रतियोगितायां सामान्यधर्मावच्छिन्नत्वं न संभवतीति । ननु भूतलत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नतद्गोत्वावच्छिन्नप्रकारताशालिबुद्धिं प्रति भूतलत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धान्यसंबन्धानवच्छिन्नतद्गोत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारता - शालिनिश्चयत्वेनैक रूपेण प्रतिबन्धकत्वमिति न पूर्वोक्तदोषावकाश इत्यत आह । ध्वंसत्वस्येति । अनुयोगिताविशेषो हि ध्वंसत्वम्, अखण्डोपाधिरिति यावत् । न तु जन्यत्वे सति अभावत्वम् । तथा च गोध्वंसवानिति बुद्धौ ध्वंसत्वेनैव ध्वंसस्य प्रकारतयाऽभावत्वेन ध्वंसस्याप्रकारत्वादित्याशयः ।

**दीधितौ तयोः** । ध्वंसप्रागभावयोः । सामान्याभावत्ववादिमतेपीत्यर्थः । सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमतेपीत्यर्थः । एकविशेषप्रागभावविशेषान्तरध्वंसवत्यपि समये तत्तद्व्यक्तिप्रागभावव्यक्त्यन्तरध्वंसवति खण्डप्रलये सामान्यावच्छिन्नध्वंसप्रागभावयोः, व्यणुकत्वादिसामान्यधर्मावच्छिन्नप्रतियोगिताकध्वंसप्रागभावयोः, नहि संभव इत्यर्थः । तथा चाऽवच्छेदकत्वस्याऽनतिरिक्तवृत्तित्वस्यैवाभ्युपगमादिति भावः[१] ।

---

दिव्या

१ ननु अभावमात्रप्रतियोगितायामेव धर्मावच्छिन्नत्वे मानाभावः । तथा च सर्वा एव प्रतियोगिता निरवच्छिन्नाः । प्रतियोगित्वसंबन्धावच्छिन्नगोत्वपर्याप्तावच्छेदकताकप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसंबन्धाव - च्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव प्रतिबन्ध-

प्रतियोगिमत इव ध्वंसादिमतोपि कालस्याऽत्यन्ताभाववत्वेऽविरोधात्, अन्यथाऽत्यन्ताभावस्य कालमात्राऽवृत्तित्वप्रसंगात् ।

---

ननु प्रतियोगिमत इवेत्यसिद्धम्, तत्राऽत्यन्ताभावानुपगमादत आह । अन्यथेति । अत्यन्ताभावस्येति । गोत्वादिना गवादेरत्यन्ताभावस्येत्यर्थः । तेन गगनाद्यभावस्य गोविशिष्टगोत्वाद्यभावस्य वा प्रलयवृत्तित्वेपि न क्षतिः । काल-

---

लक्ष्मीः

वस्तुगतिमनुरुध्याऽतिव्याप्तिसंपादकं ध्वंसप्रागभावयोरत्यन्ताभाववविरोधमेव खण्डयति । दीधितौ—प्रतियोगिमत इवेति । प्रतियोगिमतः कालस्येवेत्यर्थ । ध्वंसादिमतः । प्रतियोगिध्वंसादिमतः इत्यर्थः । प्रतियोगिमद्भिन्नस्येति यावत् । अविरोधात् । बाधकाभावात् । गोत्वावच्छिन्नप्रतियोगिताकाऽत्यन्ताभावसत्वान्नोक्तातिव्याप्तिरिति भावः । अन्यथा । ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे । गोत्वादिनेति । गोत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्येति यावत् स्वरूपसंबन्धेनेति शेषः । गोविशिष्टेति । वै० आधेयता सं० । तेन । अत्यन्ताभावपदस्य गोत्वादिना गवादेरत्यन्ताभावस्येत्यर्थकरणेन । न क्षतिः । न कालमात्रावृत्तित्वप्रसंगादिति ग्रन्थासंगतिः ।

---

दिव्या

कत्वादिति चेन्न । अभावाऽन्वयितावच्छेदकावच्छिन्नप्रतियोगित्वमेवान्वयिनः संसर्ग इति नियमात् ।

केचित्तु प्रतिबध्यप्रतिबन्धकभावानुरोधाभावेपि बाधनिश्चयाभावस्य कारणत्वानुरोधेनापि तत्स्वीकार आवश्यकः, तत्र हि तादृशनिश्चयाभावत्वेनैव कारणत्वम्, अन्यथा यत्किञ्चिद्बाधनिश्चयाभावसत्वेपि तद्वत्ताबुद्ध्युत्पादापत्तेरित्याहुः ।

वस्तुतो महानसीयत्वोपलक्षितवन्ह्यभाववत्तानिश्चयस्यापि केवलवन्हिमत्ताबुद्धौ प्रतिबन्धकत्वात्तत्र च केवलवह्नित्वपर्याप्तावच्छेदकताकप्रकारताकत्वविरहात् तस्य प्रतिबन्धकत्वानुपपत्तिः । अतो वह्नित्वमात्रावच्छिन्नप्रतियोगिताकाभावस्य प्रतिबन्धकत्वमुक्तमिति ।

इयांस्तु विशेषो यदेकस्य देशभेदावच्छिन्नं तथात्वम्, अपरस्य तु स्वरूपावच्छिन्नमिति देशे कालस्येव कालेपि देशस्यावच्छेद-

मात्रेति। अत्र गवात्यन्ताभावस्य दैशिकविशेषणतया कालमात्रावृत्तित्वं प्राच्यैरिष्यत एव, सदातनत्वव्यवहारस्य कालिकविशेषणतयैव संभवादिति विभावनीयम्।

ननु प्रतियोगिविशिष्टेपि काले तदत्यन्ताभावसत्वे गवाद्यवच्छेदेनेदानीं गोर्न नास्तीति प्रतीतिः कथं न स्यादत आह। इयांस्तु इति। एकस्य। प्रतियोगिमतः कालस्य। देशभेदः—प्रतियोग्यनाधारदेशः। तथात्वं अत्यन्ताभाववत्वम्। अपरस्येति ध्वंसादिमतः कालस्येत्यर्थः। स्वरूपावच्छिन्नमिति। निरवच्छिन्नमित्यर्थः। तथात्वमिति पूर्वेणान्वयः। ननु इदानीं अश्वे न गोत्वमिति प्रतीतेः कालवृत्तितया अश्ववृत्तितया च गोत्वाभावावगाहितयैवोपपत्तौ देशस्य कालवृत्तितावच्छेदकत्वे

लक्ष्मीः

विभावनीयमिति। इदानीं गौर्नचत्वरे इति प्रतीत्यनुपपत्तिरेव चिन्ताबीजम्, इदानीमपि गवादिध्वंसप्रागभावयोः सत्वेन गवात्यन्ताभावस्याऽसत्त्वप्रसंगात्। न च कालिकेन गवात्यन्ताभाववत्वं विषयः, तद्गोविद्यमानतादशायामपि इदानीं तद्गौर्नास्तीति प्रत्ययापत्तेः। प्रतियोगिविशिष्टेऽपि। कालिकसंबन्धेन प्रतियोगिमत्यपि। तदत्यन्ताभावसत्वे। प्रतियोग्यभावसत्वे। कथं न स्यादिति। नभवतीति यावत् तथा च दृष्टान्तासिद्धिरिति भावः। ध्वंसाधिकरणेऽत्यन्ताभाववत्वस्य निरवच्छिन्नत्वेन स्वरूपावच्छिन्नमनुपपन्नमतो व्याचष्टे निरवच्छिन्नमिति। देशकालाद्यनवच्छिन्नमित्यर्थः। तथात्वं। अत्यन्ताभावत्वम्। स्वरूपेण कालिकसंबन्धावच्छिन्नप्रतियोगिताकेत्यादिः। तथा च प्रतियोगिमति काले प्रतियोग्यताधारदेशावच्छेदेन प्रतियोग्यत्यन्ताभावो वर्त्तते यथा इदानीं अश्वे न गोत्वमिति प्रतीतौ अश्वावच्छेदेनैतत्काले गोत्वाभावो विषयः। न हि एतत्कालावच्छेदनाश्वे गोत्वाभावस्तादृशप्रतीतेर्विषयः, अश्वे गोत्वाभावस्य व्याप्यवृत्तितया कालस्य तदवच्छेदकत्वावगाहने उक्तप्रतीतेर्भ्रमत्वापातात्। शंकते। नन्विति। कालवृत्तितयेति। एतत्कालवृत्तिअश्ववृत्तिगोत्वाभावविषयकतये-

कत्वात्, तच्छून्ये च काले तदभावस्य प्रतियोगिव्यधिकरणत्वात्।

मानाभाव इत्यत आह। देशे इति। इवार्थः सादृश्यम्, तच्चानुभूयमानत्वेन, तथा चानुभव एव देशस्य कालवृत्तितावच्छेदकत्वे मानम्, अन्यथा गृहे नेदानीं गौरित्यादि प्रत्ययबलाद् गृहादिदेशस्य गवात्यन्ताभाववत्तायां कालोपि नावच्छेदकः स्यात्, तत्र गवाभावे गृहवृत्तित्व-एतत्कालवृत्तित्वोभयावगाहितायाः सुवचत्वादिति भावः।

नन्वेवमपि प्रतियोगिवैयधिकरण्यघटितस्याऽव्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्य गोमान् गोत्वादित्यादावतिव्याप्तिरेव, गवाद्यभावस्य सृष्टिकाले प्रतियोगिसमानाधिकरणतया लक्षणाघटकत्वादत आह। तच्छून्येचेति। गवादि शून्येचेत्यर्थः। तथा च यत्किञ्चिद्धेत्वधिकरणावच्छेदेन प्रतियोगिवैयधिकरण्यं यदग्रे वाच्यं तस्य गवाद्यभावेपि सत्वान्न तत्रातिव्याप्तिरिति भावः।

लक्ष्मीः

त्यर्थः। गोत्वाभावगाहितयैवेति। एवकारव्यवच्छेद्यमाह। देशस्येति। अश्वस्येत्यर्थः। कालवृत्तितावच्छेदकत्वे। एतत्कालवृत्तितावच्छेदकत्वे। अनुभूयमानत्वेनेति। तथा च यथा देशे वृत्तौ कालस्यावच्छेदकत्वमनुभूयमानम्, इदानीं गृहे गौर्नास्तीति प्रतीतिबलात्, तादृशप्रतीते; कालावच्छेदेन देशवृत्तिः देशावच्छेदेन वा कालवृत्तिर्विषय इत्यत्र विनिगमकाभावात्, तथाकालवृत्तौ देशस्यावच्छेदकत्वमनुभूयमानम्, इदानीमश्वे न गोत्वमिति प्रतीतिबलात्। अवच्छेदकत्वाधिकरणत्वयोः सप्तम्यर्थत्वेपि सप्तम्या आधेयत्वमात्रार्थकतयैवोपपत्तौ तयोरवच्छेदकत्वासाधकत्वात्, तस्मादनुभव एव तयोरवच्छेदकत्वसाधक इत्याशयेनाह। तथाचेति। अनुभव एवेति। इदानीं अश्वे न गोत्वमित्याद्यनुभव एवेत्यर्थः। एव कारेण सप्तम्या व्यवच्छेदः। अन्यथा। देशस्य कालवृत्तितानवच्छेदकत्वे। कालोपि नावच्छेदकः स्यादिति। तत्र। गेहे नेदानीं गौरिति प्रतीतौ। सुवचत्वादिति। न चेष्टापत्तिः। अनुभवविरोधात्। अन्यथा तद्गृहे गोविद्यमानतादशायामपि इदानीं गृहे गौर्नास्तीति प्रतीतिप्रसंगात्। गृहे कालान्तरावच्छेदेन एतत्काले

न च संसर्गाभावविशेषोऽत्यन्ताभावः, संसर्गाभावत्वं च संसर्गारोपजन्यप्रतीतिविषयाभावत्वरूपम्, जन्यताघटकनियमघटितमिति वाच्यम् ।

न चेति । वाच्यमित्यनेनान्वयः । संसर्गाभावविशेष इति । सदातनसंसर्गाभाव इत्यर्थः । संसर्गेति । स्वप्रतियोगितावच्छेदकसंसर्गेण यः प्रतियोग्यारोपस्तज्जन्यप्रतीतिविषयोऽयोऽभावस्तत्वमित्यर्थः । संसर्गस्तु तादात्म्यभिन्नो ग्राह्यः । तेन भेदव्युदासः । ध्वंसप्रागभावयोरपि उत्तरकालपूर्वकालावेव संबन्धौ इति ताभ्यामेव संबन्धाभ्यां प्रतियोग्यारोपः प्रागभावध्वंसयोः प्रत्यक्षहेतुरतस्तयोर्नाव्याप्तिरिति प्राचामाशयः । घटितमिति । तथा च चक्रकादिप्रसंग इत्याशयः ।

लक्ष्मीः

च देशान्तरावच्छेदेन गवात्यन्ताभावस्याभ्युपगततया गवाभावे गृहवृत्तित्व, एतत्कालवृत्तित्वोभयावगाहित्वस्याबाधितत्वात् । **दीधितौ-काले** । प्रलये । **तदभावस्य** । गवाभावस्य । **तत्रापि** । गोमान् गोत्वादित्यत्रापि । **स्वप्रतियोगितेति** । स्वं० संसर्गाभावः । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यारोपः 'यदि अत्र प्रतियोगी स्यात्तर्हि उपलभ्येत इत्याकारक आरोपः तज्जन्यप्रतीति विषयोऽभावः तादात्म्यभिन्न इति । तादात्म्यभिन्नप्रतियोगितावच्छेदकसंबन्धेनेत्यर्थः । **उत्तरकालपूर्वकालावेवेति** । अयमिदानीं यदि स्वाश्रयोत्तरकालिकसंबन्धेन घटवान् स्याचदा घटवत्तयोपलभ्येतेति ध्वंसप्रत्यक्षे प्रतियोग्यारोपः कारणम् । एवं अयमिदानीं स्वाश्रयपूर्वकालिकसंबन्धेन घटवान् स्यात्तदा घटवत्तयोपलभ्येतेति प्रागभावप्रत्यक्षेपीति । तथाचोत्तरकालपूर्वकालयोः संबन्धघटकत्वात्तयोः संबन्धत्वमिति । स्वपदं तत्तत्प्रतियोगिपरम् । स्वाधिकरणत्व-स्वप्रागभावाधिकरणत्वैतदन्यतरसंबन्धेन विशिष्टक्षणकालीनत्वसंबन्धावच्छिन्नप्रतियोगिकाभावो ध्वंसः । स्वाधिकरणत्व, स्वध्वंसाधिकरणत्वैतदन्यतरसंबन्धावच्छिन्नप्रतियोगिताकाभावः प्रागभावः । **चक्रकादि प्रसंग इति** । स्वग्रहसापेक्षग्रहसापेक्षग्रहसापेक्षग्रहकत्वेन स्वभिन्नत्वप्रसंग इत्यर्थः । तथा च स्वं व्याप्तिः तद्ग्रहसापेक्षो यो ग्रहःसंसर्गाभावग्रहः तस्य निय-

तद्वदन्यावृत्तित्वरूपनियमस्य तत्र घटकत्वात्। एवं नियमान्तरस्यात्र प्रवेशेपि न क्षतिरित्याहुः। वक्ष्यते च नियमाघटितमेव संसर्गाभावादिलक्षणम्।

---

तत्र। जन्यत्वे। नियमान्तरस्य। साध्यसंबन्धितावच्छेदकरूपवत्त्वादिरूपस्येत्यर्थः। ननु अभावबुद्धौ प्रतियोग्यारोपस्य हेतुतास्वीकारे मानाभावादुक्तसंसर्गाभावत्वघटितव्याप्तिलक्षणस्याऽसंभवः, कथंचिदभावलौकिकप्रत्यक्षं प्रति आरोपस्य हेतुतास्वीकारेपि अतीन्द्रियसाध्यके व्यभिचारिण्यतिव्याप्तिः, तत्र हेतुसमानाधिकरणसाध्याभावस्यातीन्द्रियतया निरुक्तसंसर्गाभावत्वविरहादत आह। वक्ष्यते चेति। भेदभिन्नाभावत्वं संसर्गाभावत्वम्, सदातनत्वविशिष्टं च तदेवात्यन्ताभावत्वम्, भेदत्वं तु संसर्गविधया तादात्म्यावच्छिन्नप्रतियोगिताकाभावत्वम्, अनुयोगिताविशेषो वेत्याशयः।

यत्तु भेदत्वादिवत्संसर्गाभावत्वमप्यखण्डोपाधिरिति। तत्तुच्छम्। भेदत्वादिवदखण्डस्य संसर्गाभावत्वस्यानुभवेनाऽविषयीकरणात्, तान्त्रिकव्यवहारस्य भेदभिन्नाभावत्वादिनाप्युपपत्तेः।

---

लक्ष्मीः

तोत्तरवर्त्तित्वरूपजन्यताघटकनैयत्यरूपव्याप्तिघटितत्वात्, तत्सापक्षो ग्रहः अत्यन्ताभावग्रहस्तत्सापेक्षो ग्रहःव्याप्तिग्रहः तत्कत्वं व्याप्तिग्रहे। चक्रकादीत्यादिपदेनात्माश्रयाऽन्योन्याश्रययोः परिग्रहः। परंपरया व्याप्तिग्रहे तद्ग्रहस्य व्याप्तिग्रहे संसर्गाभावत्वग्रहस्य तस्य च व्याप्तिग्रहसापेक्षत्वात्। व्याप्यसत्वे व्यापकसत्त्वस्यावश्यकतया चक्रकसत्वे द्वयोरपि सत्वम्, अन्योन्याश्रयसत्वे चात्माश्रयसत्वम्। जन्यत्वे इति।

तथा च संसर्गाभावत्वज्ञानसापेक्षपूर्वोक्तव्याप्तिज्ञानसापेक्षत्वस्य जन्यताज्ञानेऽसत्वान्न चक्रकापत्तिरिति भावः। जन्यताघटकव्याप्तिश्च साध्यवदन्यावृत्तित्वरूपा। अत्र। जन्यतायां। न क्षतिः। न चक्रकादिप्रसंगः। व्याप्तिलक्षणस्याऽसंभव इति। उक्तारोपं विना जायमानप्रत्यक्षस्थलेपि तादृशारोप प्रकल्प्येत्यर्थः। व्यभिचारिणि। मनस्त्ववद् अणुत्वादित्यत्र। तत्र। परमाणौ। साध्याभावस्य। मनस्त्वाभावस्य। निरुक्तसंसर्गाभावत्वविरहादिति। यदि अत्र

अनुपदमेव च विवेचयिष्यते । संसर्गाभावत्वप्रवेशे प्रयोजनविरहोऽव्याप्तिश्च ।

---

वस्तुगतिमनुरुध्याह अनुपदमिति विवेचयिष्यते इति । तदपि वा नोपादेयमिति ग्रन्थेनेति शेषः । साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यघटितलक्षणघटितलक्षणमभिप्रेत्याह प्रयोजनविरह इति । धूमसामानाधिकरणस्य वह्न्यादिभेदस्य प्रतियोगिसमानाधिकरणत्वादेव तमादायाऽव्याप्तिविरहादिति भावः । व्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्य साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताघटितत्वात्तदभिप्रेत्याह अव्याप्तिश्चेति । तादात्म्येन गवादेः साध्यतायां तत्संबन्धावच्छिन्नात्यन्ताभावाप्रसिध्या सास्नावत्त्वादावव्याप्तिरित्यर्थः ।

---

लक्ष्मीः

मनस्त्वं स्यात्तर्हि उपलभ्येतेति आरोपस्याऽप्रसिध्या तादृशारोपजन्यप्रतीतिविषयाभावत्वस्य मनस्त्वाभावरूपसाध्याभावे विरहादित्यर्थः । तथा च घटाभावमादायाऽतिव्याप्तिरिति भावः । वक्ष्यते चेति । आत्मतत्त्वविवेके इति शेषः । तदेव । संसर्गाभावत्वमेव । तथा च नित्यत्वे सति भेदभिन्नाभावत्वमत्यन्ताभावत्वम् । न च घटाभावाभावस्य घटरूपतयाऽनित्यत्वे सदातनत्वविरहादत्यन्ताभावत्वानुपपत्तिरिति वाच्यम् । अतिरिक्तत्वाभ्युपगमात् । संसर्गविधया । संसर्गत्वेन । न चाऽतिरिक्तत्वे घटाभावदशायां तदापत्तिरिति वाच्यम् । घटकालस्य तत्संसर्गत्वाभ्युपगमात् । अथ वा अत्यन्ताभावस्य भावभेदरूपतया घटस्वरूपे तद्विरहेणाऽत्यन्ताभावविरहेपि न क्षतिः । मूलोक्तलक्षणमभावाऽघटितमेवेति वस्तुगतिमनुध्याहेत्यर्थः । तदपि । अभावत्वमपि । अव्याप्तिविरहादिति । तथा च संसर्गाभावत्वप्रवेशो निष्फल इति भावः । हेतुसमानाधिकरणाभावीय साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूपव्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्य साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताघटितत्वादिति । तादात्म्येनेति । संसर्गाभावत्वप्रवेशे गौः सास्नावत्त्वादित्यत्र सास्नासमानाधिकरणसंसर्गाभावीय साध्यतावच्छेदक-

इदमपि अभाववृत्तिरभावो नाधिकरणस्वरूपो न वा धर्मात्यन्ताभाव एव धर्मिणो भेद इति मतेन। अन्यथा पटस्वरूपस्य घटभेदत्वात्यन्ताभावस्य पटत्वात्यन्ताभावस्य च पटनिष्ठप्रतियोगितायामेव तादात्म्यसंबन्धावच्छिन्नत्वादव्याप्तिविरहादिति ध्येयम्।

---

लक्ष्मीः

संबन्धावच्छिन्नप्रतियोगित्वाप्रसिध्द्याव्याप्तिश्चेति भावः। **इदमपि।** तादात्म्येन साध्यतायामव्याप्तिकथनमपि। **अभाववृत्तिरभावः।** अभावाधिकरणकाऽभाव इत्यर्थः। **नाधिकरणस्वरूप इति।** अस्य इति मतेनेत्यत्रान्वयः। **अन्यथा।** अभावाधिकरणकोऽभावो अधिकरणस्वरूप इति मतस्वीकारे–धर्मिभेदधर्मात्यन्ताभावयोरैक्यमिति मतस्वीकारे च। आद्ये आह। घटभेदस्वरूपस्येत्यादि। पटभेदे यो घटभेदत्वात्यन्ताभावः स पटभेदस्वरूप एव, एवं च पटभेदस्यात्यन्ताभावरूपतया तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य प्रसिद्धतया तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकीभूतगोत्वे सत्वादव्याप्तिविरहादव्याप्तिश्चेति दीधितिग्रन्थासंगतेः।

एवं पटभेदस्य पटत्वात्यन्ताभावरूपतया तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य प्रसिद्धतया इत्यपि बोध्यम्।

अथ धर्मिभेदधर्मात्यन्ताभावयोरैक्ये व्याप्तिविरहेपि घटाभावे गोभेदसत्वात्तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगितावच्छेदकत्वस्य गोत्वे सत्वात् सास्नादिहेतावव्याप्तिवारणायाऽत्यन्ताभावत्वनिरूपकसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितापर्यन्तनिवेश आवश्यकः, एवं चाऽभाववृत्तिरभावो नाधिकरणस्वरूप इति जगदीशग्रन्थोऽसंगत एव तादृशमताश्रयणेपि अव्याप्तिसंभवात् इति चेत्।

अत्र केचित्–भावभेदस्यातिरिक्तत्वाभ्युपगमेन गोभेदमादायाव्याप्तिविरहेणात्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशनं नावश्यकमिति ग्रन्थसंगतिः।

यदि च तादात्म्येनाऽभावसाध्यकस्थले पटाभावादौ साध्यभेद-

अथ 'ज्ञानवान् द्रव्यत्वात्' विशेषगुणवान् मनोऽन्यद्रव्यत्वात्, जातिमान् भावत्वादित्यादौ समवायेन ज्ञानादेः साध्य-

ननु विषयताया वृत्त्यनियामकत्वमते-ज्ञानाभावस्य गगनादौ सहजत एव

लक्ष्मीः

मादायाव्याप्तिवारणायाऽत्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशात् तद्ग्रन्थासंगतिरिति विभाव्यते, तदा पटाभावादि हेत्वधिक णवृत्त्यभावस्याभावाधिकरणकतया तादात्म्येन साध्यभेदसत्वाप्रसक्त्याऽव्याप्तिविरहादित्याहुः।

वस्तुतस्तु हेतुमद्वृत्तितावच्छेदकीभूतसंसर्गाभावत्वरूपानुयोगितानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाभाववविवक्षणान्न दोषः। तादात्म्येन साध्यतायां सद्धेतौ साध्यभेदत्वरूपानुयोगितायां अत्यन्ताभावनिष्ठत्वेपि हेतुमद्वृत्तितावच्छेदकत्वविरहेण साध्यभेदत्वरूपानुयोगिता न तादृशी रूपभेदत्वरूपानुयोगितायां हेतुमद्वृत्तितावच्छेदकत्वेन घटभेदत्वात्यन्ताभावनिष्ठत्वेन तादृशत्वात् तन्निरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाभावः साध्यतावच्छेदकेऽस्तीति, एवं रीत्या व्यभिचारिण्यतिव्याप्तिरपि नास्तीति ध्येयम्।

दीधितौ। अथेति। ज्ञानवान् द्रव्यत्वादित्यत्र समवायेन ज्ञानस्य साध्यत्वे द्रव्यत्वाधिकरणे घटादौ ज्ञानाभावस्य विषयतया प्रतियोगिसमानाधिकरणत्वादभावान्तरमादायातिव्याप्तिः। एवं विशेषगुणवान् मनोन्यद्रव्यत्वादित्यत्र हेत्वधिकरणे काले दिशि च विशेषगुणाभावस्य कालिकदैशिकविशेषणतासंबन्धाभ्यां प्रतियोगिसमानाधिकरणतयाऽभावान्तरमादायातिव्याप्तिः, एवं जातिमान् भावत्वादित्यत्र भावत्वाधिकरणे सामान्ये-विशेषे-समवाये च जात्यभावस्य एकार्थसमवायेन प्रतियोगिसमानाधिकरणत्वादतिव्याप्तिः। भावत्वं च समवाय-एकार्थसमवायान्यतरसंबन्धेन सत्तावत्त्वम्। एकार्थसमवायश्च स्वप्रतियोगिकसमवायप्रतियोगित्व-स्वप्रतियोगिकसमवायतादात्म्यान्यतररूपः।

स्थलान्तरमनुसर्तुं ज्ञानवान् द्रव्यत्वादित्यत्रातिव्याप्तिं निरोक-

तायामतिव्याप्तिः,

प्रतियोगिव्यधिकरणत्वान्नातिव्याप्तिरत आह । विशेषगुणवानिति । अत्र व्यभिचार-निरूपक कालो दिक् च तत्र काले कालिकेन, दिशि च दैशिकेन सम्बन्धेन विशेषगुणस्य सत्वात्तदभावो न प्रतियोगिव्यधिकरण इति भवत्यतिव्याप्तिः। विशेषपदं व्यभिचारित्वरक्षार्थं । द्रव्यत्वादित्युक्तौ सम्बन्धसामान्येन विशेषगुणस्य मनस्यसत्त्वान्नातिव्याप्तिसम्भवः, कालोपाधिवद्दिगुपाधित्वस्यापि मनस्यसत्त्वाद्व्या-वर्तकत्वात्, अन्यथा मनसः कालोपाधित्वमपि स्यादत उक्तं मनोऽन्येति ।

---

लक्ष्मीः

रोति । **विषयताया वृत्त्यनियामकतयेति** । विषयताया वृत्त्यनियाम-कत्वेपि घटादौ जन्ये महाकालत्वादौ च ज्ञानाभावस्य प्रतियोगिसमा-नाधिकरणत्वाद् गगनस्य हेत्वधिकरणानुधावनम् । **सहजत एवेति** । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिसामानाधिकरण्यानुक्तावपि । **प्रतियोगिव्यधिकरणत्वादिति** । प्रतियोगिवैयधिकरण्ये संबन्धित्वा-प्रवेशे इति शेषः । तथा च द्रव्यत्वाधिकरणे गगने ज्ञानाभावोपि प्रति-योगिव्यधिकरणः, केनापि संबन्धेन ज्ञानस्य गगनेऽसत्वात्, विषयतया ज्ञानत्वावच्छिन्नाधिकरणत्वं चाप्रसिद्धम्, विषयताया वृत्त्यनियाम-कत्वादिति भावः ।

**अतः** । ज्ञानवान् द्रव्यत्वादित्यत्रातिव्याप्त्यभावात् । **आह** । स्थलान्तरेऽतिव्याप्तिमाहेत्यर्थः । **अत्र** । विशेषगुणवान् मनोन्यद्रव्यत्वा-दित्यत्र । **तदभावो न प्रतियोगिव्यधिकरण इति** । विशेषगुणाभा-वो न प्रतियोगिव्यधिकरण इत्यर्थः । तथा चाभावान्तरमादायाऽति-व्याप्तिरिति भावः । **अव्यावर्त्तकत्वादिति** । इदानीं घटो न तदानीम्, इह दिशि घटो न तद्दिशि, इति जन्यानामेव व्यावर्तकत्वं न तु नित्या-नामिति भावः । **अन्यथा** । अव्यावर्त्तकस्यापि तथात्वे । **कालोपा-धित्वमपि स्यादिति** । कालोपाधित्वं जन्यानामेवेति सिद्धान्तादिति भावः । प्रकारान्तरेण मनोन्यपदं सार्थयतां मतमुपन्यस्य दूषयति । **यत्तु इति** । **महादिग्वृत्तितायामवच्छेदकत्वमिति** । मूर्तमात्रस्य

यत्तु मूर्त्तमात्रस्य दिगुपाधित्वं= महादिग्वृत्तितायामवच्छेदकत्वं, न त्वधिकरणत्वमिति प्राचां मते सम्बन्धसामान्येनैव तस्य विशेषगुणानधिकरणत्वात्, मनोऽन्यपदमिति। तन्मन्दम्। एवमप्यवच्छेदकतासम्बन्धेनैव मनसो विशेषगुणवत्तायाः सम्भवेन मनोऽन्यपदवैयर्थ्यापत्तेः। [अत्र च द्रव्यत्वाधिकरणे घटादावतीततत्तद्व्यक्त्यभाव एव सम्बन्धसामान्येन प्रतियोगिव्यधिकरण इति ध्येयम्]

ननु स्वमते दिक्कालयोरीश्वरानतिरिक्तत्वादत्र व्याप्तिरेवेत्यत आह—जातीति।

---

लक्ष्मीः

दिगुपाधित्वमित्यस्यार्थ इत्यर्थः। तथा च मनसो विशेषगुणानधिकरणत्वान्नातिव्याप्तिसंभव इति मनोन्यपदमिति भावः। **एवमपि।** दैशिकविशेषणतया मनसो विशेषगुणानधिकरणत्वेपि। **अवच्छेदकतासंबन्धेनैवेति।** एव कारेण दैशिकविशेषणताया व्यावृत्तिः। **मनोन्यपदवैयर्थ्यापत्तेरिति।** अवच्छेदकतासंबन्धेन विशेषगुणस्य मनसि सत्वेन तदभावस्य प्रतियोगिसमानाधिकरणतयाऽभावान्तरमादाय-मनोन्यपदाभावेपिऽतिव्याप्तिसंभवादिति भावः।

न चाऽवच्छेदकताया वृत्यनियामकत्वात्कथं तेन संबन्धेन विशेषगुणवत्वं मनस इति वाच्यम्। ममान्तः करणे कोपः—ममान्तः करणे 'रागः' इत्यादिप्रयोगदर्शनादवच्छेदकताया वृत्तिनियामकत्वस्याभ्युपेयत्वात्। अथ वा चेष्टां प्रति अवच्छेदकतासंबन्धेन कारणत्वानुरोधेनावच्छेदकताया वृत्तिनियामकत्वं बोध्यम्। न च संबन्धसामान्येन प्रतियोगिव्यधिकरणाभावाप्रसिद्धौ नातिव्याप्तिर्घटाभावस्यापि कालिकादिसंबन्धेन प्रतियोगिसमानाधिकरणत्वात्, यत्किंचित्संबन्धेन प्रतियोगिवैयधिकरण्यनिवेशे तु वन्हिसामान्याभावस्य महानसीयसंयोगेन प्रतियोगिव्यधिकरणत्वाद्वन्हिमान् धूमादित्यादावव्याप्तिरिति वाच्यम्। मनोन्यद्रव्यत्वाधिकरणघटादोवतीततव्यक्तथभावस्यैव तथात्वादिति ध्येयम्।

स्वमते। **दीधितिकृन्मते।** दिक्कालौ नेश्वरादतिरिच्येते इति हि तन्मतम् अत्र द्रव्यत्वहेतो। **व्याप्तिरेवेति।** ईश्वरे विशेषगुणस्य ज्ञानादेः सत्वात्तादृशद्रव्यत्वहेतोः सद्धेतुतया तद्वारणप्रयासोऽनुचित इति भावः।

न च जातेर्व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादेव नातिव्याप्तिरिति वाच्यम्; समवायेनाऽव्यापकत्वग्रहदशायामपि सम्बन्धसामान्येन प्रतियोगिवैयधिकरण्यघटितव्यापकत्वज्ञानात्समवायेन जात्यनुमित्यापत्तेरेव प्रकृतेऽतिव्याप्तिपदार्थत्वात् ।

---

लक्ष्मीः

व्याप्यवृत्तिसाध्यकस्थलीयलक्षणे प्रतियोगिवैयधिकरण्यस्याऽनिवेशेन तद्घटितलक्षणस्य तत्रातिव्याप्तिदानमनुचितमित्याशयेनाऽऽशंकते । **नचेति** । वाच्यमित्यनेनान्वयः । **व्याप्यवृत्तितया** । अवच्छिन्नवृत्तिकान्यतया । **नातिव्याप्तिरिति** । व्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्याप्रवेशात् , प्रतियोगिवैयधिकरण्याघटितलक्षणस्य चाऽतिव्याप्तिरेव न संभवति, सामान्यादौ समवायेन जात्यभावसत्वात् इति भावः । अतिव्याप्तिपदस्याऽनुमित्यापत्तिपरतया अभिप्रेत्य समाधत्ते । **समवायेनाऽव्यापकत्वग्रहदशायामपीति** । भावत्वसमानाधिकरणाभावप्रतियोगिसाध्यमितिव्यभिचारज्ञानदशायामपीत्यर्थः । संबन्धसामान्येन प्रतियोगिवैयधिकरण्यव्यापकताज्ञानादिति । जातिः भावत्वसमानाधिकरणो यः संबन्धसामान्येन प्रतियोगिव्यधिकरणाभावः तत्प्रतियोगित्वाभाववतीत्याकारकज्ञानादित्यर्थः । विशेषाभाववत्ताज्ञानं सामान्यवत्तानिश्चयस्याऽप्रतिबन्धकत्वादिति भावः । अतिव्याप्तिपदार्थत्वादिति । जातिमान् भावत्वादित्यनुमित्यापत्तिरिति भावः ।

ननु व्याप्यवृत्तितानवच्छेदकधर्मावच्छिन्नविधेयकानुमितौ संबन्धसामान्येन प्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानस्य कारणत्वान्नोक्तानुमित्यापत्तिः सम्भवतीत्यत आह । **जात्यादेरपीति । प्रागुक्तेति** । साध्यतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तद्वृत्त्यभावस्य तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाभावरूपेत्यर्थः ।

**दीधितौ** । साध्यशून्यानां साध्यतावच्छेदकसम्बन्धेन साध्याभाववतां । **हेतुमतां** । गगन-दिक्काल-सामान्यानां । अनेन एतद्धेतूनां व्यभिचारित्वं प्रदर्शितम् । **साध्यवत्त्वादिति** । गगनस्य विषयतया

साध्यशून्यानामपि हेतुमतां विषयत्व-विशेषणत्वै-कार्यसमवायैः साध्यवत्त्वादिति चेत् ।

---

अतिव्याप्तिं योजयति । साध्यशून्येति । विशेषणता, दिक्कृता, कालिकीच । एकार्थेति । समवायस्यापि स्वात्मक एव स्वरूपसम्बन्ध इति तत्रापि जात्येरेकार्थसमवायोऽस्तीत्याशयः । जातिः सतीतिवत्, समवायः सन्निति प्रतीतेरविशेषात् । तथा च जात्याधिकरणनिरूपितसमवायात्मकस्वरूपसम्बन्धेन समवायोऽपि जातिमानिति, साध्याभावस्य प्रतियोगिसमानाधिकरणत्वादतिव्याप्तिरिति भावः ।

---

लक्ष्मीः

ज्ञानवत्वात्, दिक्कालयोः विशेषतया विशेषगुणवत्वात्, सामान्यस्य एकार्थसमवायेन जातिमत्वाच्चेत्यर्थः । एतेन साध्याभावे प्रतियोगिसामानाधिकरण्यं सूचितम् । भावत्वाधिकरणे समवाये जात्यभावस्य प्रतियोगिव्यधिकरणतया कुतोऽतिव्याप्तिरित्यत आह । समवायस्यापीति । स्वात्मक इति । समवायतादात्म्यमित्यर्थः । तथा च स्वप्रतियोगिकसमवायप्रतियोगित्व, स्वप्रतियोगिकसमवायतादात्म्यान्यतररूपः एकार्थसमवायः । स्वं० जातिः । भावत्वस्य समवेतत्वार्थकत्वे समवायस्य हेत्वधिकरणत्वमेव न सम्भवतीत्याह । भावत्वात् समवेतत्वादिति । तथा च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणनिरूपितवृत्तित्वाभावविवक्षणे च । प्रतियोगितावच्छेदकीभूतयत्किंचित्सम्बन्धेनोच्यते सम्बन्धसामान्येन वा । आद्ये वह्निसामान्याभावस्यापीति । द्वितीये—जातिमान् जातित्वादिति । जातिमद्भेदत्वादिति । धर्मात्यन्ताभावस्य धर्मिभेदस्वरूपत्वादिति भावः । स्वप्रतियोगित्वमिति । संयोगेन वन्ह्यभावप्रतियोगित्वं शुद्धसंयोगसंबन्धावच्छिन्नं तादृशसंयोगसंबन्धेन वन्हिसंबन्धीपर्वतादिः तत्र महानसीयसंयोगेन वन्ह्यभावस्य वृत्तित्वेन वन्ह्यभावो न प्रतियोगिव्यधिकरण इत्यभावान्तरमादाय नाव्याप्तिः । जातिमान् भावत्वादित्यत्रापि भावत्वाधिकरणे सामान्यादौ जात्यभावप्रतियोगित्वं समवायसंबन्धावच्छिन्नं तादृशसमवायसंबन्धेन जातिसंबन्धी द्रव्यादिः तत्र जात्यभावस्याऽवृत्तितया जात्यभावः प्रतियोगिव्यधिकरण इति नातिव्याप्तिः ।

भावत्वात्-समवेतत्वात्, इत्यपि केचित्। प्रतियोगितेति। तथा च ज्ञानाद्य-भावस्य तादृशेन समवायसम्बन्धेन घटादौ प्रतियोगिव्यधिकरणत्वान्नातिव्याप्तिः।

न च तादृशयत्किञ्चित्सम्बन्धेन प्रतियोगिसामानाधिकरण्याभावोक्तौ वह्निसामा-न्याभावस्यापि धूमवत्पर्वतावच्छेदेन महानसीयसंयोगेन प्रतियोग्यसमानाधिकरण-त्वाद् वह्निमान् धूमादित्यादावव्याप्तिः,

स्वप्रतियोगितावच्छेदकसम्बन्धसामान्येन तथात्वोक्तौ च, जातिमान् जातित्वा-दित्यादावतिव्याप्तिः। समवायेन जात्यभावस्य तादात्म्येन जातिमद्भेदत्वात्, तस्य च स्वप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन यज्जातिसम्बन्धि, तद्वृत्तित्वेन प्रति-योगिव्यधिकरणत्वाभावादिति वाच्यम्।

स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन यत् प्रतियोगिसम्बन्धि तद्वृत्तित्वाभावस्योक्तत्वात्,।

संयोगसामान्यावच्छिन्नवन्ह्यभावप्रतियोगितायां महानसीयसंयोगत्वादिविशिष्टान-वच्छेदकतया वन्ह्यभावस्य पर्वतादौ महानसीयसंयोगेन प्रतियोगिसामानाधिकरण्या-भावेऽप्यव्याप्तिविरहादिति ध्येयम्।

ननु समवायावच्छिन्नवन्ह्यभावमादाय धूमादावव्याप्तिवारणार्थमग्रे साध्यता-वच्छेदकसम्बन्धावच्छिन्नत्वेन प्रतियोगित्वं निवेशनीयम्, तथा च कपिसंयोगवत-

---

लक्ष्मीः

तथा च स्वप्रतियोगित्वं यादृशरूपावच्छिन्नसंसर्गनिष्ठावच्छेद-कताकं तादृशरूपावच्छिन्नसंसर्गनिष्ठावच्छेदकताकसंबन्धितावद्वृत्ति-त्वाभाव इति भावः।

अनुगमस्तु स्वप्रतियोगिताविशिष्टनिरूपकताकाधिकरणतानिरू-पितवृत्तित्वाभावः। वै० स्वावच्छेदकधर्मावच्छिन्नत्व, स्वनिरूपित संसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वोभयसं०। वन्हिमान् धूमादित्यत्राव्याप्तिं निराकरोति। **संयोगसामान्यावच्छि-न्नवन्ह्यभावप्रतियोगितायामिति। महानसीयसंयोगत्वादिविशिष्टा-नवच्छेद्यतयेति।** महानसीयसंयोगानवच्छिन्नत्वादित्यर्थः। **प्रतियोगि-सामानाधिकरण्याभावेपि।** प्रतियोगिव्यधिकरणत्वेन वन्ह्यभावस्य लक्षणघटकत्वेपि।

**अव्याप्त्यभावादिति।** महानसीयसंयोगेन प्रतियोगिसमाना-धिकरण्याभावस्य लक्षणाघटकत्वादिति भावः। **तथा च।** प्रतियोगि-

**मैवं । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिनो यदधिकरणं,**

स्तादात्म्येन साध्यतायामेतद्वृक्षत्वादावव्याप्तिर्भेदमात्रस्यैव स्वप्रतियोगितावच्छेदकतादात्म्यसंबन्धेन प्रतियोग्यधिकरणाप्रसिद्धेरत आह, । सम्बन्धि वेति ।

एतदेव घटयति । भवति चेति । एवं = प्रतियोगितावच्छेदकसम्बन्धेन । प्रतियोगिसम्बन्धित्वविवक्षणेन ।

न च तादात्म्येन वस्तुमात्रस्यैव व्याप्यवृत्तित्वात्तादृशसम्बन्धेन साध्यतायां प्रतियोगिवैयधिकरण्याप्रवेशादिदमयुक्तमिति वाच्यम् ।

मूलाद्यवच्छेदेन कपिसंयोगवद्भेदस्य वृक्षादौ स्वयमङ्गीकारात् । तादात्म्येन कपिसंयोगवतोऽप्यव्याप्यवृत्तित्वात् ।

न चैवं प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावे त्वग्रिमनिष्कर्षेऽप्यप्रतीकारः, प्रतियोगितावच्छेदकसम्बन्धेन ये प्रतियोगिसम्बन्धिनः, तत्तद्व्यक्तित्वावच्छिन्नभेदकूटविशिष्टहेतुमद्वृत्तित्वस्यैव तत्र वक्तव्यत्वात् ।

---

लक्ष्मीः

तायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे च । **प्रतियोग्यधिकरणाप्रसिद्धेरिति** । एतद्वृक्षत्वसमानाधिकरणघटो नेति भेदप्रतियोगित्वं तादात्म्यसंबन्धावच्छिन्नं तादृशसंबन्धेन प्रतियोग्यधिकरणत्वाप्रसिद्धेरिति भावः । संबन्धिपदोपादाने तु तादात्म्येन घटसंबन्धिनि घटे घटभेदस्याऽवर्त्तमानत्वादेतद्वृक्षत्वाधिकरणे सत्वान्नाप्रसिद्धिः । तादात्म्येन कपिसंयोगवतोपि अव्याप्यवृत्तित्वादिति । तथा च एतद्वृक्षे मूलावच्छेदेन कपिसंयोगवद् भेदसत्वादव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यनिवेशः । **न चेति** । अस्याऽप्रतीकार इत्यनेनाऽन्वयः । **एवं** । भेदस्याऽव्याप्यवृत्तित्वे । कपिसंयोगवतस्तादात्म्येन साध्यतायां एतद्वृक्षत्वहेतौ अग्रिमनिष्कर्षेपि अव्याप्तिः, कपिसंयोगवद्भेदस्य मूलावच्छेदेन कपिसंयोगवदसंबन्धिहेतुसंबन्धिवृक्षवृत्तित्वादिति भावः । सिद्धान्तयति । प्रतियोगितावच्छेदकसंबन्धेनेत्यादि । **तत्तद्व्यक्तित्वावच्छिन्नेति** । अव्याप्यवृत्ति धर्मावच्छिन्नभेदस्यैवाऽव्याप्यवृत्तित्वम्, न तु तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्येत्याशयः । **भेदकूटेति** । तेन वह्निमान् धूमादित्यत्र वन्ह्यभावप्रतियोगिवन्हिसंबन्धिमहानसभिन्नत्वस्य पर्वतादौ सत्वेन वन्ह्यभावस्य

वस्तुतस्तु—तादात्म्यसम्बन्धेनापि न कस्यचित् प्रागुक्तव्याप्यवृत्तित्वमतो यथाश्रुतमेव सम्यक्।

केचित्तु—"प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितायां यद्धर्मावच्छिन्नत्व, यत्सम्बन्धावच्छिन्नत्वोभामाव इत्यादि वक्ष्यमाणनिष्कर्षस्य तादात्म्येन साध्यतायां व्यभिचारिण्यतिव्याप्तिः। अतः प्रतियोग्यनधिकरणत्वं परित्यज्य प्रतियोग्यसम्बन्धित्व मवश्यं तत्र निवेश्यमित्याशयेन सम्बन्धित्वमुक्तम्" इत्याहुः।

---

लक्ष्मीः

लक्षणघटकत्वेपि नाव्याप्तिः, कूटान्तर्गतवह्निसंबन्धिपर्वतव्यक्तिभेदस्य पर्वतेऽसत्वात्। तादृशप्रतियोगिसंबन्धित्वावच्छिन्नभेदनिवेशेपि तद्दोषतादवस्थ्यम्, संबन्धित्वस्याननुगततया एकसंबन्धिभेदनिवेशेऽपरसंबन्ध्यन्तरे सत्वात्।

ननु तादात्म्यसंबन्धेन वस्तुमात्रस्यैव 'अवच्छिन्नवृत्तिकान्यत्वरूप' यथाश्रुतव्याप्यवृत्तित्वम, संयोगवद्भेदस्य वृक्षादावनभ्युपगमेन प्रतियोगिवैयधिकरण्यानिवेशेन तन्मूलकसंबन्धित्वप्रवेशो निष्फल एवेत्यत आह। **वस्तुतस्तु इति**। तथा च यादृशव्याप्यवृत्तिसाध्यकस्थले प्रतियोगिवैयधिकरण्याप्रवेशस्तादृशव्याप्यवृत्तित्वं तादात्म्येन नित्यमात्रसाध्यस्य, तादात्म्येन जन्यसाध्यकस्थलेऽव्याप्तिवारणाय तु प्रतियोगिवैयधिकरण्यं प्रवेश्यम्, एतद्वृक्षत्वाधिकरणे वृक्षे मूलावच्छेदेन कपिसंयोगिभेदसत्वात्। तत्रापि संबन्धित्वाप्रवेशे तादृशसंबन्धेनाऽधिकरणाप्रसिद्ध्याऽव्याप्तिरतःसंबन्धित्वनिवेश एव सम्यक्।

**व्यभिचारिणि अतिव्याप्तिरिति**। कपिसंयोगवतस्तादात्म्येन साध्यतायां मेयत्वहेतौ प्रतियोग्यनधिकरणत्वस्थाने प्रतियोग्यसंबन्धित्वानिवेशेऽतिव्याप्तिरित्यर्थः। तादात्म्यसंबन्धेन प्रतियोग्यधिकरणाऽप्रसिद्ध्या कपिसंयोगिभेदस्य गृहीतुमशक्यत्वात्। संबन्धान्तरावच्छिन्नप्रतियोगितायामुभयाभावसत्वादिति भावः। **अतः**। अतिव्याप्तिवारणायेति यावत्। **तत्र**। लक्षणे। तथा च संबन्धित्वनिवेशे कपिसंयोगिमान् मेयत्वादित्यत्र तादात्म्येन कपिसंयोगिभेदस्यैव लक्षणघटकतया तदीयप्रतियोगितायां साध्यतावच्छेदककपिसंयोगावच्छिन्नत्व—साध्यतावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्वद्वयोः सत्त्वा-

सम्बन्धि वा—तद्वृत्तित्वाभावस्योक्तत्वात् भवति चैवमन्यो-न्याभावोऽपि प्रतियोग्यसमानाधिकरणः ॥

---

ननु कपिसंयोगाभावस्यापि गुणादौ प्रतियोग्यसमानाधिकरणत्वात् कपिसंयोगी एतत्वादित्यादावव्याप्तिरत आह । तद्विशिष्टस्येति । प्रतियोगिसामानाधिकरण्याभाव-विशिष्टस्येत्यर्थः । तथा च हेतुमति वृक्षादौ संयोगवद्वृत्तित्वाभावविशिष्टः संयोगा-भावो नास्तीति नाव्याप्तिः, विशिष्टनिरूपिताधेयत्वमतिरिक्तमित्याशयेनेदम् ।

यद्वा—'तद्विष्टस्ये'त्यस्य 'हेत्वधिकरणे'न्वयः । तत्र षष्ठ्यर्थोऽधिकरणत्वं, तेन

---

लक्ष्मीः

अतिव्याप्तिः । दीधितौ । एवं । प्रतियोग्यसंबन्धित्वनिवेशे ।

शंकते । नन्विति । कपिसंयोगाभावस्यापि गुणादौ प्रतियोग्यस-मानाधिकरणत्वादिति । गुणे कपिसंयोगाभावे न कपिसंयोगसामाना-धिकरण्यमिति प्रतीति बलात्, गुणावच्छेदेन कपिसंयोगाभावे कपि-संयोगसामानाधिकरण्याभावसत्वादित्यर्थः । तथा च कपिसंयोगाभावे गुणावच्छेदेन कपिसंयोगात्मकप्रतियोगिसामानाधिकरण्याभावात्, मूलावच्छेदेन वृक्षनिरूपितवृत्तित्वस्य च सत्वादिति यावत् । कपि-संयोगी एतद्वृक्षत्वादित्यादावव्याप्तिरिति । प्रतियोगिव्यधिकरण हेतुसमानाधिकरणाभावे" त्यन्तेन कपिसंयोगाभावस्य धर्तुं शक्यत्वा-दिति भावः । तथा च । प्रतियोगिसामानाधिकरण्याभावविशिष्ट-त्वोक्तौ च । नाव्याप्तिरिति । वृक्षे कपिसंयोगाभावो न कपिसंयो-गवद्वृत्तित्वाभावविशिष्टः एव इति कपिसंयोगाभावो न लक्षणघटकः अपि तु घटाभाव एव घटवद्वृत्तित्वाभावविशिष्टघटाभावस्य वृक्षे सत्वात्" इति नाव्याप्तिरित्यर्थः ।

ननु संयोगवद्वृत्तित्वाभावविशिष्टसंयोगाभावे कथं वृक्षनिरूपित-वृत्तित्वाभावः, शुद्धसंयोगाभावे वृक्षनिरूपितवृत्तितायाः सत्वात्, वि-शिष्टधर्मावच्छिन्नाधेयत्व, केवलविशेष्यतावच्छेदकधर्मावच्छिन्नाधेयत्व-योरैक्यादत आह । विशिष्टनिरूपितेति । वैशिष्ट्यावच्छिन्नाधेयत्वम-पीत्यर्थः । आधेयत्वस्याऽनतिरिक्तत्वं सर्ववादिसिद्धमतस्तद्दोषतादव-स्थ्यमत आह । यद्वेति । यद्वेत्वधिकरणमिति । कपिसंयोगाभावस्य

तद्विशिष्टस्याधिकरणं यद्धेत्वधिकरणं तद्वृत्तित्वमभावे वाच्यमित्यर्थः।

यद्यपि 'प्रतियोग्यसमानाधिकरणत्वं' हेतुविशेषणीकृत्य प्रतियोग्यसमानाधिकरण्यविशिष्टो यो हेतुस्तदधिकरणवृत्त्यभावस्य प्रतियोगितानवच्छेदकत्वविवक्षयैव

---

लक्ष्मीः

गुणादौ प्रतियोगिसामानाधिकरण्याभाववत्त्वेपि न तद्विशिष्टस्याधिकरणं हेत्वधिकरणम्, यत्र सामानाधिकरण्यविशिष्टवत्त्वं तत्र तदभावविशिष्टाधिकरणत्वाप्रत्ययादिति भावः।

तथा च स्वप्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिसामानाधिकरण्याभावविशिष्टस्य यस्याभावस्याधिकरणं हेत्वधिकरणं तद्वृत्तितादृशाभावप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके बोध्यम्। कपिसंयोगि एतद्वृक्षत्वादित्यत्र कपिसंयोगसामानाधिकरण्याभावविशिष्टस्य गुणवृत्तिकपिसंयोगाभावस्याधिकरताया वृक्षेऽसत्वेन स्वपदेन कपिसंयोगाभावस्य धर्तुमशक्यत्वात्। घटसामानाधिकरण्याभावविशिष्टघटाभावाधिकरणताया वृक्षवृत्तित्वेन स्वपदेन घटाभावमादाय तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके कपिसंयोगत्वे सत्वादिति ध्येयम्।

प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावेत्यत्र एकविशिष्टेऽपरवैशिष्ट्यमितिरीत्याऽन्वयेन प्रतियोग्यसामानाधिकरण्यविशिष्टः सन् हेत्वधिकरणवृत्तिर्योऽभावः इति लाभे तुल्यवित्तिवेद्यतया हेत्वधिकरणे प्रतियोग्यसामानाधिकरण्यविशिष्टाभावाधिकरणतालाभ इति भावः।

**यद्यपीति। विवक्षयैवेति।** स्वप्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगिसामानाधिकरण्याभाववान् यो हेतुः तदधिकरणवृत्तिर्यत्त्वं तत्प्रतियोगितानवच्छेदकत्वमित्यादिविवक्षयैवेत्यर्थः। एवकारेण हेत्वधिकरणे प्रतियोग्यसामानाधिकरण्यविशिष्टाभावाधिकरणताया व्यवच्छेदः। **नाव्याप्तिसंभव इति।** कपिसंयोगसामानाधिकरण्याभावविशिष्टाभावाधिकरणताया हेत्वधिकरणेऽभावेन स्वपदेन कपिसंयोगस्य धारणाऽसंभवादिति भावः। स्वप्रतियोगिसामानाधिकरण्यं हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धेन।

न च तथापि गुणो गुणकर्मान्यत्वविशिष्टसत्वादित्यत्र गुणत्वा-

तद्विशिष्टस्य च हेत्वधिकरणवृत्तित्वं वाच्यं, तेन नाव्याप्यवृत्तिसाध्यकासंग्रहः।

तद्वद्वृत्तिभिन्नधन्तु नार्थः, अव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिव्याप्तिप्रसङ्गात्। अत्र "सामानाधिकरण्यवतो" न तद-

---

संयोगी एतत्वादित्यादौ नाव्याप्ति सम्भवः; वृक्षस्य प्रतियोगिवैयधिकरण्यावच्छिन्नहेत्वधिकरणत्वाभावात्।

तथापि 'कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरण' इत्यग्रिममूलस्वरसेन हेतुसमानाधिकरणाभावस्यैव विशेषणं प्रतियोग्यसमानाधिकरणत्वदलमत एतावान् प्रयास इत्यवधेयम्।

ननु भेदस्य व्याप्यवृत्तितया 'प्रतियोगिसमानाधिकरणभिन्नत्वो' क्तौ च प्रागुक्ताव्याप्तिवारणसम्भवे 'तद्विशिष्टस्येत्यादिकं विफलमत आह—तद्वद्वृत्ति

---

लक्ष्मीः

भावप्रतियोगिगुणत्वसामानाधिकरण्यस्य विशिष्टसत्तायां सत्वेन साध्याभावस्य लक्षणाघटत्वेनातिव्याप्तिरिति वाच्यम्। स्वप्रतियोग्यधिकरणवृत्तितानवच्छेदकहेतुतावच्छेदकावच्छिन्नाधिकरणकत्वस्याभावे विवक्षणीयत्वादित्यलम्।

अव्याप्तिं वारयति। वृक्षस्येति। एतद्वृक्षत्वहेतोः कपिसंयोगाभावप्रतियोगिकपिसंयोगसामानाधिकरण्यविशिष्टत्वेन कपिसंयोगाभावस्य लक्षणाघटकत्वादिति भावः।

शंकते। नन्विति। भेदस्यावृत्तित्वे गुणावच्छेदेन कपिसंयोगाभावस्य प्रतियोगिमद्वृत्तिभिन्नतया कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तितादवस्थ्यमित्यत आह। भेदस्य व्याप्यवृत्तितयेति। तद्विशिष्टस्येत्यत्र तत्पदेन प्रतियोगिसामानाधिकरण्यमुक्त्वा तद्विशिष्टस्य हेत्वधिकरणवृत्तित्वविवक्षणमफलमित्यर्थः। दीधितौ। अव्याप्यवृत्तिसाध्यकव्यभिचारिणि अतिप्रसंगादिति। तथा चाधिकरणभेदेनाभावभेदविरहेण संयोगी सत्वादित्यादौ संयोगवद्वृत्तित्वेन तद्भिन्नत्वाभावादभावान्तरमादायातिप्रसंगादित्यर्थः। प्रतियोगिसामानाधिकरण्याभावस्तु संयोगाभावे सत्ताधिकरणगुणावच्छेदेन वर्त्तते एवेति

**भाववत्त्वं, प्रतीतेरन्यथैवोपपादितत्वादित्यस्वरसात् 'प्रतियोगिवैयधिकरण्ये' त्यादिविशेषणं वक्ष्यति, तच्च हेत्वधिकरणे बोध्यम् ।**

---

इति । प्रतियोगिमद्वृत्तिभिन्नत्वमित्यर्थः । अत्रेति । अस्वरसादित्यन्वयः । तदभाववत्त्वमिति । तथा च संयोगी सत्त्वादित्यादावतिव्याप्तिरिति भावः ।

ननु संयोगाभावे गुणे न संयोगसामानाधिकरण्यमिति प्रतीतिबलादेव गुणावच्छेदेने संयोगाभावे प्रतियोगिसामानाधिकरण्याभावसत्त्वान्नातिव्याप्तिरत आह, प्रतीतेरिति । उक्त प्रतीतिस्तु संयोगाभावनिष्ठस्य संयोगसामानाधिकरण्यस्यावच्छेदकत्वाभावमेव गुणादौ, संयोगानधिकरणीभूतगुणवृत्तित्वमेव वा संयोगाभावादावगाहत इत्यर्थः । तथा चातिव्याप्तिस्तदवस्थैवेति भावः । वक्ष्यति = मूलकारः । तच्च = तदपि । हेत्वधिकरण इति ।—तेन कपिसंयोगाभावस्य प्रतियोगिवैयधिकरण्यावच्छेदकीभूत गुणाद्यवच्छिन्नत्वेऽपि कपिसंयोग्येतत्त्वादित्यादौ नाव्याप्तिरिति भावः।

---

लक्ष्मीः

भावः ।

यत्र प्रतियोगिसामानाधिकरण्यम् , न तत्र प्रतियोगिसामानाधिकरण्याभावः, सामानाधिकरण्यघटकवृत्तितायाः व्याप्यवृत्तित्वात् इत्याशयेन प्रतियोग्यसामानाधिकरण्यरूप प्रतियोगिवैयधिकरण्यघटितकल्पेऽस्वरसमाह । **अत्रेति ।** प्रतियोग्यसामानाधिकरण्यार्थकप्रतियोगिवैयधिकरण्यघटितकल्पे इत्यर्थः । **दीधितौ सामानाधिकरण्यवतः ।** प्रतियोगिसामानाधिकरण्यवतः । **न तदभाववत्वम् ।** न प्रतियोगिसामानाधिकरण्याभाववत्वम् । **तथा च ।** सामानाधिकरण्यवतो न तदभाववत्त्वमिति नियमस्वीकारे च । **अतिव्याप्तिरिति ।** संयोगी सत्वादित्यत्रातिव्याप्तिः, संयोगाभावो न लक्षणघटकः, संयोगाभावे प्रतियोग्यसामानाधिकरण्यविरहादित्यस्वरसादित्यर्थः । **नातिव्याप्तिरिति ।** उक्त प्रतीतिबलात्संयोगाभावे संयोगसामानाधिकरण्याभावसत्वेन प्रतियोगिव्यधिकरणतया संयोगाभावस्य लक्षणघटकत्वान्नसंयोगी सत्वादित्यत्रातिव्याप्तिरित्यर्थः । **दीधितौ । प्रतीतेरन्यथैवोपपादितत्वादिति ।** उक्तप्रतीतिस्तु न गुणावच्छेदेन संयोगाभावे संयोगसामानाधिकरण्यावगाहिनी ।

**प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावेति पुनरभावान्तार्थनिष्कर्षः । ननु प्रतियोगितावच्छेदकत्वावच्छिन्नस्य यस्य कस्यचित्, तत्सामान्यस्य, प्रतियोगितावच्छेदक यत्किञ्चिदवच्छिन्नस्य वा ।**

---

ननु हेत्वधिकरणे प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वं, प्रतियोगिसामानाधिकरण्यानवच्छेदकीभूतहेत्वधिकरणावृत्तित्वमिति यावत्, तच्च व्याप्यवृत्तेरवच्छेदकत्वविरहादप्रसिद्धं गुरुतरञ्चेत्यत आह । प्रतियोग्यनधिकरणीभूतेति ।

---

लक्ष्मीः

**अवच्छेदकत्वाभावमेव गुणादाविति** । इदं च प्रात्यक्षिकप्रतीत्यभिप्रायेण । अवच्छेदकत्वबोधकपदाभावात् । वस्तुतः संयोगाभावनिष्ठं यत्संयोगसामानाधिकरण्यं तन्न गुणावच्छेद्यमिति प्रथमान्तमुख्यविशेष्यको बोधः । एवं च तुल्यवित्तिवेद्यतया संयोगाभावनिष्ठस्य संयोगसामाधिकरण्यस्यावच्छेदकत्वाभावविषयकबोधस्यापि संभवादिति ध्येयम् । एव कारेण संयोगाभावे संयोगसामानाधिकरण्याभावस्य व्यवच्छेदः । **शाब्दप्रतीत्यभिप्रायेणेति** । **संयोगानधिकरणगुणवृत्तित्वमेव वेति** । अत्राप्येवकारेण तद्व्यवच्छेदः । तथा चाऽतिव्याप्तिस्तदवस्थैवेति । **तथा च** । संयोगाभावे संयोगसामानाधिकरण्याभावविरहे च । संयोगाभावे प्रतियोगिवैयधिकरण्यविरहेणाभावान्तरमादायातिव्याप्तिस्तदवस्थैवेति भावः । **तेन** । हेत्वधिकरणे एव प्रतियोगिवैयधिकरणनिवेशेन । **नाव्याप्तिरिति** । गुणस्य हेत्वधिकरणत्वाभावात्, एतद्वृक्षस्य कपिसंयोगात्मकप्रतियोगिवैयधिकरण्यानवच्छेदकत्वेन घटस्वरूपप्रतियोगिवैयधिकरण्यावच्छेदकत्वादिति भावः । अभावे हेत्वधिकरणावच्छेदेन प्रतियोगिवैयधिकरण्यमित्यस्य प्रतियोगिवैयधिकरण्यावच्छेदक हेत्वधिकरणावच्छिन्नत्वं । **तच्च** । प्रतियोगिसामानाधिकरण्यानवच्छेदकत्वं च । **व्याप्यवृत्तेः** । सामानाधिकरण्यस्य प्रतियोग्यधिकरणावृत्तित्वेत्यत्र वृत्तित्वस्य निवेशे गौरवं चेत्याह । **गुरुतरं चेति** । **अतः** । गौरवात् । **अनधिकरणत्वमिति** परेणान्वय इति । तथा च प्रतियोगितावच्छेदकेत्यादिषष्ठ्यन्तत्रयमन-

अनधिकरणत्वमुक्तम्। आद्ये—अव्याप्यवृत्तिसाध्यकाऽव्याप्तिः, एकप्रतियोग्यधिकरणस्यापि तद्व्यक्त्यन्तरानधिकरणत्वात्। द्वितीये संयोगसामान्याभाववान् द्रव्यत्वाभाववान् सत्वादित्यादावति-व्याप्तिः। साध्याभावतो द्रव्यस्य तत्प्रतियोगिसंयोगविशेषाभाव-वत्वात्, नित्यत्वादिविशिष्टद्रव्यत्वाभावात्मकतत्प्रतियोगिनोऽ-धिकरणत्वाच्च।

---

कस्यचिदिति। अनधिकरणत्वमिति परेणान्वयः। तद्व्यक्त्यन्तरेति। प्रतियोगिव्यक्त्यन्तरेत्यर्थः। स्वमते संयोगसामान्याभावस्य केवलान्वयित्वात्, तत्सा-ध्यकसत्तादिकं सद्धेतुरेवाऽतः साध्यान्तरमाह। द्रव्यत्वाभावेति। यद्यपि द्रव्यत्वाभावस्य व्याप्यवृत्तित्वात्तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादिदमसंगतम्। न चात्र कालिकसंबन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वाभावः साध्यः स च काले एवाव्याप्यवृत्तिरिति वाच्यम्। तथा सति तस्य केवलान्वयित्वात्तत्साध्यक-सत्त्वादेः सद्धेतुत्वेन तत्रातिव्याप्तेरुपन्यासानौचित्यात्। तथापि सत्त्वे हेतौ व्यभि-

---

लक्ष्मीः

धिकरणत्वमित्यत्रान्वितमिति भावः। दीधितौ। यस्य कस्यचिदिति। प्रतियोगिन इति भावः। स्वप्रतियोगितावच्छेदकसमानाधिकरणी-भूताया प्रतियोगिनिष्ठाधेयता तदाश्रयस्येत्यर्थः। तत्सामान्यस्य। प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्य। प्रतियोगितावच्छेदके यावत्त्वन्तु नाशंकितम्, यावत्प्रतियोगितावच्छेदकावच्छिन्नाप्रसिद्धेः। यावन्ति प्रतियोगितावच्छेदकानि प्रत्येकं तदवच्छिन्नानधिकरणत्वन्तु द्वितीयकल्पान्तर्गतमेवेति न पृथगुट्टङ्कितम्। दीधितौ। आद्ये—प्रतियोगितावच्छेदकावच्छिन्नयत्किंचित्प्रतियोगिव्यक्त्यनधिकरणत्व-विवक्षणे। अव्याप्यवृत्तिसाध्यकाव्याप्तिरिति। कपिसंयोगी एतद्-वृक्षत्वादित्यत्राव्याप्तिरित्यर्थः। एकप्रतियोग्यधिकरणस्यापि। एकस्य कपिसंयोगात्मकप्रतियोगिनोऽधिकरणस्यापि एतद्वृक्षस्य। तद्व्यक्त्य-न्तरानधिकरणत्वादिति। कपिसंयोगान्तरस्य 'वृक्षावृत्तिकपिसंयोगस्य अनधिकरणत्वादित्यर्थः। तथा च कपिसंयोगाभावोपि प्रतियोगि-

चारग्रहदशायामपि प्रतियोगिसामान्यानधिकरणसत्त्ववन्निष्ठाभावप्रतियोगितानवच्छेदकं द्रव्यत्वाभावत्वमित्याकारकव्यापकताज्ञानादनुमित्यापत्तिरेवात्रातिव्याप्तिशब्दार्थः। वस्तुतो द्रव्यत्वाभावस्यापि न व्याप्यवृत्तित्वमिति ध्येयम्।

प्रथमसाध्येऽतिव्याप्तिं ग्राहयति। साध्याभाववत इति। तत्प्रतियोगीति। तस्य संयोगात्मनः साध्याभावस्य, यः प्रतियोगी संयोगविशेषाभावस्तद्वत्त्वादित्यर्थः।

---

लक्ष्मीः

व्यधिकरण इति प्रतियोगिवैयधिकरण्योपादानेपि कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तेरवारणात्तद्वैयर्थ्यमेवेति भावः।

**द्वितीये इति**। हेत्वधिकरणे प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणत्वोक्तौ कपिसंयोगाभावप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वस्य वृक्षेऽसत्त्वादुक्ताव्याप्तिविरहेऽपि अतिव्याप्तिमाह। **संयोगसामान्याभाववानिति**। साध्यान्तरानुसरणे बीजमाह। **स्वमते इति**। दीधितिकारमते इत्यर्थः। **स च**। कालिकेन द्रव्यत्वाभावश्च। **काले एवाऽव्याप्यवृत्तिरिति**। कालिकेन द्रव्यत्वं काले द्रव्यावच्छेदेनैव तदभावोपि काले द्रव्यत्वानधिकरण गुणाद्यवच्छेदेनेति काले प्रतियोगितदभावयोरवच्छेदकभेदेन सत्वात्। **तथा सति**। कालिकसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वाभावस्य साध्यत्वे सति। **तस्य**। कालिकेन द्रव्यत्वाभावस्य। **अनौचित्यादिति**। तथा च समवायसंबन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वाभाव एव स्वरूपेण साध्यः स च व्याप्यवृत्तिरेवेति भावः। **तथापि**। व्याप्यवृत्तित्वेपि। **व्यभिचारज्ञानदशायामपि**। द्रव्यत्वाभावत्वं सत्ववन्निष्ठाभावप्रतियोगितावच्छेदकमिति व्यभिचारज्ञानदशायामपि। **न प्रागुक्तेति**। साध्यतावच्छेदकसंबन्धेन यत्स्वाधिकरणं तद्वृत्त्यभावस्य तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाभावरूपेत्यर्थः। **इत्याकारकव्यापकताज्ञानादिति**। प्रतियोगिवैयधिकरण्यघटितव्यापकताज्ञानादित्यर्थः। **अनुमित्यापत्तिरिति**। विशेषाभाववत्तानिश्चयस्य सामान्यवत्ताबुद्ध्यप्रतिबन्धकत्वादिति भावः। व्याप्यवृत्तितानवच्छेदकधर्मावच्छिन्नविधेयताकानुमितावेव निरुक्तव्यापकताज्ञानस्य कारणत्वेन कुतोऽनुमि-

**स्वाभावाभावात्मकस्य विशिष्टस्यापि द्रव्यत्वस्य द्रव्यत्वानतिरेकात् ।**

---

द्वितीयेऽतिव्याप्तिं योजयति । नित्यत्वादीति । नित्यत्वादिविशिष्टं यद्द्रव्यत्वं तदभावात्मको यः साध्याभावस्य प्रतियोगी तदधिकरणत्वात्साध्याभाववतो द्रव्यस्येति पूर्वेणान्वयः ।

ननु विशिष्टद्रव्यत्वाभावो न द्रव्यत्वरूपस्य साध्याभावस्य प्रतियोगी किन्तु

---

त्यापत्तिरत आह ।

**प्रथमसाध्ये इति** । संयोगसामान्याभावे साध्ये इत्यर्थः । **साध्याभाववतः** । संयोगाभावाभाववतः संयोगवत इति यावत् । **तत्प्रतियोगीति** । तस्य संयोगात्मनः साध्याभावस्य यः प्रतियोगी—संयोगविशेषाभावः—कपिसंयोगाभावः—तद्वत्वात् द्रव्यस्येति यावत् । संयोग सामान्याभाववान् सत्वादित्यत्र संयोभावो न लक्षणघटकः, संयोगाभावाभावप्रतियोगितत्तत्संयोगाभावस्याधिकरणतायाः सत्ताधिकरणे द्रव्ये सत्वेन तस्य प्रतियोगिवैयधिकरण्यासंभवादिति भावः। इदन्तु बोध्यम् । तत्तत्संयोगत्वावच्छिन्नाभावाभावस्य संयोगादेः संयोगसामान्यानतिरिक्ततया संयोगसामान्याभावस्येव संयोगविशेषाभावस्यापि संयोगात्मकाभावप्रतियोगित्वादिति ।

**द्वितीये** । द्रव्यत्वाभावे साध्ये । **तदभावात्मकः** । नित्यत्वादिविशिष्टद्रव्यत्वाभावात्मकः । **साध्याभावस्य** । द्रव्यत्वाभावाभावस्य । **तदधिकरणत्वादिति** । हेत्वधिकरणे नित्यद्रव्ये जन्यत्वविशिष्टद्रव्यत्वाभावात्मकप्रतियोगिसत्वादित्यर्थः । एवं जन्यद्रव्ये नित्यत्वविशिष्टद्रव्यत्वाभावात्मकप्र तियोगिसत्वादित्यर्थः । नित्यत्वादीत्यत्रादिपदेन जन्यत्वस्योपग्रहः । तथा च द्रव्यत्वाभाववान् सत्वादित्यत्र सत्ताधिकरणे द्रव्ये द्रव्यत्वाभावाभावो न लक्षणघटकः, द्रव्यत्वरूपसाध्याभावप्रतियोगिसामान्यान्तर्गतनित्यवृत्तित्वविशिष्टद्रव्यत्वाभावस्याधिकरणतायाः जन्यद्रव्यरूपहेत्वधिकरणे तादृशस्य जन्यवृत्तित्वविशिष्टद्रव्यत्वाभावस्याधिकरणतायाश्च नित्यद्रव्ये सत्वात् ।

**नन्विति** । **विशिष्टद्रव्यत्वाभावः** । नित्यादिवृत्तित्वविशिष्ट-

नित्यत्वादिविशिष्टद्रव्यत्वस्यैवेति द्रव्यत्वं प्रतियोगिव्यधिकरणमेवेत्यत आह। स्वाभावेति। स्वं-नित्यवृत्तित्वविशिष्टद्रव्यत्वम्। न च नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावस्याभावो न नित्यवृत्तित्वविशिष्टद्रव्यत्वम्, विशिष्टस्यानतिरिक्ततया जन्येपि नित्यवृत्तित्वविशिष्टद्रव्यत्वस्याभावो नास्तीति प्रतीतिप्रसंगात्, किन्तु नित्यैकत्वादिकमेवेति नातिव्याप्तिरिति वाच्यम्। विशिष्टाधिकरणतायाः प्रतीतिनियामकतयै-

---

लक्ष्मीः

द्रव्यत्वाभावः। **द्रव्यत्वं प्रतियोगिव्यधिकरणमेवेति**। तथा च द्रव्यत्वाभावाभावस्य प्रतियोगी द्रव्यत्वाभाव एव तदनधिकरणत्वस्य हेत्वधिकरणे सत्वेन साध्याभावस्य लक्षणघटकतया नातिव्याप्तिः। **दीधितौ। स्वाभावाभावत्मकस्येति**। नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभावात्मकस्येत्यर्थः। **विशिष्टस्यापि**। नित्यवृत्तित्वविशिष्टस्यापि। **द्रव्यत्वानतिरेकादिति**। तथा च नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभावात्मकस्य नित्यवृत्तित्वविशिष्टद्रव्यत्वस्य द्रव्यत्वातिरिक्तत्वाभावादित्यर्थः।

न च धूमवान् वन्हेरित्यादौ भावसाध्यकेपि धूमाभावादेर्नित्यत्वादिविशिष्टस्वाभावादिरूपप्रतियोगिसामानाधिकरण्येन लक्षणाघटकतयाऽतिव्याप्तिसंभवेनाभावसाध्यकानुधावनमफलमिति वाच्यम्। धूमाभावस्य साध्यतावच्छेदकसंयोगादिना प्रतियोगिवैयधिकरण्यसंभवेन साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यविवक्षापक्षेपि अतिव्याप्तिसंपादनार्थं तदनुधावनात्। ननु नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभावो यदि नित्यवृत्तित्वविशिष्टद्रव्यत्वस्वरूपः स्यात्, तदा नित्यवृत्तित्वविशिष्टद्रव्यत्वरूपस्य द्रव्यत्वाभावाभाव 'द्रव्यत्वस्य प्रतियोगित्वं नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावे संभवात्, परन्तु नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभाव एव न नित्यवृत्तित्वविशिष्टद्रव्यत्वरूपः, तस्य द्रव्यत्वरूपतया जन्यद्रव्येपि द्रव्यत्वस्य सत्वेन 'जन्यद्रव्यं नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभाववदिति प्रतीतिरसत्वात्। अतो नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभावो नित्यैकत्वादिस्वरूप एव' तस्य च गुणस्वरूपतया द्रव्यत्वाभावाभावरूप द्रव्यत्वरूपता न संभवः इति द्रव्यत्वरूपसाध्या-

वातिप्रसंगभंगे द्रव्यत्वमपेक्ष्य नित्यानन्तसंख्यापरिमाणादिषु तादृशाभावत्वकल्पनाया गौरवात्, अभावाभावस्यैव प्रतियोगित्वमिति सिद्धान्तप्रवादाच्च ।

नन्वेवमपि निखिलाभावस्यैव स्वाश्रयतत्तद्व्यक्तिवृत्तित्वविशिष्टं यत्स्वं तदभावात्मकस्वप्रतियोगिना सह सामानाधिकरण्यात्प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्यैव नातिव्याप्तिः,

---

लक्ष्मीः

भावस्य प्रतियोगित्वं न नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावे किन्तु द्रव्यत्वाभावे एव तदनधिकरणत्वस्य हेत्वधिकरणे द्रव्ये सत्वेनातिव्याप्त्यभावादित्याशंकते । **नचेति** । समाधत्ते । **विशिष्टाधिकरणताया इति** । नित्यवृत्तित्वविशिष्ट द्रव्यत्वाधिकरणताया इत्यर्थः । **प्रतीतिनियामकतयेति** । नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभाववदिति प्रतीतिप्रयोजकतया । **अतिप्रसंग भंगे** । जन्यद्रव्यं तादृशद्रव्यत्वाभावाभाववदिति प्रतीत्यापत्तिवारणसंभवे । जन्यद्रव्ये नित्यवृत्तित्वविशिष्टद्रव्यत्वाधिकरणताविरहादिति भावः । **द्रव्यत्वमपेक्ष्य** । नित्यवृत्तित्व विशिष्टद्रव्यत्वमपेक्ष्य । **तादृशाभावत्वकल्पनायां** । नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभावत्वकल्पनायां ।

**गौरवादिति** । संख्यापरिमाणादीनामानन्त्यादिति भावः । ननु विलक्षणाधिकरणतायाः प्रतीतिनियामकतयैवाऽतिप्रसंगभंगेऽभावमात्रस्यैव प्रायेणाऽभेदप्रसंग इत्यत आह । **अभावाभावस्यैवेति** । एव कारेणाऽभावमात्रस्य व्यावृत्तिः । तथा च नित्यवृत्तित्वविशिष्टद्रव्यत्वे प्रतियोगित्वलक्षणानुरोधेन नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभावो तादृशद्रव्यत्वरूप एव स्वीकार्यः, एवं च तादृशद्रव्यत्वाभावरूपप्रतियोगिसामानाधिकरण्यादभावान्तरमादायातिव्याप्तिरस्त्येवेति भावः ।

प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्यैव नातिव्याप्तिरित्याशंकते । **नन्विति** ।**एवमपि** । नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभावस्य द्रव्यत्वरूपत्वेपि । **निखिलाभावस्यैव** । घटाभावादेः । स्वं-घटाभावादिः । द्वितीयस्वपदेनापि तस्यैव ग्रहणम् । तथा च घटाभावाश्रयतत्तद्भूतलवृत्तित्वविशिष्टघटाभावस्य योऽभावस्तदात्मक प्रतियोगिनेत्यर्थः । तृतीयाभावस्य प्रथमाभावरूपतया तृतीयाभावस्य प्रतियोगी द्वितीया-

एकव्यक्तिमात्रवृत्तीनां गुणाद्यात्मकाभावानामपि पूर्वक्षणवृत्तित्वविशिष्टस्य स्वस्य योऽभावस्तादृशप्रतियोगिना समं सामानाधिकरण्यात् ।

न च वक्ष्यमाणखण्डशः प्रसिद्ध्या गगनाभाव एव प्रतियोगिव्यधिकरणः, तस्यापि नित्यवृत्तित्वविशिष्टो यो गगनाभावस्तदभावात्मकेन स्वप्रतियोगिना समं सामानाधिकरण्यात् ।

---

लक्ष्मीः

भावः स च प्रथमाभावस्यापीति घटाभावस्य प्रतियोगी घटो घटाभावाभावश्चेति घटाभावाभावात्मकप्रतियोगिनेति यावत् । **नातिव्याप्तिरिति** । तथा च द्रव्यत्वाभाववान् सत्वादित्यत्र हेतुसमानाधिकरणघटाभावस्य द्वितीयाभावरूप प्रतियोगिसामानाधिकरण्या त्प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्यैव नातिव्याप्तिरिति भावः । एवं पटाभावमादायापि ।

ननु एकाधिकरणमात्रवृत्त्यभावस्य च न स्वीय तत्तदधिकरणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगि सामानाधिकरण्यसंभव । यथा गुणोभावाभावस्य गुणस्य द्रव्यत्वसमानाधिकरणाभावस्य यः प्रतियोगी गुणाभावस्तदनधिकरणत्वस्य हेत्वधिकरणे द्रव्ये प्रसिद्धत्वादित्यतोऽप्रसिद्धिं योजयति । **एकव्यक्तिमात्रवृत्तीतामिति** । **गुणाद्यत्मकानां** । गुणस्वरूपाणां । **स्वस्य** । गुणस्य । **योऽभावः** । पूर्वक्षणवृत्तित्वविशिष्टगुणाभावः । **तादृशप्रतियोगिना** । तदात्मकप्रतियोगिना । **सामानाधिकरण्यादिति** । तथा च गुणात्मकाभावोपि न प्रतियोगिव्यधिकरणः इति प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या नातिव्याप्तिरिति भावः ।

गगनाभावस्य प्रतियोग्यधिकरणाप्रसिद्ध्या यथाश्रुतप्रतियोगिवैयधिकरण्यासंभवादाह । **वक्ष्यमाणेति** । साध्यतावच्छेदकसंबन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नसामान्यप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तादृशप्रति - योगितानवच्छेदकमित्यादि । **गगनाभावः प्रतियोगिव्यधिकरण इति** । स्वरूपसंबन्धे हेत्वधिकरणीभूतद्रव्यानुयोगिकत्वसत्वेपि गगनप्रतियोगिकत्वविरहेणोभयाभावसत्वादतिव्याप्तिरिति भावः ।

समाधत्ते । **तस्यापीति** । गगनाभावस्यापीत्यर्थः । **स्वप्रतियोगि-**

गगनाभावस्यैव संयोगसंबन्धेनाऽभावत्वावच्छिन्नप्रतियोगिताकाभावतया खण्डशः प्रसिद्ध्यापि तस्य प्रतियोगिव्यधिकरणत्वासंभवाच्च ।

एतेन नित्यत्वादिविशिष्टस्य गगनात्यन्ताभावस्य योऽभावस्तदभावत्वं न नित्यत्वविशिष्टगगनाभावस्य तस्य केवलान्वयितया जन्येपि नित्यत्वविशिष्टस्य गगनाभावस्याभावो नास्तीति प्रतीति प्रसंगात् । किन्तु नित्यत्वादेरेव तथात्वमित्युक्तावपि न निस्तार इति चेत् ।

---

लक्ष्मीः

**नेति** । नित्यवृत्तित्वविशिष्टगगनाभावाभावात्मकेन गगनाभावप्रतियोगिनेत्यर्थः । **समानाधिकरणत्वादिति** । तथा च साध्यतावच्छेदकीभूतस्वरूपसंबन्धे गगनाभावप्रतियोगिसामान्यान्तर्गतनित्यादिवृत्तित्वविशिष्टगगनाभावाभावप्रतियोगिकत्वस्य हेत्वधिकरणद्रव्यानुयोगिकत्वस्य चोभयोः सत्वाद् गगनाभावोपि न प्रतियोगिव्यधिकरण इति भावः । **संयोगसंबन्धेनाभावत्वावच्छिन्नप्रतियोगिताकाभावतयेति** । संयोगेनाभावाभावस्वरूपत्वेनेति यावत् । गगनाभाव-संयोगेनाभावाभावयोः केवलान्वयित्वात्समनियताभावत्वेनैक्यादिति भावः । तथा च गगनाभावप्रतियोगिसामान्यान्तर्गताऽभावरूपप्रतियोगिकत्वस्य हेत्वधिकरणद्रव्यानुयोगिकत्वस्य चोभयोः सत्वाद् गगनाभावोपि न प्रतियोगिव्यधिकरण इत्याशयः ।

**एतेन** । व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्यकथनादेव । **नित्यत्वादीति** । आदिना जन्यत्वपरिग्रहः । **तस्य** । गगनाभावस्य । **प्रतीतिप्रसंगादिति** । जन्यं नित्यवृत्तित्वविशिष्टगगनाभावाभावाभाववदिति प्रतीतिप्रसंगादित्यर्थः । **किन्तु इति** । तथा च नित्यत्वरूपस्य तादृशगगनाभावाभावाभावस्य न गगनाभावरूपत्वमतो न गगनाभावप्रतियोगित्वं न नित्यवृत्तित्वविशिष्टगगनाभावाभावे इति कुतोऽतिव्याप्तिवारणमित्युक्तावपि न निस्तार इत्यर्थः ।

**असंभवःस्यादिति** । हेतुसमानाधिकरणघटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टघटाभावात्मकतया तस्य प्रतियोगी यथा घटः तथा पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावोपीति प्रतियोगिसामान्यान्तर्गतपूर्वक्ष-

अत्र नव्याः। यथाश्रुतस्य प्रागुक्तक्रमेण प्रतियोगिव्यधिकरणाभावस्याऽप्रसिद्ध्या वन्हिमान् धूमादित्यादौ सर्वत्राऽसंभवः स्यात्। अतो यत्किञ्चित्स्वप्रतियोगित्वं यादृशसंबन्धावच्छिन्नं तादृशसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यत्साधनाधिकरणंतन्निष्ठाभावस्य साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वमेव लक्षणे प्रवेशनीयम्। तथा च सद्धेतुस्थल इव द्रव्यत्वाभाववान् सत्त्वादित्यत्रापि संयोगेन घटाद्यभाव एव प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरण, तदीयं घटनिष्ठप्रतियोगित्वं यादृशसंयोगसंबन्धेनावच्छिन्नं तादृशसंयोगसंबन्धेन साधनवतो द्रव्यस्य तदीयप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वमक्षतमेव।

नचैवमपि तदीयस्य साध्यतावच्छेदकीभूतस्वरूपसंबन्धावच्छिन्नप्रतियोगित्वस्याप्रसिद्ध्या न दोषसंगतिः, पूर्वक्षणवृत्तित्वादिविशिष्टस्य घटाद्यभावस्याभाव एव तत्प्रसिद्धेरित्याहुः।

---

लक्ष्मीः

णवृत्तित्वविशिष्टघटाभावाभावाधिकरणतायाः पर्वतादौ सत्त्वात्प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽसंभव इत्यर्थः। प्रतियोगिवैयधिकरण्यघटितलक्षस्यैवासंभवः। तेन व्याप्यवृत्तिसाध्यके अयमात्माज्ञानादित्यादौ अव्याप्त्यभावेपि न क्षतिः।

स्वं० हेतुसमानाधिकरणोऽभावः। वह्निमान् धूमादित्यत्र स्वपद्ग्राह्यघटाभावप्रतियोगित्वं संयोगसंबन्धावच्छिन्नं तादृशसंयोगसंबन्धेन घटानधिकरणत्वस्य पर्वतादौ सत्वाल्लक्षणसमन्वयः। स्वप्रतियोगिपदेन पूर्वक्षणवृत्तित्वविशिष्टघटाभावादिकं तु धर्त्तुं न शक्यं तस्य संयोगेनाधिकरणाप्रसिद्धेः। अत्र यादृशसंबन्धावच्छिन्नमित्यस्य साध्यतावच्छेदकसंबन्धावच्छिन्नमित्यर्थो बोध्यः। अन्यथा समवायेन वन्ह्यभावमादायाव्याप्तेः!

शंकते। **नचेति**। **एवमपि**। साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य प्रतियोगितायां निवेशेपि। **तदीयस्य**। घटाभावनिरूपितस्य। **न दोषसंगतिः**। नातिव्याप्तिः। **तत्प्रसिद्धेः**। स्वरूपसंबन्धावच्छिन्नप्रतियोगित्वप्रसिद्धेः। पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावेपि घटाभावनिरूपितस्वरूपसंबन्धावच्छिन्नप्रतियोगितासत्वात्।

ननु पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभाववान् पटत्वादित्यत्राव्याप्तिर्दुर्वारैव, हेतुसमानाधिकरणघटाभावप्रतियोगित्वस्य घटे इव

स्वावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणी-भूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वं यद्धर्मावच्छिन्न-

लक्ष्मीः

पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावेपि सत्वात्। तथा हि—स्वप्रतियोगित्वं यादृशसंबन्धावच्छिन्नं-घटाभावप्रतियोगित्वं संयोगसंबन्धावच्छिन्नं तादृशसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वस्य हेत्वधिकरणे सत्वेन तद्वृत्तिर्यः पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाभावः सोपि घटाभाव एव तदीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वात् इति चेन्न। प्रतियोगितयोरैक्यकरणेन तद्वारणात्। तथाहि—यत्किञ्चित्स्वीययादृशप्रतियोगित्वं यादृशसंबन्धावच्छिन्नं तादृशसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं हेत्वधिकरणं तद्वृत्तिसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावीय तादृशप्रतियोगितावच्छेदकत्वं साध्यतावच्छेदके विवक्षणीयम्।

अनुगमस्तु प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकेत्यादि। वै० स्वतादात्म्य-स्वावच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधिकरणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धे-त्वधिकरणवृत्तिसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभाव-निरूपितत्वोभयसं०। तथा च स्वीय यादृशप्रतियोगितापदेन संयोगसंबन्धावच्छिन्नघटनिष्ठप्रतियोगिताया धारणे तादृशप्रतियोगितापदेन तस्या एव धारणेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्वान्नोक्तदोषावसर इति।

अन्ये तु पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभाववान् पटत्वादित्यादौ साध्याभावस्य घटाभावात्मकस्य संयोगसंबन्धेन प्रतियोगिव्यधिकरणतया तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादव्याप्तिवारणाय हेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वान्न दोषः। साध्याभावस्वरूपानुयोगितायां हेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वाभावेन लक्षणाघटकत्वादित्याहुः।

प्रतियोगिताधर्मिकोभयाभावघटितकल्पाभिप्रायेणातिव्याप्तिमाह। स्वावच्छेदकेति। स्वं—प्रतियोगिता। इदम्। अतिव्याप्ति-

तृतीये कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः, साध्याभावानां कपिसंयोगानां गुणानामधिकरणस्यात्मनस्तत्प्रति

त्वोभयाभाव इत्यग्रिमलक्षणाभिप्रायेणेदं, संयोगेन घटाभावस्यैव प्रतियोगिवैयधिकरण्यसौलभ्यादित्यपि वदन्ति ।

तृतीयेऽव्याप्तिं दर्शयति । कपीति । प्राचां मते संयोगसामान्याभावसाध्यकमात्मत्वं विरुद्धमतः कपिसंयोगसामान्याभाव उक्तः । वृक्षादावुत्पत्तिकालावच्छेदेन गुणसामान्याभावसत्त्वाद् वृक्षत्वादिकं परित्यज्याऽऽत्मत्वं हेतुरुक्तः ।

यद्यपि वृक्षादेः स्वसमवेतकपिसंयोगात्मकाभावप्रतियोगिनः समवेतसामान्याभावस्य द्रव्यमात्रसमवेताभावस्य चानधिकरणत्वाद् वृक्षत्वादेरपि हेतुतायामव्याप्तिः संभवः, तथापि सत्ताद्रव्यत्वयोरेव समवेताभाव द्रव्यमात्रसमवेताभावयोरभावत्वम्, लाघवात्, न तु कपिसंयोगायात्मकसमवेतमात्रस्य तथात्वम्, गौरवादित्याशयः ।

लक्ष्मीः

दानम् । तथा च संयोगेन घटाभावीयप्रतियोगितायां स्वरूपसंबन्धावच्छिन्नत्व, द्रव्यत्वाभावत्वावच्छिन्नत्वोभयाभावसत्वेन घटाभावस्यैव प्रतियोगिवैयधिकरण्यसंभवादतिव्याप्तिरिति भावः ।

**तृतीये** । प्रतियोगितावच्छेदकं यत्किञ्चित्वेनोपादाय तदवच्छिन्नानधिकरणत्वस्य हेत्वधिकरणे निवेशे । तथा च द्रव्यत्वाभाववान् सत्वादित्यत्र द्रव्यत्वाभावत्वरूपयत्किञ्चित्प्रतियोगितावच्छेदकानधिकरणत्वं द्रव्ये इति नातिव्याप्तिः । **आत्मत्वं विरुद्धमिति** । द्रव्ये संयोगसामान्याभावे मानाभावादित्युक्तत्वादिति भावः । **गुणसामान्याभावसत्वादिति** । अनेन व्यापकाभावाद् व्याप्याभावः सूचित । तथा च साध्याभावो न प्रतियोगिव्यधिकरण इति भावः । ननु वृक्षत्वहेतावपि अव्याप्तिः संभवति । तथाहि कपिसंयोगाभावाभावस्य गुणत्वात् समवेतत्वाच्च तादृशाभावस्य प्रतियोगी गुणसामान्याभावसमवेतसामान्याभावश्चेति गुणसामान्याभावत्वरूप एवं समवेतसामान्याभावत्वरूपयत्किञ्चिद्रूपावच्छिन्नानधिकरणत्वस्य वृक्षे सत्त्वात्, कपिसंयोगात्मकसाध्याभावस्य प्रतियोगिव्यधिकरणत्वेन लक्षणघटकत्वादित्याशंकते । **यद्यपीति** । **स्वसमवेतेति** ।

योगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वात् ।

गुणसामान्याभावस्य संयोगस्वरूपाभावप्रतियोगित्वमाविष्कर्तुं गुणानामित्युक्तम्। तत्प्रतियोगितेति। कपिसंयोगीय प्रतियोगितावच्छेदकेत्यर्थः। न च गुणसामान्याभावस्याभावो द्रव्यत्वमेव, लाघवान्न तु गुणो गौरवात्, अतः संयोगप्रतियोगित्वं न गुणसामान्याभावस्येति वाच्यम्। घटादावुत्पत्तिदशायां गुणसामान्याभावस्यैव सत्वेन द्रव्यत्वस्य तदभावत्वासंभवादभावाभावस्यैव प्रतियोगित्वनियमाच्चेति भावः।

---

लक्ष्मीः

वृक्षसमवेतकपिसंयोगात्मकाभावस्य प्रतियोगिनः। अनधिकरणत्वादित्यस्य वृक्षादेरिति पूर्वेणान्वयः। **समाधत्ते। तथापीति। लाघवादिति।** सत्तादेरनुगतजातिरूपतया तेनैव समवेतसामान्याभावो नास्ति इत्यनुगतप्रतीत्युपपत्तौ तद्विषयस्य सकलसमवेतरूपत्वे मानाभाव इत्याशयः। एतेन समवेतसामान्याभावाभावादेः सकलसमवेतरूपत्वे गौरवेण लाघवात्सत्तादिरूपत्वे, गुणसामान्याभावाभावस्यापि सकलगुणरूपत्वे गौरवेण लाघवादेकत्वादिरूपत्वमेवोचितमित्यात्मत्वहेतुकेपि नाव्याप्तिरिति निरस्तम्। एकत्वादेरजातित्वेनाननुगतत्वात्। विनिगमनाविरहेण संयोगाद्यात्मकत्वस्यापि सुवचत्वाच्च। गुणसामान्याभावो नास्तीत्यनुगतप्रतीतेरनुगतोपस्थितगुणत्वावच्छिन्नविषयकत्वौचित्याच्च।

एवं च साध्याभावकपिसंयोगस्वरूपत्वं न सत्तारूपसमवेतसामान्याभावाभावस्य, द्रव्यत्वरूपद्रव्यमात्रसमवेताभावाभावस्य वेति न कपिसंयोगसाध्याभावप्रतियोगित्वं समवेताभावस्य किन्तु गुणाभावे एव कपिसंयोगात्मकसाध्याभावस्य प्रतियोगित्वं तदधिकरणत्वस्योत्पत्तिकालावच्छेदेन वृक्षादौ सत्त्वात्साध्याभावो न लक्षणघटक अतो वृक्षत्वं परित्यज्यात्मत्वं हेतुरभिहितम्।

ननु वन्ह्यभावप्रतियोगितावच्छेदकत्वस्य वन्हित्वे इव वन्ह्यभावघटत्वाभावान्यतराभावत्वेपि सत्वात् तादृशान्यतराभावत्वावच्छिन्नाधिकरणत्वस्य च वन्हिमद्घटादौ प्रसिद्धत्वेन तादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वस्य पर्वतादौ सत्वेन वन्हिमान् धूमा-

**मैवम्, यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्योक्तत्वात् ।**

---

यादृशेति । तथा च गुणसामान्याभावनिष्ठप्रतियोगिताया यदवच्छेदकं गुणसामान्याभावत्वं हेतुमतस्तदवच्छिन्नानधिकरणत्वेपि कपिसंयोगाभावत्वस्य तादृशप्रतियोगितानवच्छेदकत्वात्तादृरूप्येण साध्यतायामात्मत्वहेतौ नाव्याप्तिः ।

---

लक्ष्मीः

दित्यत्रैवाव्याप्तिसंभवे स्थलान्तरानुधावनं किमर्थमिति चेन्न । तृतीयकल्पे प्रतियोगिवैयधिकरण्यं साध्यतावच्छेदकसंबन्धेन बोध्यम्, एवं च साध्यतावच्छेदकसंबन्धेन तादृशान्यतराभावत्वावच्छिन्नाधिकरणत्वप्रतिद्धेस्तत्परित्यक्तम् ।

**दीधितौ । यादृशेति** । यादृशत्वं प्रतियोगिताविशेषणम् । अवच्छेदकविशेषणत्वे यादृशावच्छेदकविशिष्टस्यानधिकरणं हेत्वधिकरणं तादृशावच्छेदकभिन्नं यत्साध्यतावच्छेदकमित्यस्यैव सम्यक्त्वे प्रतियोगितापदवैयर्थ्यं स्यात् ।

अनुगमस्तु प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकमित्यादि । वै० स्वतादात्म्य-स्वविशिष्टहेत्वधिकरणवृत्त्यभावीवत्वोभयसं० । स्ववै० स्वावच्छेदकावच्छिन्नाधिकरणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसं० ।

प्रकारविधया निवेशश्च हेत्वधिकरणवृत्तिर्यः प्रतियोगितात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितावच्छेदकता - निष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनि - ष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपिताधिकरणत्वनिष्ठावच्छेदकतानिरूपकप्रतियोगिताको भेदः तादृशभेदीय प्रतियोगितानिरूपिताधिकरणत्वनिष्टावच्छेदकतानिरूपितनिरूपकत्वनिष्ठाव - च्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेकतानिरूपितधर्मनिष्ठावच्छेदकतानिरूपितावच्छेदत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्प्रति - योगितानवच्छेदकमित्यादि । भेदश्च यादृशप्रतियोगितानिरूपितावच्छेदकतावद्धर्मनिष्ठावच्छेदकतानिरूपितनिरूकताकाधिकरणतावान्नेति प्रतीतिसिद्धो ग्राह्यः ।

द्रव्यत्वाभाववान् सत्त्वादित्यादौ तु द्रव्यत्वाभावत्वावच्छिन्नानधिकरणं यद्धेतुमन्निष्ठाभावस्य तादृशप्रतियोगितावच्छेदकमेव द्रव्यत्वाभावत्वमतो नातिव्याप्तिरिति भावः।

न च वह्निमान् तत्पर्वतत्वादित्यादौ तत्तद्वह्निसंयोगसंबन्धेन साध्यतायामव्याप्तिः, तत्संबन्धावच्छिन्नघटाद्यभावप्रतियोगिनस्तेन संबन्धेनाधिकरणाप्रसिद्धेरिति वाच्यम्।

---

लक्ष्मीः

कपिसंयोगाभाववानात्मत्वादित्यत्राव्याप्तिं वारयति। **तथा चेति।** **हेतुमतः।** आत्मनः। **तदवच्छिन्नानधिकरणत्वेपि।** गुणसामान्याभावत्वावच्छिन्नानधिकरणत्वेपि। **तादृशप्रतियोगितानवच्छेदकत्वात्।** गुणसामान्याभावत्वावच्छिन्नप्रतियोगितानवच्छेदकत्वात्। **तद्रूपेण।** कपिसंयोगाभावत्वरूपेण। कपिसंयोगाभावाधिकरणताया आत्मनि सत्वात्, यादृशप्रतियोगितापदेन कपिसंयोगाभावनिष्ठप्रतियोगिताया धर्तुमशक्यतया गुणसामान्याभावनिष्ठप्रतियोगिताया धर्तुं शक्यत्वेपि तादृशप्रतियोगितावच्छेदकं गुणसामान्याभावत्वमेव न तु कपिसंयोगाभावत्वमतो नाव्याप्तिरित्यर्थः।

द्रव्यत्वाभाववान् सत्वादित्यत्रातिव्याप्तिमुद्धरति। **द्रव्यत्वाभाववानिति।** **यद्धेतुमद्।** द्रव्यं। **तन्निष्ठाभावस्य।** द्रव्यनिष्ठाभावस्य। द्रव्यत्वाभावाभावस्य। **नातिव्याप्तिरिति।** नित्यवृत्तित्वाभावाधिकरणताया द्रव्ये सत्वात् यादृशप्रतियोगितापदेन द्रव्यत्वाभावनिष्ठप्रतियोगिताया धर्तुं शक्यतया तादृशप्रतियोगितावच्छेदकत्वस्य द्रव्यत्वाभावत्वे सत्वादिति भावः। कपिसंयोगी एतद्वृक्षत्वादित्यत्रापि कपिसंयोगत्वावच्छिन्नाधिकरणताया एतद्वृक्षे सत्वात्तादृशप्रतियोगितापदेन कपिसंयोगनिष्ठप्रतियोगिताया धर्तुमशक्यतया घटत्वावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य कपिसंयोगत्वे सत्वात्प्रथमकल्पोक्ताऽव्याप्तिरपि नास्तीति ध्येयम्।

साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यनिवेशाभिप्रायेण शंकते। **न चेति।** **तत्तद्वन्हिसंयोगसंबन्धेन।** तत्तद्वन्हिप्रतियोगिकसंयोगसंबन्धेन। **तत्संबन्धावच्छिन्नेति।** तत्तद्वन्हिप्रतियोगिकसंयोगसं-

यत्प्रतियोगितावच्छेदकसंबन्धावच्छिन्नाधिकरणतानिरूपितस्वरूपसंबन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववत्त्वं हेतुमतस्तेन संबन्धेन तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात्। घटत्वावच्छिन्नाधिकरणतासामान्यस्यैव तत्तद्वह्निनिरूपितसंयोगसंबन्धावच्छिन्नाधिकरणतानिरूपितस्वरूपसंबन्धेनाभावस्य हेतुमति सत्त्वेन तादृशसंबन्धेन घटाभावस्यैव प्रतियोगिव्यधिकरणत्वासंभवात्। तादृशाभाववत्त्वं च हेतुमतो निरवच्छिन्नविशेषणतयैव वाच्यमतः कपिसंयोगाधिकरणत्वाभावस्य वृक्षवृत्तित्वेपि तत्साध्यके एतद्वृक्षत्वादिहेतौ नाव्याप्तिः।

अत्र च प्रतियोगितावच्छेदकावच्छिन्नत्वं साध्यतावच्छेदकताघटकसंबन्धेनैव ग्राह्यम्, तेनाऽयःपिण्डस्यापि कालिकादिसंबन्धेन यद्धूमत्वविशिष्टतृणादिकं

लक्ष्मीः

बन्धावच्छिन्नप्रतियोगिताकेत्यर्थः। **घटाद्यभावप्रतियोगिनः**। घटस्य। **तेन संबन्धेन**। तत्तद्वह्निप्रतियोगिकसंयोगसंबन्धेन। **यत्प्रतियोगितावच्छेदकसंबन्धावच्छिन्नाधिकरणतानिरूपितस्वरूपसंबन्धेन**। साध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणताप्रतियोगिकस्वरूपसंबन्धेन। प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाभावश्च स्वरूपसंबन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। अन्यथा कालिकेन सर्वस्यैव हेतुमतः प्रतियोग्यधिकरणतावत्त्वात्प्रतियोग्यनधिकरणहेत्वधिकरणाप्रसिद्धेः। एवं च तादृशस्वरूपसंबन्धे तादृशाधिकरणताप्रतियोगिकत्वं निवेशनीयमिति भावः।

अत्र प्रतियोगितावच्छेदककोटौ अधिकरणतात्वप्रवेशो व्यर्थः। तादृशाधिकरणताप्रतियोगिकस्वरूपसंबन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतानिरूपितसामान्याभाववत्त्वं हेतुमत इत्यस्यैव सम्यक्त्वादिति विभावनीयम्। **तादृशाभाववत्त्वं चेति**। प्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणत्वाभाववत्ता चेत्यर्थः। **अतः**। तादृशनिवेशात्। **वृक्षवृत्तित्वेपीति**। अव्याप्यवृत्तेरधिकरणतापि अव्याप्यवृत्तिरिति भावः। **अत्र**। प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यत्र। **तेन**। अस्य नातिव्याप्तिरित्यनेनान्वयः। कालिकादिसंबन्धेन यद्धूमत्वविशिष्टं तृणादिकमपीति। ननु येन केनचित्संबन्धेन प्रतियोगितावच्छेदकविशिष्टो यः तदधिकरणतायाः सर्वत्रै-

संयोगेन तस्याधिकरणत्वेपि धूमवान् वन्हेरित्यादौ नातिव्याप्तिः।

प्रतियोगितावच्छेदकताघटकसबन्धेन तदवच्छिन्नत्वनिवेशे तु प्रतियोगितानवच्छेदकत्वमित्यत्रावच्छेदकत्वं साध्यतावच्छेदकताघटकसंबन्धेनैव ग्राह्यम्। अन्यथा विषयितासम्बन्धेन रूपत्वावच्छिन्नस्य ज्ञानादेः पृथिव्यादौ समवायेनाभावस्य सत्वाद्रूपवान् पृथिवीत्वादित्यादावव्याप्तिप्रसंगात्।

---

लक्ष्मीः

च सत्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तिसंभवेऽतिव्याप्त्यनुधावनमनुचितमिति चेन्न। स्ववृत्तिवाच्यत्वादिपरंपरायाः संबन्धत्वानंगीकारपक्षे तत्पर्वतसंयुक्तासमानकालीनघटादिव्यक्त्यभावस्य लक्षणघटकत्वेनाऽव्याप्तिविरहात्।

न च तथापि प्रतियोगिव्यधिकरणाभावाप्रसिध्यैव नातिव्याप्तिरिति वाच्यम्। तदयोगोलकसंयुक्तासमानकालीनव्यक्त्यभावस्यैव प्रतियोगिव्यधिकरणसंभवादिति ध्येयम्। **नातिव्याप्तिरिति**। साध्यतावच्छेदकताघटकसमवायसंबन्धेन प्रतियोगितावच्छेदकीभूतधूमत्वविशिष्टस्य धूमस्यानधिकरणताया अयोगोलके सत्वेन धूमाभावस्य लक्षणघटकत्वात्।

**तदवच्छिन्नत्वनिवेशे तु इति**। प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशे तु इत्यर्थः। अतिव्याप्त्यभावेपीति शेषः। प्रतियोगितावच्छेकीभूतसमवायेन धूमत्वविशिष्टाभावस्यायोगोलके प्रतियोगिव्यधिकरणत्वेन धूमाभावस्य लक्षणघटकत्वात्। **इत्यत्रावच्छेदकत्वम्**। अनवच्छेदकत्वघटकीभूतावच्छेदकत्वम्। **अन्यथा**। प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वानिवेशे। प्रतियोगितावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वाभिधाने वा इत्यर्थः। **अव्याप्तिप्रसंगादिति**। प्रतियोगितावच्छेदकताघटकविषयितासंबन्धेन रूपत्वविशिष्टज्ञानस्य समवायेनानधिकरणं पृथिव्यादि तद्वृत्त्यभावीय तादृशप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादव्याप्तिप्रसंगादित्यर्थः। तन्निवेशे च रूपत्वनिष्ठप्रतियोगितावच्छेदकता न साध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्ना किन्तु विषयितासंबन्धावच्छिन्ना, घटत्वादिनिष्ठाया अवच्छेदकताया स्तथात्वेपि तादृशावच्छेदकत्वाभावस्य साध्यतावच्छेदके रूपत्वे सत्वा-

वस्तुतः साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नं यत्प्रतियोगितावच्छेदकत्वं तन्निरूपितस्वरूपसंबन्धेनैव निरुक्तप्रतियोगितावच्छेदकत्वस्याभावः साध्यतावच्छेदकधर्मे वक्तव्यः, तेन वह्निमान् धूमादित्यादौ यत्र वह्नित्वादिनिरूपितसमवायादिसंबन्धेन वह्नित्वादेः साध्यतावच्छेदकत्वं तत्र तादृशसंबन्धावच्छिन्नस्य प्रतियोगिव्यधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वस्याप्रसिद्धावपि न क्षतिरिति ध्येयम्।

---

लक्ष्मीः

न्नाव्याप्तिः। परन्तु साध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वोक्तौ लाघवम्।

प्रतियोगितावच्छेदकावच्छिन्नत्वं प्रतियोगितावच्छेदकताघटकसंबन्धेनैव वक्तव्यम्, प्रतियोगितावच्छेदकता च न साध्यतावच्छेदकताघटकसंबन्धावच्छिन्ना ग्राह्या, अपि तु तादृशप्रतियोगितावच्छेदकत्वाभावः साध्यतावच्छेदके, साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताको बोध्यः। तावतैव रूपवान् पृथिवीत्वादित्यत्र नाव्याप्तिः, विषयितासंबन्धावच्छिन्ना रूपत्वविशिष्टाभावीया या रूपत्वनिष्ठावच्छेदकता 'सा विषयितासंबन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपेण रूपत्वे' वर्त्तते' साध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपेण तदभावस्य तत्रैव साध्यतावच्छेदके रूपत्वे सत्वात्—समवायसंबन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसंबन्धस्य विषयित्वसंबन्धावच्छिन्नावच्छेदकताया व्यधिकरणसंबन्धतया तेन संबन्धेन तदभावस्य केवलान्वयित्वात्।

तदेवाह। वस्तुत इत्यादिना। तन्निरूपितस्वरूपसंबन्धेनैवेति। तत्प्रतियोगिकस्वरूपसंबन्धेनैवेत्यर्थः। पूर्वकल्पेऽस्वरसमाह। तेन। वस्तुत इति कल्पादरेण। वन्हित्वादिनिरूपितसमवायादिसंबन्धेन। वन्हित्वप्रतियोगिकसमवायसंबन्धेन। तादृशसंबन्धावच्छिन्नस्य। वन्हित्वप्रतियोगिकसमवायसंबन्धावच्छिन्नस्य। अप्रसिद्धावपीति। धूमाधिकरणवृत्तिघटाभावप्रतियोगितायां घटत्वनिष्ठायां साध्यतावच्छेदकताघटकवन्हित्वप्रतियोगिकसमवायसंबन्धावच्छिन्नत्वाभावेन तत्संबन्धावच्छिन्नहेत्वधिकरणवृत्त्यभावप्रतिवच्छेदकताया अप्रसिद्धा-

लक्ष्मीः

वपीत्यर्थः। **न क्षतिः**। नाव्याप्तिः। समवायेन घटत्वविशिष्टस्य संयोगेन योऽभावस्तस्य लक्षणघटकतया तदीयसमवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताया वन्हित्वप्रतियोगिकसमवायसंबन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपेणाभावस्य साध्यतावच्छेदके वन्हित्वे सत्वान्नाव्याप्तिरिति भावः।

अत्रेदं बोध्यम्। तादृशप्रतियोगितावच्छेदकत्वाभावोऽवश्यं स्वरूपसंबन्धावच्छिन्नप्रतियोगिताको बोध्यः। अन्यथा तादृशघटाभावीय प्रतियोगितावच्छेदकतायाः कालिकादिना वह्नित्वे सत्वादव्याप्तिप्रसंगात्। एवं स्वरूपे साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताप्रतियोगिकत्वमपि निवेशनीयमिति भावः। तथा च तत्संबन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसंबन्धस्य घटत्वादिनिष्ठप्रतियोगितावच्छेदकतायाः व्यधिकरणसंबन्धतया तेन संबन्धेन प्रतियोगितावच्छेदकत्वाभावः केवलान्वयीति नाव्याप्तिरिति भावः।

नन्वत्र घटाभावीय प्रतियोगितावच्छेदकतायामेव साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वप्रसिद्धिः, वन्हित्वप्रतियोगिकसमवायस्य शुद्धसमवायानतिरेकादिति चेन्न। वन्हित्वप्रतियोगिकसमवायेन वन्हित्वविशिष्टस्य विषयितया साध्यतायां तद्ज्ञानशुद्धसमवायेन वन्हित्वविशिष्टविषयकज्ञानान्यतरत्वहेतौ हेतुसमानाधिकरणस्यापि साध्याभावस्य शुद्धसमवायेन वन्हित्वविशिष्ट "प्रतियोगि" समानाधिकरणतया लक्षणाघटकत्वादतिव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वपर्यन्तेन साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तियत्प्रतियोगितावच्छेदकनिष्ठनिरूपकतावच्छेदकत्वं तादृशावच्छेदकताकत्वं विवक्षणीयम्। रूपवृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व सं०। अत्र तादृशरूपवृत्तियत्प्रतियोगितावच्छेदकत्वमित्युक्तौ तद्दोषतादवस्थ्यादिति ध्येयम्।

एवं वन्हित्वप्रतियोगिकसमवायेन वन्हित्वविशिष्टस्य विषयितया साध्यतायां तद्ज्ञानत्वहेतौ हेतुसमानाधिकरणशुद्धसमवायेन वन्हित्वविशिष्टाभावमादाय तत्प्रतियोगितावच्छेदकताया अपि साध्यतावच्छेद-

अत्र यादृशप्रतियोगितावच्छेदके धर्मे तादृशप्रतियोगिताश्रयाधिकरणीभूतयद्यद्व्यक्ति निष्ठाधिकरणतानवच्छेदकत्वस्य अधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकस्तत्त-

## लक्ष्मीः

कताघटकसंबन्धावच्छिन्नत्वाद्व्याप्तिवारणाय साध्यतावच्छेदकताघटकसंसर्गतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूप - वृत्ति यदवच्छेदकत्वं तदेव साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वपदेन विवक्षणीम्। वृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसं०। एवं च वन्हित्वप्रतियोगिकसमवायेन वन्हित्वविशिष्टस्य संयोगेन साध्यतायामप्रसिद्धिरिति भावः।

अथैवं हेतुसमानाधिकरणाभावप्रतियोगितानिरूपिताभाववत्साध्यतावच्छेदकमित्येवास्तु किमवच्छेदकतात्वेनावच्छेदकतानिवेशेनेति चेन्न। प्रतियोगितावान्नास्तीत्यभावप्रतियोगितावच्छेदकतावतः साध्यत्वे घटत्वहेतौ हेतुमन्निष्ठाभावप्रतियोगितानिरूपितवृत्तितायास्तादृशसाध्यतावच्छेदके सत्वाद्व्याप्त्यापत्तेः। न च तादृशप्रतियोगितानिरूपितावच्छेदकत्वीयस्वरूपसंबन्धेन तत्प्रतियोगितानिरूपितवृत्तित्वाभावस्य साध्यतावच्छेदके सत्वान्नाव्याप्तिरिति वाच्यम्। आधेयताया आधेयस्वरूपतया तादृशप्रतियोगितानिरूपितप्रतियोगितात्वनिष्ठावच्छेदकतास्वरूपविषयतायास्तादृशावच्छेदकताप्रतियोगिकस्वरूपसंबन्धेन साध्यतावच्छेदके सत्वादिति ध्येयम्।

ननु यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणमित्यत्र यादृशप्रतियोगितावच्छेदकपदेन धूमत्वं गृहीतुं न शक्यते अखण्डधूमत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेः, तथा च धूमवान् वह्नेरित्यत्रातिव्याप्तिः, यादृशप्रतियोगितापदेन धूमसामान्याभावीय धूमत्वावच्छिन्नप्रतियोगिताया गृहीतुमशक्यत्वादत आह। अत्रेति। यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणमित्यादिकल्पे इत्यर्थः। तत्तद्व्यक्तिभेदकूटवत्त्वमेवेति। एव कारेण यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभावस्य व्यवच्छेदः।

तथा च यादृशप्रतियोगितावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयद्यद्व्यक्तिनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्व—सामान्यतोऽ-

द्व्यक्तिभेदकूटवत्त्वमेव याद्दशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यस्यार्थो बोध्यः। तेन धूमवानित्यादिप्रतीतेश्चाश्यक्लृप्ताभिः पर्वतत्व चत्वरत्वादि तत्तद्धर्मविशिष्टतत्तद्धूमत्वावच्छिन्नाधिकरणताव्यक्तिभिरेवोपपत्तौ धूमत्वाद्यखण्डधर्मावच्छिन्नाधिकरणतायां मानाभावाद्, धूमादिसामान्याभावप्रतियोगितावच्छेदकं यद्धूमत्वादिकं तदवच्छिन्नाधिकरणत्वाप्रसिद्धावपि धूमवान् वन्हेरित्यादौ नातिव्याप्तिः, धूमाधिकरणतत्तद्व्यक्तिभेदकूटवत्त्वमादायैव धूमसामान्याभावस्य प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यसंभवादिति ध्येयम्।

---

लक्ष्मीः

धिकरणतानिरूपितनिरूपकतावच्छेदकत्वोभयाभावस्तत्तद्व्यक्तिभेदकूटवान्, याद्दशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणपदेन बोध्य इत्यर्थः। स्वं—याद्दशप्रतियोगितावच्छेदको धर्मः। धूमवान् वह्नेरित्यत्र धूमाभावप्रतियोगितावच्छेदके धूमत्वे धूमत्वाश्रयाधिकरणीभूत धूमवत्पर्वतादिव्यक्तिनिष्ठाधिकरणतानिरूपितनिरूपिकतानवच्छेदकत्वसत्वेपि सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वविरहेणोभयाभावसत्वात्ताद्दशपर्वतादिव्यक्तिभेदकूटवान् हेत्वधिकरणं चायोगोलक एव प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणेत्यनेन विवक्षितः।

वह्निमान् धूमादित्यादिसद्धेतुस्थले याद्दशप्रतियोगितावच्छेदके घटत्वे स्वाश्रयाधिकरणतत्तद्भूतलव्यक्तिनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वसत्वेपि सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वविरहेणोभयाभावसत्त्वात्ताद्दशभूतलादिव्यक्तिभेदकूटवान् अथ च हेत्वधिकरणं पर्वतादिरेव प्रतियोगितावच्छेदकावच्छिन्नानधिकरणपदेन बोध्यः।

**ताद्दशेति**। हेतुसमानाधिकरणाभावीयेत्यर्थः। **भेदकूटवत्त्वमिति**। तेन वह्निमान् धूमादित्यादौ वन्ह्यधिकरणयत्किञ्चिद्व्यक्तिभेदमादाय नाव्याप्तिरिति भावः। **तेनेति**। अस्य नातिव्याप्तिरित्यनेनाऽन्वयः। धूमवान् वन्हेरित्यादौ ताद्दशप्रतियोगिताश्रयाधिकरणं धूमाधिकरणमात्रं, धूमत्वादौ तन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वसत्वेपि अधिकरणतानिरूपितनिरूपकतावच्छेदकविरहेणोभयाभावसत्वात्, विशिष्टसत्तावान् जातेरित्यादौ च ताद्दशप्रतियोगिताश्रया-

लक्ष्मीः

धिकरणं द्रव्यमेव, न तु गुणादि, विशिष्टसत्तात्वे गुणनिष्ठाधिकरणता-निरूपितनिरूपकतानवच्छेदकत्व-सामान्यतो द्रव्यनिष्ठाधिकरणता-निरूपितनिरूपकतावच्छेदकत्वोभयोः सत्वात्। तादृशप्रतियोगिता-श्रयाधिकरणपदेन द्रव्याभिधाने द्रव्यनिष्ठाधिकरण।ानिरूपितनिरूप-कतानवच्छेदकत्वविरहेणोभयाभावसत्त्वाद्द्रव्यव्यक्तिभेदकूटवत्वमादाय गुणादौ विशिष्टसत्ताभावस्य प्रतियोगिव्यधिकरणत्वादिति। कुतो ना-तिव्याप्तिरित्याकांक्षायामाह। **धूमाधिकरणेत्यादि।**

अत्र यद्यद्व्यक्तिपदेनाऽयोगोलकादेरपि धर्तुं शक्यतया तस्यापि उक्तपारिभाषिकप्रतियोग्यधिकरणत्वेनाऽतिव्याप्तिः स्यादतः प्रतियो-गिताश्रयाधिकरणीभूतेति।

अथात्र प्रतियोगिताश्रयाधिकरणत्वमवश्यं साध्यतावच्छेदकसंब-न्धेन ग्राह्यम्। अन्यथा धूमवान् वह्नेरित्यादौ कालिकादिसंबन्धेन प्रतियोगिताश्रयाधिकरणत्वमादाय धूमाभावस्य निरुक्तप्रतियोगिवैय-धिकरण्यासंभवेन निरुक्तप्रतियोगिव्यधिकरणहेत्वधिकरणतत्तदयो-गोलकासमानकालीनवस्त्वभावप्रतियोगितानवच्छेदकत्वस्य साध्यता-वच्छेदके सत्वादतिव्याप्तिः स्यात्। तथा च वह्निमान् धूमादित्यादौ तद्वन्हिप्रतियोगिकसंयोगसंबन्धेन साध्यतायामव्याप्तिः, साध्यतावच्छे-दकसंबन्धावच्छिन्नप्रतियोगिताश्रयाधिकरणत्वघटितनिरुक्तप्रतियोगिवै-यधिकरण्याप्रसिद्धेः। प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिश्रयाधि-करणत्वनिवेशे तु प्रतियोगिता साध्यतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या। अन्यथा समवायेन वन्ह्यभावमादाय वह्निमान् धूमादित्या-दावव्याप्तिप्रसंगात्। तथा चोक्ताव्याप्तिर्दुर्वारैव। न च साध्यता-वच्छेदकसंबन्धावच्छिन्नत्वपदेन साध्यतावच्छेदकसंबन्धावच्छिन्नत्व-साध्यतावच्छेदकावच्छिन्नत्वोभयाभाववत्वं विवक्षणीयम् तथा च संयोगेन घटाभावप्रतियोगितायां वह्नित्वावच्छिन्नत्वविरहादेव प्रति-योगितायामुभयाभावसत्वात्तादृशाभावमादायोक्तस्थले लक्षणसमन्वय इति वाच्यम्। प्रमेयविशिष्टस्य पर्वतानुयोगिकसंयोगेन साध्यतायां तद्धूमादिहेतौ तादृशोभयाभाववत्प्रतियोगिताकप्रतियोगिव्यधिकरण-हेतुसमानाधिकरणाभावाप्रसिद्धेः, साध्यतावच्छेदकावच्छिन्नत्वपदेन साध्यतावच्छेदकताव्यापकावच्छेदकतानिरूपितत्वविवक्षया उक्तस्थले

लक्ष्मीः

घटाद्यभावप्रतियोगितायां प्रमेयनिष्ठावच्छेदकतानिरूपितत्वसत्वेपि साध्यतावच्छेदकताव्यापकत्वविरहादेव निरुक्तोभयाभावसत्वेनाव्याप्तिवारणेपि साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यघटितलक्षणस्य तत्राव्याप्तिर्दुर्वारैवेति चेन्न। एतत्कल्पे कालो घटवान् महाकालत्वादित्यादाविव तत्र तत्राव्याप्तिसत्वेपि क्षत्यभावादिति ध्येयम्।

केचित्तु हेत्वधिकरणवृत्तित्व, साध्यतावच्छेदकसंबन्धानवच्छिन्नत्वोभयाभाववत्वं यादृशप्रतियोगिताश्रयाधिकरणत्वे निवेशनीयम्। न तु साध्यतावच्छेदकसंबन्धेन यादृशप्रतियोगिताश्रयाधिकरणत्वं निवेशनीयम्, एवं च न काप्यनुपपत्तिरित्याहुः।

अन्ये तु प्रतियोगितावच्छेदकसंबन्धेनैव तादृशाधिकरणत्वस्य निवेशः। न तु प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्यापि निवेश इति। न च समवायेन वन्ह्यभावमादाय वन्हिमान् धूमादित्यादावव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वीय स्वरूपसंबन्धेन तादृशावच्छेदकत्वाभावस्य साध्यतावच्छेदके विवक्षितत्वात्। न च कालो घटवान् महाकालत्वादित्यादावव्याप्तिसंपादकनन्वित्यादिग्रन्थानुत्थानापत्तिः, एतादृशरीत्यैव तत्र परिष्कारसंभवादिति वाच्यम्। भट्टाचार्याणां तत्र "प्रकृतसाध्यीयसाध्यतावच्छेदकसंबन्धे" इत्यादिना कटाक्षकरणवत् एतद्दोषस्यापि कटाक्षान्तर्गतत्वे क्षत्यभावादिति वदन्ति।

न च विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताभावप्रतियोगितावच्छेदकीभूतसतात्वे स्वाश्रयाधिकरणगुणव्यक्तिनिष्ठाधिकरणतानवच्छेदकत्वसत्वेपि सामान्यतोऽधिकरणतावच्छेदकत्वविरहेणोभयाभावसत्वात्तद्व्यक्तिकूटवद्द्रव्ये साध्याभावस्य लक्षणाघटकत्वे नाभावान्तरमादायाऽतिव्याप्तिवारणाय स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्यद्यद्व्यक्तिनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य च द्वयोर्व्यतिरेकस्तथाविधस्वाश्रयाश्रयवत्तत्तद्व्यक्तिभेदकूटवान् यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणमित्यस्यार्थः।

नन्वत्र प्रतियोगित्वं नातिरिक्तः पदार्थः, प्रतियोगित्वादिकन्तु स्वरूपसंबन्धविशेष इत्याद्युतरग्रन्थविरोधात्, किंतु स्वरूपसंबन्धविशेषः, स च यदि प्रतियोगिस्वरूपस्तदा वन्हिमान् धूमादित्यादौ सर्वत्राऽसंभवः, पटादिस्वरूपस्यैव पटाद्यभावप्रतियोगित्वस्य पटत्वावच्छिन्नत्ववत्, द्रव्यत्व, समवेतत्व, ज्ञेयत्वावच्छिन्नतया तादृशावच्छेदकीभूतज्ञेयत्वावच्छिन्नस्य हेतुमति सत्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः।

---

लक्ष्मीः

अस्यानुगमस्तु यादृशप्रतियोगित्वाभाववद्धेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकेत्यादि। प्रतियोगित्वाभाववत्वं च स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वसंबन्धेन। हेत्वधिकरणे रूपवृत्तित्वं च स्वनिष्ठाधिकरणतानिरूपितयत्किञ्चित्संबन्धावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्व – स्वकालीनाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसं०। घटत्वावच्छिन्नप्रतियोगित्वाभावमादाय लक्षणसमन्वयः।

ननु घटत्वपटत्वोभयवान् द्रव्यत्वादित्यादौ साध्याभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरत्वाप्रसिद्धेरिति चेन्न। साध्यतावच्छेदके प्रमीयप्रकारतावच्छेदकत्वेनापि निवेशनीयत्वात्।

**नातिरिक्तः पदार्थ इति**। प्रतियोगित्वं पदार्थविभाजकधर्मावच्छिन्नप्रतियोगिताकभेदकूटाभाववदित्यर्थः। नातोऽतिरिक्तपदार्थत्वाभावसाधने सिद्ध्यसिद्धिभ्यां व्याघातः।

**तादृशावच्छेदकीभूतेति**। पटाभावीय प्रतियोगितायाः द्रव्यस्वरूपायाः, समवेतस्वरूपायाः, ज्ञेयस्वरूपायाश्च तस्याः यदवच्छेदकं पटत्ववत्, द्रव्यत्वं समवेतत्वं ज्ञेयत्वमपि तथा। **तदवच्छिन्नस्येत्यर्थः**। **हेतुमति**। पर्वते। **प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरिति**। एवं च प्रतियोगित्वं न प्रतियोगिस्वरूपमिति भावः।

न च विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणाय प्रति-

लक्ष्मीः

योगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यस्य स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणत्वाभाववदित्यर्थो बोध्यः। एवं च तादृशपटत्वघटिततादृशसमुदायत्वावच्छिन्ननिरूपकताकाधिकरणत्वाभावस्य पर्वतादौ सत्वात्कथमसंभव इति चेन्न। पटगगनोभयाभावप्रतियोगितायाः पटस्वरूपतया उभयत्वमपि तत्प्रतियोगितावच्छेदकम्, तथा चोभयत्वघटितसमुदायत्वावच्छिन्नाधिकरणत्वाप्रसिद्ध्याऽसंभवतादवस्थ्यात्।

न च सामान्यधर्मावच्छिन्नाधिकरणत्वाऽस्वीकर्तृमते यादृशप्रतियोगितावच्छेदकधर्मे उक्तोभयाभावः तत्तद्व्यक्तिभेदकूटवद्धेत्वधिकरणवृत्त्यभावस्य प्रतियोगिव्यधिकरणाभावपदेन विवक्षणीयतया नोक्ताऽसंभवः, तादृश प्रतियोगितापदेन हेतुमन्निष्ठाभावीय तत्तत्प्रतियोगित्वस्य धर्तव्यतया घटस्वरूपं यत्प्रतियोगित्वं तदाश्रयाधिकरणीभूतं यद्भूतलादिकं तत्तद्भेदकूटस्य हेतुमति सत्वादिति वाच्यम्। एवं सति वन्हिमान् धूमादित्यादावव्याप्तिः, वन्ह्यभावस्य निरुक्तप्रतियोगिव्यधिकरणत्वात्। तादृशाभावीय महानसीयवन्ह्यादिस्वरूपं यत्प्रतियोगित्वं तदाश्रयाधिकरणं यद्यत्तदन्यत्वस्य हेतुमति सत्त्वात्, अतस्तद्वारणाय स्वनिरुपकाभावीय प्रतियोगितासंबन्धेन प्रतियोगिताश्रयत्वं विवक्षणीयम्, तथा च वन्हिसामान्याभावप्रतियोगित्वस्य निखिलवन्हिस्वरूपत्वे उक्तसंबन्धेन तदाश्रयत्वस्य निखिलवन्हौ सत्वेन। तदधिकरणीभूततत्तद्व्यक्तिभेदकूटस्य हेत्वधिकरणेऽसत्वात्, एवं चाऽसंभवस्य नासंगतिरिति ध्येयम्।

न च तथापि प्रतियोगितासंबन्धेन वन्हिसाध्यकतदभावत्वहेतौ लक्षणगमनात्कथमसंभवः। प्रतियोगितासंबन्धेन घटाभावस्य प्रतियोगिव्यधिकरणत्वादिति वाच्यम्। प्रतियोगितासंबन्धेन घटाभावीय घटस्वरूपप्रतियोगित्वस्य जातिमदभावीय प्रतियोगित्वरूपतया तत्प्रतियोगितावच्छेदकीभूतजात्यन्तर्गतवन्हित्वावच्छिन्नाधिकरणताया हेतुमति सत्वात्प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः। अथ वा प्रतियोगित्वादेः संसर्गत्वास्वीकारमतेऽसंभव उक्तः।

न च तथापि विषयितया घटस्य साध्यतायां घटज्ञानत्वादिहेतौ

नच प्रतियोगितावच्छेदकरूपमेव प्रतियोगित्वमित्यदोषः, समवायेन वह्नेः साध्यत्वे धूमादौ अतिव्याप्तिप्रसंगात्, समवायावच्छिन्नवह्न्यभावस्य वह्नित्वस्वरूपं-यत्प्रतियोगित्वं-समवायवत् संयोगस्याऽपि तदवच्छेदक-सम्बन्धतया-स्वावच्छेदकीभूत-तादृशसम्बन्धेन साधनवतः प्रतियोग्यनधिकरणत्वाभावात्।

---

लक्ष्मीः

पटाभावस्यैन प्रतियोगिव्यधिकरणत्वेन तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वेन कथमसंभव इति वाच्यम्। कालिकेन घटत्वविशिष्टाभावप्रतियोगित्वस्य पटादिसाधारणतया पटाद्यभावप्रतियोगित्वं यत्पटस्वरूपं तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्वेन तत्र लक्षणाऽगमनात्। यद्वा विषयित्वादेः संसर्गत्वे मानाभावादिति।

शंकते। **न चेति**। अस्याऽदोष इत्यनेनाऽन्वयः। तथा च प्रतियोगित्वं प्रतियोगितावच्छेदकस्वरूपमेव वक्तव्यम्, तथा च नाऽसंभवः, घटाद्यभावप्रतियोगित्वस्य घटत्वस्वरूपस्य यदवच्छेदकं घटत्वमेव तदवच्छिन्नानधिकरणत्वस्य हेतुमति पर्वतादौ सत्वादिति भावः। समाधत्ते। **समवायेनेति**। **धूमादौ**। संयोगेन धूमादिहेतौ अतिप्रसंगं योजयति। **समवायावच्छिन्नवन्ह्यभावस्येति**। समवायसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावस्येत्यर्थः। **तदवच्छेदकसंबन्धतया**। प्रतियोगितावच्छेदकसंबन्धतया। समवायेन वन्ह्यभावप्रतियोगित्वं वह्नित्वरूपं, तथा संयोगेन वन्ह्यभावप्रतियोगित्वमपि वन्हित्वस्वरूपम्, वन्हित्वरूपप्रतियोगिताया भेदविरहात्, एवं च समवायेन वन्ह्यभावीय वन्हित्वरूपप्रतियोगितायाः अवच्छेदकीभूतसंयोगसंबन्धेन वन्ह्यधिकरणतया साध्याभावस्य लक्षणाघटकत्वादतिव्याप्तिरिति भावः। **तादृशसंबन्धेन**। संयोगसंबन्धेन। **साधनवतः**। संयोगेन धूमवतः। **प्रतियोग्यनधिकरणत्वाभावात्**। प्रतियोगिसमानाधिकरणत्वात्।

ननु वन्हिमान् धूमादित्यादौ हेतुमन्निष्ठघटाद्यभावीयघटत्वरूप यत्प्रतियोगित्वं तस्य प्रमेयवदभावीयप्रतियोगितावच्छेदकावच्छिन्नत्वेन तदवच्छेदकीभूत प्रमेयावच्छिन्नाधिकरणत्वस्य हेतुमति सत्वेन सर्वत्राऽसंभव संभवेऽतिव्याप्त्यादानमनुचितमिति चेन्न। स्व० तादा-

प्रतियोगितावच्छेदकीभूतयत्किञ्चित्सम्बन्धेन प्रतियोग्यनधिकरणत्वोक्त्या तदवारणे तु संयोगेन वह्निसाध्यके धूमादावव्याप्तिः, समवायावच्छिन्नवह्न्यभावस्यैव समवायेन प्रतियोगिव्यधिकरणस्य वन्हित्वस्वरूपं यत्प्रतियोगित्वं तस्यैव संयोगसम्बन्धेनाप्यवच्छिन्नत्वादिति चेत्, अत्र वदन्ति।

प्रतियोगिस्वरूपं, तदवच्छेदकस्वरूपं वा यत्प्रतियोगित्वं तदपि कस्यचिदभावस्य केनचिदपि धर्मेण सम्बन्धेन वाऽवच्छिन्नं, व्यवहारबलात्, नतु सर्वेण सम्बन्धेन, धर्मेण वा, समवायावच्छिन्नवन्ह्यभावप्रतियोगित्वं संयोगावच्छिन्नं इत्यादिव्यवहाराभावात्।

---

लक्ष्मीः

त्म्यस्वावच्छेदकत्वोभयसंबन्धेन प्रतियोगिताविशिष्टं यदवच्छेदकं तदवच्छिन्नानधिकरणत्वविवक्षणान्नासंभवः। जन्यमात्रस्य कालोपाधित्वानुपगमे धूमवान् वन्हेरित्यत्र नातिव्याप्तिरिति ध्येयम्। **तद्वारणे तु इति।** अतिव्याप्तिवारणे तु इत्यर्थः। उक्तस्थले तादृशप्रतियोगितावच्छेदकीभूतयत्किञ्चित्समवायसंबन्धेन वन्ह्यधिकरणतायाः पर्वतादावसत्त्वात्समवायेन वन्ह्यभावस्य लक्षणघटकतयैवातिव्याप्त्यभावेपीति भावः। **तस्यैव।** वन्हित्वरूपप्रतियोगित्वस्यैव। **संयोगेनापीति।** अपिना समवायस्य समुच्चयः। तथा च समवायेन प्रतियोगिव्यधिकरणस्य वन्ह्यभावस्य लक्षणघटकतयाऽव्याप्तिवाप्तिवारणाय "स्वप्रतियोगितावच्छेदकीभूतो यो यः संबन्धस्तावदन्यतमसंबन्धेन प्रतियोग्यनधिकरणत्वस्यावश्यं निवेशनीयतयाऽतिव्याप्तिस्तादवस्थैवेति प्रतियोगितावच्छेदकरूपमपि प्रतियोगित्वं न शक्यते वक्तुम्। समाधत्ते। **अत्र वदन्तीति। तदपि।** तादृश प्रतियोगित्वमपि। **कस्य चिदभावस्य।** यत्किञ्चिदभावस्य। **केनचिद्धर्मेण।** यत्किञ्चिद्धर्मेण। अवच्छिन्नमित्यनेनान्वयः। **व्यवहारबलादिति।** समवायेन वन्ह्यभावप्रतियोगित्वं—'समवायेन वह्नित्वेन चावच्छिन्नमिति व्यवहारादित्यर्थः। **धर्मेणवेति।** अवच्छिन्नमिति पूर्वेणान्वयः। समवायसंबन्धावच्छिन्नप्रतियोगित्वस्य संयोगावच्छिन्नत्वे बाधकमाह। **समवायावच्छिन्नवन्ह्यभावप्रतियोगित्वं संयोगावच्छिन्नमित्यादिव्यवहाराभावादिति। तथा च।**

तथा च यदभावीययत्प्रतियोगितावच्छेदकसम्बन्धेन यदभावीययत्प्रतियोगिता-निरुपितावच्छेदकीभूतधर्मावच्छिन्ना सम्बन्धित्वं हेतुमतः, तदभावीय तत्प्रतियोगिता-निरुपितावच्छेदकताशून्यत्वं साध्यतावच्छेदके निवेश्यमित्यदोषः, यत्प्रतियोगिते-त्यपहाय यादृशप्रतियोगितेत्यभिधानादेव तादृशार्थलाभात् ।

न च प्रतियोगितावच्छेदरूपं यदि प्रतियोगित्वं तदा यदभावीययादृशप्रति-योगितावच्छेदकसम्बन्धेन तदभावीय तादृशप्रतियोगित्वावच्छिन्नस्यानधिकरणत्वं

---

लक्ष्मीः

समवायेन वन्ह्यभावप्रतियोगित्वस्य संयोगानवच्छिन्नत्वे च । **तदभावीय तत्प्रतियोगितेति ।** तदभावीय साध्यतावच्छेदकसंब-न्धावच्छिन्नेत्यादिः । तेन समवायेन वन्ह्यभावीय वह्नित्वादिस्वरूपं यत्प्रतियोगित्वं तदवच्छेदकीभूतसमवायसंबन्धेन तदभावीयप्रति-योगितानिरूपितावच्छेदकीभूतवन्हित्वावच्छिन्नासंबन्धिपर्वतादितदभा-वीय तत्प्रतियोगितावच्छेदकत्वस्य वन्हित्वे सत्वेपि तदीयतत्प्रतियोगि-ता न साध्यतासंवन्धावच्छेदकसंबन्धावच्छिन्ना, यदीय प्रतियोगिता साध्यतावच्छेदकसंबन्धावच्छिन्ना तदीय तत्प्रतियोगिताव-च्छेदकसंबन्धेन तदीय तत्प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्ना संबन्धित्वस्य हेतुमतोऽभावात्संयोगेन वन्ह्यभावादिकमादाय न दोषः । परन्तु संयोगेन घटाद्यभाव एव तादृशः, तदीय साध्यतावच्छेदकसंब-न्धावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य वन्हित्वादौ सत्वान्न कुत्रापि दोषः ।

संयोगेन पटाभावप्रतियोगित्वस्य पटादिस्वरूपत्वेपि तदीय प्रति-योगितानिरूपितावच्छेदकत्वं पटत्वादेरेव न तु ज्ञेयत्वादेः, अतस्तदव-च्छिन्ना संबन्धित्वादेव, पटत्वाद्यवच्छिन्नप्रतियोगिवैयधिकरण्यनिरू-पकत्वान्नासंभवः । समवायावच्छिन्नवन्ह्यभावप्रतियोगित्वस्य वन्हि-त्वादिस्वरूपत्वेपि तदीय प्रतियोगितावच्छेदकसंबन्धः समवाय एव, न तु संयोगादिः—अतः समवायेन वन्हेः साध्यत्वे संयोगेन धूमादिहेतौ नातिव्याप्तिरिति संक्षेपः । **इत्येव सम्यगिति ।** तावतैव विशिष्टसत्ता-वान् जातेरित्यत्र जात्यधिकरणगुणवृत्तिविशिष्टसत्ताभावप्रतियोगित्वं वैशिष्ट्य-सत्तात्वरूपं, तदवच्छिन्नानधिकरणत्वस्य हेत्वधिकरणे गुणे सत्वात्साध्याभावस्य लक्षणघटकत्वादिति भावः । **व्यर्थ इति ।**

अत्र च ग्राह्यसामानाधिकरण्ये हेतोर्यादृशः सम्बन्धः प्रविष्ट-

हेतुमत इत्येव सम्यक्, प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वप्रवेशो व्यर्थ इति वाच्यम्। वह्निधूमोभयवान् वन्हेरित्यादावतिव्याप्त्यापत्तेः, हेतुमान्मात्रस्यैव वह्निधूमउभयत्वावच्छिन्नाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वादित्यस्मद्गुरुचरणाः।

ग्राह्यसामानाधिकरण्य इति। परामर्शविषयसाध्यसामानाधिकरण्य इत्यर्थः। सम्बन्धविशेषेणैव साध्यसाधनयोः सामानाधिकरण्यज्ञानादनुमितिस्तज्ज्ञानप्रतिबन्धकतयैव विरोधस्य हेत्वाभासत्वमिति मतेनेदम्।

लक्ष्मीः

शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वादिति भावः। न व्यर्थ इति समाधत्ते। **वह्निधूमोभयवानिति। हेतुमन्मात्रस्यैवेति। हेतुमन्मात्र**स्यापीत्यर्थः। मात्रपदेन वह्नीतरव्यवच्छेदः। वन्ह्यधिकरणमात्रस्यापीति तदर्थः। प्रत्येकाधिकरणस्यापीति यावत्। तथा च वह्निधूमोभयाभावो न प्रतियोगिव्यधिकरण इत्यभावान्तरमादायातिव्याप्तिरिति भावः।

अयं भावः—प्रतियोगित्वस्योभयत्वरूपत्वेपि उभयत्वत्वेन तदवच्छिन्नाधिकरणत्वमयोगोलके नाभ्युपेयते वह्निधूमोभयवदयोगोलकमिति प्रत्ययाभावात्। प्रतियोगितात्वेन तादृशोभयत्वावच्छिन्नस्याधिकरणत्व मभ्युपेयते, प्रतियोगितात्वेन वह्निधूमोभयत्वस्याव्यासज्यवृत्तितया वह्निधूमोभयाभावप्रतियोगिमदयोगोलकमिति प्रत्ययादिति। प्रतियोगितावच्छेदकीभूतोभयत्वेन तादृशोभयत्वस्य व्यासज्यवृत्तितया तदवच्छिन्नसंबन्धित्वं न प्रत्येकाधिकरणस्येति न प्रकृतेऽतिव्याप्तिरिति समुदितार्थः।

हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणत्वं, हेत्वधिकरणवृत्त्यभावप्रतियोगितायां च साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं विशिनष्टि। **दीधितौ। अत्र चेत्यादिना।** एतल्लक्षणघटकीभूते चेत्यर्थः। ग्राह्यत्वं न सामान्यतो ज्ञानविषयत्वम् किन्तु परामर्शात्मकज्ञानविषयत्वमित्याह। **परामर्शविषयेति। संबन्धविशेषेणैव।** साध्यतावच्छेदक, हेतुतावच्छेदकसंबन्धाभ्यामेवेत्यर्थः। **सामानाधिकरण्यज्ञानादनुमितिरिति। यत इत्यादि।** हेतुतावच्छेदकसंबन्धेन हेतुनिष्ठ-

यदि च येन केनापि सम्बन्धेन साध्यसाधनयोः सामानाधिकरण्यज्ञानादनुमितिः, स्वव्यापकसाध्यसम्बन्धितामात्रं वा व्याप्तिः, व्यापकत्वदले साध्यसाधनयोः सम्बन्धविशेष प्रवेशादेवातिप्रसंगभंगादिति विभाव्यते, तदा परामर्शेन साधनस्य,

---

लक्ष्मीः

साध्यतावच्छेदकसंबन्धेन साध्यसामानाधिकरण्यज्ञानादित्यर्थः। तद्ज्ञानप्रतिबन्धकतयैवेति। संबन्धविशेषघटितसाध्यसामानाधिकरण्यज्ञानं प्रत्येव संबन्धविशेषघटितविरोधिज्ञानस्य "साध्यासमानाधिकरणो हेतुरित्याकारकस्य" विरोधितया साध्यतावच्छेदकहेतुतावच्छेदकसंबन्धघटितसामानाधिकरण्यमेव परामर्शविषय इति। व्याप्तिज्ञानप्रतिबन्धकतयैवेत्येवकारेण साक्षादनुमितिप्रतिबन्धकत्वव्यवच्छेदः। विरोधस्य। हेतुनिष्ठसाध्यासामानाधिकरण्यस्य। हेत्वाभासत्वमिति। अनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयत्वमित्यर्थः। इदम्। अत्र च ग्राह्यसामानाधिकरण्ये इत्यभिधानम्। परामर्शविषयसामानाधिकरण्यस्य संबन्धविशेषानियन्त्रितत्वे विरोधस्य हेत्वाभासत्वं न स्यात्। अत एव हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणम्, हेत्वधिकरणवृत्यभावीयप्रतियोगिता साध्यतावच्छेदकसंबन्धावच्छिन्ना इत्येव कथं नोक्तमित्याक्षेपः समाहितः। सामानाधिकरण्ये संबन्धविशेषनियन्त्रितत्वलाभाय तदभिधानमिति परमार्थः।

विरोधज्ञानस्य अश्वत्ववानयमिति ज्ञानसहितस्य गोत्वासमानाधिकरणमश्वत्वमिति निश्चयविशिष्टनिश्चयत्वेन अश्वत्ववानयमिति ज्ञानसहितस्य गोत्वव्यापकीभूताभावप्रतियोगिअश्वत्वमिति निश्चयविशिष्टनिश्चयत्वेन वा साक्षादनुमितिप्रतिबन्धकतयैव हेत्वाभासत्वोपपत्तिरिति वदतां मतमवलंब्याह। यदि चेति। येन केनापि संबन्धेनेति। संबन्धविशेषानियन्त्रितेत्यर्थः। स्वव्यापकसाध्यसंबन्धितामात्रमिति। स्वं-हेतुः। मात्र पदेन संबन्धविशेषनियन्त्रितसामानाधिकरण्यस्य व्यवच्छेदः। साध्यसंबन्धित्वमित्यस्य साध्यसंबन्धवत्वमर्थः। स च संबन्धः—सामानाधिकरण्यरूप ऽतिरिक्तोवेत्यन्यदेतत्। व्यापकत्वदले संबन्धविशेषप्रवेशादेवेति। व्यापकतावटकहेतुमत्वस्य प्रतियोगितायाश्च व्याप्यतावच्छेदक-

अनुमित्या च साध्यस्य ग्राह्य यत्पक्षतावच्छेदकेन सार्धं सामानाधिकरण्यं, तत्र प्रविष्टो यादृशः सम्बन्ध इत्यर्थो बोध्यः । 'धूमवान् वन्हे'रित्यादौ महानसीय संयोगेन सद्धेतौ संयोगमात्रेण हेतुमत्तामादायाव्याप्तिः ।

एवं द्रव्यत्वसाध्यके घटानुयोगिकसमवायेन सत्वादिहेतौ समवायमात्रेण हेतुमत्तामादायाऽपीत्यतो-यत्सम्बन्ध इत्यपहाय-यादृशःसम्बन्ध इत्युक्तम् ।

---

लक्ष्मीः

व्यापकतावच्छेदकसंबन्धावच्छिन्नत्वविवक्षयेत्यर्थः । **अतिप्रसंगभंगादिति।** गोत्ववानश्वत्वादित्यादौ संबन्धविशेषानियन्त्रितसाध्यसामानाधिकरण्यज्ञानात्, अनुमित्यापत्तिरूपातिप्रसंगस्य—एकसंबन्धेन साध्यसामानाधिकरण्यज्ञानात्संबन्धान्तरेणानुमित्यापत्तिरूपातिप्रसंगस्य वारणादित्यर्थः ।

हेतुतावच्छेदकसंबन्धेन पक्षे हेतुमत्ताज्ञानात् साध्यतावच्छेदकसंबन्धेन तत्र साध्यानुमितिः फलम् । एवं च परामर्शे पक्षतावच्छेदकेन सार्धं ग्राह्यं यद्धेतोः सामानाधिकरण्यं अनुमितौ च पक्षतावच्छेदकेन सार्धं ग्राह्यं साध्यस्य सामानाधिकरण्यमवगाहते इति मतेनाह । **तदेति ।** ग्राह्यसामानाधिकरण्ये इत्यस्येति शेषः । **तत्र ।** सामानाधिकरण्ये पक्षतावच्छेदकेन सार्धं हेतोः साध्यस्य च सामानाधिकरण्ये इति यावत् । तथा च परापर्शे पक्षतावच्छेदकेन सह हेतोः समानाधिकरण्यघटकतया हेतुनिष्ठनिरूपकता यादृशसंबन्धावच्छिन्ना तेन संबन्धेन हेत्वधिकरणम् , एवं अनुमितौ पक्षतावच्छेदकेन सार्थं सामानाधिकरण्यघटकतया साध्यनिष्ठनिरूपकता यादृशसंबन्धावच्छिन्ना तत्संबन्धावच्छिन्नप्रतियोगित्वं बोध्यम् ।

नन्वत्र ग्राह्यसामानाधिकरण्ये महानसानुयोगिकसंयोग एव निविष्टो न तु अयोगोलकोनुयोगिकसंयोगादिः, तेन हेत्वधिकरणं नायोगोलकादिः किन्तु महानसादिरेव तन्निष्ठतादृशाभावप्रतियोगितानवच्छेदकत्वस्य धूमत्वे सत्वान्नाव्याप्तिरत आह । **एवं द्रव्यत्वसाध्यके इत्यादि ।** इदं च न्यूनवारकपर्याप्तिनिवेशफलम् । हेतुतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशस्तु समवायेन धूमाधिकरणधूमावयवमादाय वन्हिमान् धूमादित्यादावव्याप्तिवारणाय । एवं द्रव्यत्वसाध्यकसमवायेन सत्वादिहेतौ घटानुयोगिकसमवायेन सत्ताधिकरणे साध्याभावविरहा-

स्तेन सम्बन्धेन यो हेतुमान्, तत्र वर्तमानत्वमभावस्य, साध्यस्य च यादृशः सम्बन्धः प्रविष्टस्तत्सम्बन्धावच्छिन्नायाश्च प्रतियोगितााया अनवच्छेदकत्वं बोध्यम् ।

---

साध्यस्य चेति । ग्राह्यसामानाधिकरण्ये प्रविष्ट इति अन्वयः । धूमाधिकरणे तत्तत्संयोगेन वन्ह्यभावसत्त्वात्, वह्निमान् धूमादित्यादाव्याप्तिरतोऽत्रापि यादृश इत्युक्तम् ।

तेन सम्बन्धेन यो हेतुमानित्यस्य फलमाह । धूमसमवायीति । प्रतियोगिताया इति अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिरित्यन्वयः । साध्यस्यचेत्यादेः फलमाह, धूमसंयोगीत्यादि ।

---

लक्ष्मीः

दृतिव्याप्तिवारणायेतरवारकपर्याप्तिर्निवेश्या । तथा च हेतुतावच्छेदक संसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तियन्निरूपकत्वं तन्निरूपिताधिकरणतावद्वृत्तीत्यादि । निरूपकतायां रूपवृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व सं० ।

दीधितौ । साध्यस्य च यादृशः संबन्ध इति । साध्यतावच्छेदक संबन्ध इत्यर्थः । इतरवारकपर्याप्तिनिवेशनायाह । धूमाधिकरणे । पर्वते । तत्तत्संयोगेन वन्ह्यभावसत्वात् । महानसीयसंयोगेन वन्ह्याभावसत्वात् एवं महानसीयसंयोगेन वन्हेः साध्यतायां धूमादिहेतौ धूमाधिकरणे संयोगेन वन्ह्यभावविरहेणाऽभावान्तरमादायातिव्याप्तिवारणाय न्यूनवारकपर्याप्तिर्निवेश्या । तथा च साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक - रूपवृत्तिर्या प्रतियोगिता तादृशप्रतियोगिताक भाव इत्यर्थः । रूपवृत्तित्वं च प्रतियोगितायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसं० ।

दीधितौ । तेन । हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणत्वप्रवेशेन । साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगित्वप्रवशेन च । अस्य न क्षति रत्यनेनान्वयः । तथा च समवायेन धूमाधिकरणे धूमावयवे संयोगेन वन्ह्यभावप्रतियोगिताया अवच्छेदकत्वस्य, संयोगेन धूमा-

तेन—धूमसमवायिनिष्ठाभावस्य संयोगावच्छिन्नप्रतियोगितायाः, धूमसंयोगिनिष्ठाभावस्य च समवायावच्छिन्नप्रतियोगिताया अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः ।

यद्वा—साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वं

---

ननु तादात्म्येन गवादेः साध्यतायां सास्नादावव्याप्तिस्तत्र साधनवन्निष्ठान्योन्याभावप्रतियोगितायाः साध्यतावच्छेदक-तादात्म्यसम्बन्धावच्छिन्नत्वे मानाभावस्य स्वयमेव बौधाधिकारटिप्पण्यामुक्तत्वात् । एवं धनी चैत्रत्वादित्यादौ वृत्त्यनियामक स्वामित्वादि-

---

लक्ष्मीः

धिकरणे समवायेन वन्ह्यभावप्रतियोगितावच्छेदकत्वस्य च वन्हित्वे सत्वेपि संयोगेन धूमाधिकरणे संयोगेन वन्ह्यभावस्यासत्त्वान्न वन्हिमान् धूमादित्यादावव्याप्तिः ।

**सास्नादाविति** । सास्ना च गोरवयवविशेषः । तस्य समवेतत्वसंबन्धेन हेतुतायामित्यर्थः । **तत्र** । गवादेः साध्यतायां । **साधनवन्निष्ठान्योन्याभावप्रतियोगितायाः** । सास्नादिमन्निष्ठघटान्योन्याभावप्रतियोगितायाः । **मानाभावस्येति** । अत्यन्ताभावप्रतियोगितायां संबन्धावच्छिन्नत्वसाधकस्य प्रतिबध्यप्रतिबन्धकभावानुपपत्त्यादेर्भेदस्थलेऽवतारासंभवात् , संबन्धस्यैकप्रतियोगिकत्वापरानुयोगिकत्वनियमेन तादात्म्यस्य संबन्धत्वाभावाच्च । घटो द्रव्यमिति शाब्दप्रतीत्यनुरोधेन प्रकारतायास्तादात्म्यसंबन्धावच्छिन्नत्वेपि प्रतियोगितायां तदभ्युपगमोऽप्रामाणिक एवेति भावः । **स्वयमेव** । दीधिति कृतैव । **उक्तत्वादिति** । अन्योन्याभावत्वमखण्डोपाधिरेव यथा ध्वंसत्वादिकम् , न तु तादात्म्यसंबन्धावच्छिन्नप्रतियोगिकाभावत्वमित्याद्युक्तत्वादिति भावः । तथा च साध्यतावच्छेदकीभूततादात्म्यसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिरिति भावः । ननु तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावोऽन्योन्याभाव इति प्रतीतिबलादेव तत्संबन्धावच्छिन्नत्वं प्रतियोगितायां स्वीकार्यम्, तदतिरिक्तवृत्त्यनियामक संबन्धावच्छिन्नत्वं तु नेष्यते इत्याह । **एवमिति** । स्वामित्वसंबन्धस्य

हेतुमतो वक्तव्यम् ।

सम्बन्धेन धनादेः साध्यतायामपि तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरत आह । यद्वेति ।

यत्तु—प्रतियोगितावच्छेदकसम्बन्धेन-तद्वैयधिकरण्यं प्रवेश्य पुनः प्रतियोगितायाः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविवक्षायां गौरवमतो यद्वेत्यादिकल्प इति ।

तन्न—सम्बन्धान्तरावच्छिन्नतत्तदनन्तप्रतियोगितावच्छेदकभेदकूटघटितत्वेन, यद्वेत्यादिकल्पस्यैव गुरुतरत्वादित्याहुः ।

सम्बन्धभेदेन—साध्यतावच्छेदकसम्बन्धभेदेन । न चोक्तमतद्वय-एव पर्वता-

लक्ष्मीः

प्रतियोगितावच्छेदकत्वे मानाभावादिति शेषः । साध्यतायामपीति । अव्याप्तिरिति पूर्वेणान्वयः । तादृशसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति । स्वामित्वसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरित्यर्थः । दीधितौ । प्रतियोग्यसंबन्धित्वमिति । तेन साध्यतावच्छेदकतादात्म्यसंबन्धेन प्रतियोग्यधिकरणत्वाप्रसिद्धावपि न क्षतिः ।

लाघवाद्यद्वेत्यादिकल्पावतरणमिति वदतां मतं दूषयितुमुपन्यस्यति । यत्तु इति । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यं प्रवेश्येति । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं प्रवेश्येत्यर्थः । अन्यथा धूमवान् वन्हेरित्यादौ धूमाभावस्य कालिकेन प्रतियोगिसमानाधिकरणतयाऽभावान्तरमादायातिव्याप्तेः । उक्तं च दीधितिकृता अथ ज्ञानवान् द्रव्यत्वादित्यादिना । पुनः प्रतियोगितायामिति । हेतुमन्निष्ठाभावप्रतियोगितायामित्यर्थः । साध्यतावच्छेदकसंबन्धावच्छिन्नत्वविवक्षायामिति । अन्यथा समवायेन वन्ह्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिः स्यात् । तथा च प्रतियोगितावच्छेदकसंबन्धोपि साध्यतावच्छेदकसंबन्ध एव अत पुनरित्युक्तम् । तथा च साध्यतावच्छेदकसंबन्धस्य द्विधा प्रवेशे गौरवमिति भावः । यत्तुमते साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वोक्तौ अव्याप्त्यतिव्याप्त्योरभावादिति ध्येयम् ।

दूषयति । तन्नेति । संबन्धान्तरावच्छिन्नेति । साध्यतावच्छेक-

## तथा च सम्बन्धभेदेन प्रतियोगिता न विशेषणीया,

अनुयोगिक संयोगादिना वह्न्यादेः साध्यतायां तत्तद्धूमेऽव्याप्तिः।

तादृशप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनो यदधिकरणं तदन्यत्वस्य, साध्यतावच्छेदकसम्बन्धेन यत्प्रतियोगिसम्बन्धि, तदन्यत्वस्य च, हेतुमत्यप्रसिद्धेरिति वाच्यम्।

लक्ष्मीः

संबन्धान्यसंबन्धावच्छिन्नेत्यर्थः। संयोग–समवायकालिकादितत्तत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकं यद्यत् तत्तद्व्यक्तित्वावच्छिन्न भेदकूटवत् साध्यतावच्छेदकघटितत्वेनेत्यर्थः। **यद्वेत्यादिकल्पस्यैवेति**। एव कारेण साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकं यद्यत्तत्तद्व्यक्तित्वावच्छिन्नभेदकूटस्य व्यवच्छेदः। संयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतघटत्वभेदस्य धूमत्वे सत्वादतिव्याप्तिवारणाय भेदकूटनिवेशनम्।

ननु प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिता वच्छेदकं यद्यत्तत्तद्व्यक्तित्वावच्छिन्नभेदकूटस्यैव निवेशे प्रतियोगितायां नानासंबन्धावच्छिन्नत्वस्य लक्षणे सत्वेपि भेदप्रतियोगितावच्छेदककोटौ प्रतियोगितावच्छेदकत्वादेरुपलक्षणतयैव निवेशेन यत्तु मते गौरवस्याभावेन गौरवाभिधानमसंगतमिति चेन्न। यत्तु मते वृत्यनियामकसंबन्धावच्छिन्नत्वं प्रतियोगितायां स्वीकृत्य प्रकारान्तरेणावतरणं दत्तम्, अन्यथा जगदीशोक्तावतरणस्यैव सम्यक्त्वात्। तथा च विषयित्वसंबन्धावच्छिन्नप्रतियोगिताककंबुग्रीवादिमत्वावच्छिन्नाभावस्यापि लक्षणघटकतया तत्प्रतियोगितावच्छेदकभेदस्यापि कूटान्तर्गततया तत्प्रयुक्तं यद्वेत्यादिकल्पे गौरवम्। प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे च विषयितासंबन्धावच्छिन्नकंबुग्रीवादिमत्वावच्छिन्नप्रतियोगितावच्छेदकभेदस्याऽप्रवेशेनाऽल्पतरकूटस्यैव प्रवेशेन लाघवमिति सर्वं समञ्जसम्।

**तथा च**। साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धित्वनिवेशे च। **संबन्धभेदेन**। साध्यतावच्छेदकसंबन्धेन। **न विशेषणीया**। साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धित्वनिवशेनैव समवायेन

तादृशप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितविशेषणताविशेषेण, साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितविशेषणताविशेषेण वा तादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वसामान्याभावस्योक्तत्वात्, अन्यथा कालिकादिसम्बन्धेन सर्वस्यैव-हेतुमतः प्रतियोग्यधिकरणतागत्त्वात् प्रतियोग्यनधिकरणहेत्वधिकरणाप्रसिद्धेः ।

---

लक्ष्मीः

वन्ह्यभावमादायाव्याप्तेर्वारणादिति भावः ।

**नचेति** । उक्तमतद्वये इति । प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशपक्षे । साध्यतावच्छेदकसंबन्धित्वनिवेशपक्षे च । स्वप्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावीय साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूपप्रथमे कल्पे । एवं साध्यतावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नाननधिकरणहेतुमद्वृत्त्यभावीय प्रतियोगितावच्छेदकतत्संबन्धावच्छिन्न प्रतियोगितावच्छेदकभेदकूटवत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूपयद्वा कल्पेचेत्यर्थः । **तदन्यत्वस्येति** । तादृशप्रतियोगितावच्छेदकसंबन्धेन "पर्वतानुयोगिकसंयोगसंबन्धेन" यत्प्रयोगिनोऽधिकरणप्रसिद्धिः-तत्प्रतियोगि-पर्वतसंयोगिघटाद्येव तदनधिकरणत्वस्य हेतुमत्यसत्वात् । तद्भिन्नप्रतियोगिनस्तेन संबन्धेनाधिकरणाप्रसिद्धेः । द्वितीयकल्पाभिप्रायेणाव्याप्तिमाह । **साध्यतावच्छेदकसंबन्धेनेति** । पर्वतानुयोगिकसंयोगेनेत्यर्थः । **असिद्धिरिति** । प्रतियोगिमदन्यत्वस्यासिद्धेरित्यर्थः । **अन्यथा** । प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभावप्रतियोगितायां स्वरूपसंबन्धावच्छिन्नत्वानिवेशे । **अप्रसिद्धेरिति** । एवं च स्वरूपसंबन्धे प्रतियोगितावच्छेदकसंबन्धावच्छिन्नाधिकरणता प्रतियोगिकत्वं साध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणताप्रतियोगिकत्वं वा निवेशनीम् ।

स्वप्रतियोगितावच्छेदकसंबन्धावच्छिन्नाधिकरणताप्रतियोगिकस्वरूपसंबन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववद्धेत्वधिकरवृत्त्यभावीय साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितान-

**एवं स्थिते, सामानाधिकरण्य दौ सम्बन्धित्वं निवेशनीयं, नत्वधिकरणत्वं,**

---

ननु सम्बन्धविशेषेण साध्य-साधनयोः सामानाधिकरण्यप्रवेशे तादात्म्येन हेतु-साध्यभावेऽव्याप्तिः, तादृशसम्बन्धेन हेतुसाध्ययोरधिकरणाप्रसिद्धेरत आह, एवं स्थित इति। सम्बन्धविशेषस्यात्र निवेशस्थित इत्यर्थः। सामानाधिकरण्यादाविति। आदिपदेन हेतुसामानाधिकरण्यप्रविष्टहेत्वधिकरणत्वस्य परिग्रहः।

---

लक्ष्मीः

वच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं प्रथमकल्पार्थः।

तथा च पर्वतानुयोगिकसंयोगेन घटाभाव एव लक्षणघटकः तदीय प्रतियोगितावच्छेदकपर्वतानुयोगिकसंयोगसंबन्धावच्छिन्नाधिकरणताप्रतियोगिकस्वरूपस्य घटत्वावच्छिन्नाधिकरणतान्यधिकरण-संबन्धतया तेन संबन्धेन घटाभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नाधिकरणतासामान्याभावस्य हेतुमति पर्वतादौ सत्वात्।

साध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणताप्रतियोगिकस्वरूप-संबन्धेन यादृशस्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववद्धेत्वधिकरणवृत्त्यभावीय प्रतियोगितावच्छेदकतत्तत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकभेदकूटवत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं द्वितीयकल्पस्यार्थः।

संयोगेन घटाभाव एव लक्षणघटकः, साध्यतावच्छेदकपर्वतानुयोगिकसंयोगसंबन्धावच्छिन्नवन्ह्यधिकरणताप्रतियोगिकस्वरूपसंबन्धस्य घटाभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नाधिकरणतासामान्याभावस्य केवलान्वयितया हेतुमत्यपि पर्वतादौ तस्य सत्वात्।

संयोगसंबन्धावच्छिन्नाधिकरणताप्रतियोगिकस्वरूपसंबन्धेन महानसीय वन्ह्यधिकरणत्वाभावस्य हेतुमति पर्वतादौ सत्वाद्वन्ह्यभावस्य लक्षणघटकतया वन्हिमान् धूमादित्यत्राव्याप्तिवारणायाऽधिकरणता सामान्याभाव निवेश इति दिक्।

वृत्यनियामकसंबन्धेन व्याप्यव्यापकभावं व्यवस्थापयितुमुपक्रमते। **नन्विति। संबन्धविशेषेण।** साध्यतावच्छेदकसंबन्धेन हेतुतावच्छेदकसंबन्धेन च। **तदात्म्येन हेतुसाध्यभावे।** तादात्म्येन वह्निमतः

तथाच धर्मिणोऽपि व्याप्यत्वं, व्यापकत्वञ्च निर्वहति, तथाहि तादात्म्येन सम्बन्धेन धूमवतः सम्बन्धिनि महानसे वर्तमानो योऽन्योन्याभावस्तस्य तादात्म्यसम्बन्धावच्छिन्ना या प्रतियोगिता तदनवच्छेदकवह्निमत्त्वावच्छिन्नस्य वह्निमतस्तादात्म्येन सम्बन्धिनि महानसे, धूमवतस्तादात्म्येन सम्बन्धित्वम् ।

---

प्रयोजनमाह—। तथाचेति । धर्मिणोऽपीति । तादात्म्येन व्याप्यत्वं, व्यापकत्वञ्च निर्वहतीत्यर्थः, अन्यथा तादात्म्येन हेतोः साध्यस्य चाधिकरणाप्रसिद्धया न तन्निर्वाह इति भावः । योऽन्योन्याभाव इति । योऽभाव इत्येत्र वक्तुमुचितम, अन्योन्याभावत्वनिवेशे वैयर्थ्यादिति ध्येयम् । तदनवच्छेदकवन्हिमत्त्वेति । वन्हिमत्त्वं वन्ह्यधिकरणत्वं, तच्चाधिकरणव्यक्तीनां भेदेप्यभिन्नमित्याशयेनेदम् । अत्र साध्यसाधनयोरिव तदीयसम्बन्धयोरपि भेदेन व्याप्तेर्भेदात् ।

---

लक्ष्मीः

साध्यत्वे तादात्म्येन धूमवतो हेतुत्वे चेत्यर्थः । अव्याप्तिमुपपादयति । **तादृशसंबन्धेनेति** । तादात्म्यसंबन्धेनेत्यर्थः । **अधिकरणाप्रसिद्धेरिति** । तादात्म्यसंबन्धस्य वृत्त्यनियामकतया तेन संबन्धेन संबन्धित्वस्यैव स्वीकारादिति भावः ।

केचित्तु ननु प्रतियोगिवैयधिकरण्ये संबन्धित्वं प्रवेश्य तादात्म्येन व्यापकतानिर्वाहेपि तादृशव्यापकताघटितव्याप्तिर्न निर्वहति तादृशसाध्यतावच्छेदकसंबन्धेन साध्याधिकरणाप्रसिद्धेरत आह । **दीधितौ** । **एवं स्थिते इति** । प्रतियोगिवैयधिकरण्यशरीरे संबन्धित्वनिवेशे स्थिते इत्यर्थः । **संबन्धित्वं निवेशनीयमिति** । तथा च साध्यसामानाधिकरण्यम्, साध्यसंबन्धिसंबन्धित्वम, अभावे हेतुसामानाधिकरण्यं च हेतुसंबन्धिसंबन्धित्वमादि पदग्राह्यमिति प्राहुः । **प्रयोजनमाहेति** । संबन्धित्वनिवेशस्य प्रयोजनमाहेत्यर्थः । **दीधितौ** । **तथाच** । संबन्धित्वनिवेशे च । **धर्मिणोपि** । धूमवदादेः । **व्याप्यत्वं** । वन्हिमदादिरूपधर्मिनिरूपितव्याप्यत्वम् । **व्यापकत्वं चेति** । धर्मिणोपीति

एवं धर्मिणो धर्मव्याप्यत्व—व्यापकत्वे-बोध्ये ।

अत एव—जलादीनां पृथिवीत्वाभावव्याप्यत्वं तत्र तत्रोक्तं सङ्गच्छते ।

---

तादात्म्येन हेतु-साध्यस्थले हेतुनिष्ठाभावप्रतियोगिसाध्यतादात्म्यमेव व्याप्तिर्वक्तुमुचिता, लाघवादिति वदन्ति ।

एवमिति—सामानाधिकरण्यादौ सम्बन्धित्वनिवेशे कृत इत्यर्थः । धर्मिण इति । धर्मिणो=धूमवतः, धर्मस्य=वन्हेर्व्याप्यत्वम्, धर्मिणो=वन्हिमतः, धर्मस्य=धूमस्य, व्यापकत्वञ्चेत्यर्थः । तथाच, गौः सास्नावत्त्वात्, 'वन्हिमान् धूमवत' इत्यादौ तादात्म्यसम्बन्धेन व्यापकता, व्याप्यताऽपि सङ्गच्छत इति भावः । ननु तादात्म्येन धर्मिणो धर्मव्याप्यतायामपसिद्धान्त इत्यत आह । अत एवेति । धर्मिणो धर्मव्याप्यत्वादेवेत्यर्थः । तत्र-तत्र=व्यतिरेक्यादि ग्रन्थे ॥१४॥

ननु समवायेन जलादौ पृथिवीत्वाभावव्याप्यत्वपरतयैव तद्ग्रन्थसङ्गतिरित्याशङ्क्य,

---

लक्ष्मीः

पूर्वेणान्वयः । धूमवदादि धर्मिनिरूपितव्यापकत्वं चेत्यर्थः । अन्यथा । संबन्धित्वानिवेशे । तदेव दर्शयति । तथा हीत्यादिना । योऽभाव इत्येव वक्तुमुचितमिति । तथा च वस्तुगतिमनुरुध्य तथोक्तम्, तस्यैव तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वात् । न तु तत्त्वेन निवेशे इत्याशयः । वैयर्थ्यादिति । अभावे तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वकथनादेवाऽन्योन्याभावत्वसिद्धेरिति ध्येयम् । ध्येयमिति चिन्ताबीजं तु अन्योन्याभावत्वस्यानुयोगिताविशेषरूपत्वेन न वैयर्थ्यम् । ननु वन्हिमत्वं यदि वन्हिः स च तव्द्यक्तिमात्रेति भेदमादाय हेतुमन्निष्ठाभावप्रतियोगितावच्छेदक एवेत्यत आह । वन्हिमत्वं चेति । वन्ह्यधिकरणत्वमपि स्वरूपसंबन्धविशेषश्चेत्तदाऽधिकरभेदाद्भिन्नमेवेति तद्दोषतादवस्थ्यमत आह । तच्चेति । वन्ह्यधिकरणत्वं चेत्यर्थः । अभिन्नमिति । तथा चाधिकरणत्वमतिरिक्तमेव तच्चैकं नानातस्तव्द्यक्त्यवच्छिन्नान्योन्याभावमादाय दोषः ।

केचित्तु परंपरासंबन्धेन वन्हित्वस्यैव वन्हिमत्वात् । तदनवच्छेद-

यथा च यादृशेन सम्बन्धेन हेतोर्व्याप्यता गृहीता, तादृशेन सम्बन्धेन, तस्य पक्षविशिष्टत्वज्ञाने, यादृशेन सम्बन्धेन च साध्यस्य व्यापकत्वमवगतं तादृशेनैव साध्य–पक्षयोर्विशिष्टानुमिति. ।

तेन न धूमावयवे संयोगेन, न वा समवायेन पर्वते वह्निधीः, तथैवावगतव्यापकताघटकसम्बन्धेन व्यापकस्याभावग्रहे गृहीतव्याप्यताघटकसम्बन्धेन व्याप्यस्याभावः–सिध्यतीति, कथमन्यथा 'समवायेन वह्निविरहिणि महानसे संयोगेन, संयोगेन वा वह्निविरहिणि स्वावयवे, धूमः समवायेन न निवर्त्तते,

निवर्त्तते च, संयोगेन वह्निविरहिणि स्वावयवे संयोयेनेति नियम उपपद्यते, ? तथाच तादात्म्यसम्बन्धेन जलादीनां व्याप्य-

---

पृथिव्यादौ जलादिभेदसाधनार्थं तदुपन्यासो न स्यात्, व्यापकताघटकसम्बन्धावच्छिन्नव्यापकाभावेन व्याप्यताघटकसम्बन्धावच्छिन्नव्याप्याभावस्यैव सिद्धेरित्यन्वयिदृष्टान्तपूर्वकं परिहरति, । यथा चेति ।

पक्षविशिष्टेति । पक्षविषयकेत्यर्थः, प्राचां मते पक्षविशेष्यकज्ञानस्येव पक्षप्रकारकज्ञानस्यापि कारणत्वात् । धूमावयव इति । न वह्निधिरित्यन्वयः ।

धूमावयवे समवायेन तादृशधूमवत्त्वग्रहेऽपि न वन्ह्यनुमितिः, पर्वते च संयोगेन धूमवत्त्वग्रहेपि न समवायेन वन्ह्यनुमितिरित्यर्थः । कथमिति । नियम उपपद्यत इति परेणान्वयः ।

---

लक्ष्मीः

कत्वस्य तद् वच्छेदकतानवच्छेदकवन्हित्वावच्छिन्नेत्यर्थकत्वादाहुः । वदन्तीत्यस्वरसः । तद्बीजं तु हेतुनिष्ठेत्युक्तौ द्रव्यं घटपटोभयस्मादित्यत्र तादात्म्येन हेतुतायां कुत्रापि हेतौ द्रव्यन्नेति भेदस्यासत्वादतिव्याप्तिः, हेतुमन्निष्ठेत्याद्युक्तौ च हेतुमत एवाप्रसिध्या नातिव्याप्तिरिति विभावनीयम् । धूमवद् वह्निमतो व्याप्यव्यापकभावमुक्त्वा धर्मिणो धूमवदादेर्वन्ह्यादिरूपधर्मव्याप्यत्वं, धर्मिणो वह्निमदादेर्धूमादिरूपधर्मव्यापकत्वं चाह । दीधितौ । एवमिति । तथासति । तद्ग्रन्थस्य समवायेन जलादौ पृथिवीत्वाभावव्याप्यपरत्वे । ननु तद्ग्रन्थस्य

त्वग्रहाद्व्यापकनिवृत्त्या, तादात्म्येनैव तेषामभावः सिध्यति, स एव चान्योन्याभावः, इत्थमेव च तादात्म्याद्वृक्षशिंशपयोर्व्याप्तिनिश्चय इति सङ्गच्छते ।

---

इत्थमेव च तादात्म्याद् वृक्षशिंशपयोर्व्याप्तिनिश्चय, इति सङ्गच्छते ॥१५॥

महानसे संयोगेनेति । न निवर्तते इत्यन्वयः, न संयोगावच्छिन्नस्याभावोऽनुमितौ भासत इति तदर्थः । निवर्तते चेति । धूम इति परेणान्वयः । तादात्म्यनैवेति । समवायेन व्याप्यतायान्तु समवायेन जलस्यात्यन्ताभाव एव सिद्धेरिति, जलभेदसाधनार्थं तद्ग्रन्थावतारो न स्यादिति भावः ।

नन्वेतावतापि तादात्म्यसम्बन्धावच्छिन्नजलाभावः सिद्धो, न तु जलान्योन्याभाव इति तद्दोषतादवस्थ्यमत आह । स एव चेति । धर्मिणो धर्मव्याप्यत्वे प्राचां संवादमुपन्यस्य धर्मिणो धर्मव्यापकत्वे तमाह । इत्थमेव चेति । तादात्म्येन व्याप्तेर्व्यवस्थापनेनैवेत्यर्थः । तथा च 'वृक्षः शिंशपाया' इत्यत्र व्याप्तेर्निश्चयः प्रामाणिक इति भावः ।

---

लक्ष्मीः

जलादीनां समवायेन पृथिवीत्वाभावव्याप्यत्वपरत्वे कथं पृथिवीत्वाभावाभावेन जलादिभेदो न सिद्ध्यतीत्यत आह । व्यापकाभावेनेत्यादि । व्याप्याभावस्यैव सिद्धेरितीति । इति नियमादाशंकां परिहरतीत्यर्थः । अन्वयिदृष्टान्तपूर्वकमिति । अन्वयिनि व्याप्यताघटकसंबन्धेन व्याप्यवत्ताज्ञानात् व्यापकताघटकसंबन्धेनैव व्यापकः सिद्ध्यतीति नियमं दृष्टान्तविधया दर्शयन् व्यतिरेकिणि प्रकृतनियमं दर्शयित्वा तादृशाशंकां दूरीकरोतीति समुदिततात्पर्यार्थः ।

दीधितौ यथा चेति । तादृशेन सम्बन्धेन । व्याप्यतावच्छेदकसम्बन्धेन । तस्य । हेतोः । पक्षविशिष्टत्वज्ञाने । साध्यव्याप्यो हेतुः पक्षे, साध्यव्याप्यहेतुमान् पक्षः, इति ज्ञाने । तादृशसंबन्धेनैव । व्यापकतावच्छेदकसंबन्धेनैव । साध्यपक्षयोर्विशिष्टानुमितिः । पक्षः साध्यवान्, पक्षे वा साध्यमित्यनुमितिः । अन्यथा । व्यापकताघटकसंबन्धेन व्यापकाभावेन व्याप्यताघटकसंबन्धेन व्याप्याभावानभ्युपगमे । दीधितौ । तथा च । व्यापकताघटकसंबन्धेन व्याप-

**अत एव गोत्वत्वाद्यग्रहदशायां–अथ सास्नादिः सा गौरिति ।**

धर्मिणो धर्मव्यापकत्वे युक्तिमप्याह, । अत एवेति । धर्मिणो धर्मव्यापकत्वादेवेत्यर्थः । [ ननु ] 'इयं गौ' रित्यनुमितिर्गवेतरावृत्तित्वरूपायाः शुद्धगोत्वनिरूपितव्याप्तेर्ज्ञानात्समवायेन निरवच्छिन्नगोत्वसाध्यिकैव भविष्यति, साध्यवदन्यावृत्तित्वरूपाया अपि व्याप्तेरनुमितिहेतुत्वस्याग्रे वाच्यत्वादतस्तादृशानुमित्यनुरोधाद्धर्मिणो धर्मव्यापकत्वस्वीकारोऽनुचित इत्यत उक्तं । गोत्वत्वेति । गोत्वत्वं—गवेतरावृत्तित्वं, तथा च गवेतरावृत्तित्वरूपाया गोत्वव्याप्तेरज्ञानदशायामुत्पन्नाया 'इयं गौ' रित्यनुमितेर्गोत्वविधेयत्वासम्भवाद्गोविधेयकत्वमेवेति, तदनुरोधादवश्यं धर्मिणो धर्मव्यापकत्वं वाच्यमिति भावः ।

---

लक्ष्मीः

काभावाद् व्याप्यताघटकसंबन्धेन व्याप्याभावसिद्धौ च । व्यापकनिवृत्त्या । पृथिवीत्वाभावाभावेन । तादात्म्येनैव तेषां । जलादीनां, एवकारव्यवच्छेद्यमाह । समवायेन व्याप्यतायान्तु इति । जलस्य समवायेन पृथित्वाभावव्याप्यतायां तु इत्यर्थः । तद्ग्रन्थावतारः । व्यतिरेकिग्रन्थावतारः । दीधितौ । स एव । तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभाव एव । धर्मिणः । धूमवतः । धर्मव्याप्यत्वे । वह्निव्याप्यत्वे । धर्मिणः । गवादेः । धर्मव्यापकत्वे । सास्नाव्यापकत्वे चेत्यर्थः । तं । संवादं । व्याप्तिनिश्चय इति । हेत्वधिकरणत्वस्थाने हेतुसंबन्धित्वस्य साध्यसामानाधिकरण्यस्थाने साध्यसंबन्धिसंबन्धित्वस्य निवेशादेव तादात्म्येन व्याप्तिनिश्चयः संभवतीति भावः ।

वृक्षः शिंशपाया इत्यत्र तादात्म्येन वृक्षः साध्यं, शिंशपा च तादात्म्येन हेतुः । यत्र सास्नादिरिति । गौः सास्नावत्त्वादित्यत्र गोत्वत्वाज्ञानकाले तादात्म्येन गव्येव सास्नाव्यापकत्वं स्वीकार्यमित्याशयः । सास्नादिना । सास्नादिहेतुना । तादात्म्येन गौः सिध्यतीति परेणान्वयः । तादात्म्येन गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकः सिध्यतीति । व्यापकताघटकसंबन्धेन व्यापकाभावाद् व्याप्यताघटकसंबन्धेन व्याप्याभावः सिध्यतीति भावः ।

ननु तादात्म्येन गोः साध्यत्वेऽपि 'गोत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदक-मित्याकारकव्याप्तिधियोऽनुमिति हेतुत्वात्तत्र च धर्मितावच्छेदकविधयैव गोत्वत्वग्रहस्यापेक्षितत्वात्तदग्रहे गोविधेयकानुमितिरप्यनुपपन्नेत्यत आह, आदीति । आदिना पक्ष-धर्मतापरिग्रहः, तथा च गवेतरावृत्तित्वरूपव्याप्तेः सास्नाव्यापकता ( वच्छेदकता )

---

लक्ष्मीः

गोत्वत्वाऽग्रहदशायां गोत्वत्वं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकमिति व्याप्तिज्ञानासंभवेपि गोत्वविधेयकानुमितिर्नानुपपन्नेत्याशंकते । **नन्विति । शुद्धगोत्वनिरूपितव्याप्तेरिति ।** गवेतरावृत्तित्वरूपव्याप्तौ गोत्वजातेरनुल्लेखादिति भावः । **शुद्धगोत्वसाध्यकैव भविष्यतीति ।** इयं गौरित्यनुमितिरिति पूर्वेणान्वयः । एव कारेण गोविधेयकत्वस्य व्यवच्छेदः । **साध्यवदन्यावृत्तित्वरूपाया अपीति ।** गोत्वस्य साध्यत्वे गवेतरावृत्तित्वस्यैव साध्यवदन्यावृत्तिरूपत्वादिति भावः । **अग्रे ।** केवलान्वयिग्रन्थे । **अतः ।** तादृशव्याप्तिज्ञानस्यानुमितिहेतुत्वात् । **तादृशानुमित्यनुरोधात् ।** इयं गौरित्यनुमित्यनुरोधात् । **धर्मिणः ।** गवादेः । धर्मव्यापकत्वस्वीकारोऽनुचित इति । सास्नाव्यापकत्वस्वीकारोऽनुचित इत्यर्थः । **गवेतरावृत्तित्वमिति ।** अत्र गवेतरावृत्तित्वमात्रस्य गोत्वत्वशब्दार्थत्वे उदक्षरत्वापतिरत आह । **तथा चेति ।** साध्यवदन्यावृत्तित्वरूपव्याप्तेरग्रहदशायां चेत्यर्थः । **गोत्वविधेयकत्वासंभवादिति ।** गोत्वविधेयकत्वप्रयोजकगोत्वनिरूपितव्याप्तिज्ञानविरहादिति भावः । **गोविधेयकत्वमेवेति ।** एव कारेण गोत्वविधेयकत्वव्यवच्छेदः । **तदनुरोधात् ।** गोविधेयकत्वानुरोधात् । **धर्मिणः ।** गवादेः । **धर्मव्यापकत्वं वाच्यम् ।** सास्नादिव्यापकत्वं वाच्यमित्यर्थः । तादात्म्येन गोः साध्यत्वेपि गोत्वत्वज्ञानसपेक्षितमित्याशंकते । **नन्विति । अनुमिति हेतुत्वादिति ।** तादात्म्येन गोसाध्यकानुमितिहेतुत्वादित्यर्थः । **तत्र च ।** व्याप्तिबुद्धौ च । **तदग्रहे ।** गोत्वत्वाग्रहे । **आदीति ।** गोत्वत्वाद्यग्रहे

ग्रहे धर्मितावच्छेदकतयोपस्थितिध्रौव्येऽपि तद्विशिष्टस्य यत्र न पक्षधर्मताधीस्तत्रैव—'अयं गौ' रित्यनुमितेर्गोविधेयकत्वमावश्यकमिति, तदनुरोधेनैव तादात्म्येन व्यापकत्वं वाच्यमित्याशयः।

---

लक्ष्मीः

इत्यत्रादिपदमित्यर्थः। **तथा च**। पक्षधर्मतापरिग्रहे च। **गवेतरावृत्तित्वव्याप्तेः**। गोत्वत्वस्य। **सास्नाव्यापकतावच्छेदकताग्रहे**। गोत्वं सास्नासमानाधिकरणभेदप्रतियोगितानवच्छेदकमिति ग्रहे। **धर्मितावच्छेदकतयोपस्थितिध्रौव्येपीति**। गोत्वत्वस्य धर्मितावच्छेदकतयाऽपेक्षितत्वेपीत्यर्थः। **तद्विशिष्टस्य**। गोत्वत्वविशिष्टस्य गवेतरावृत्तित्वविशिष्टस्येति यावत्। **न पक्षधर्मताधीः**। गोत्वत्वविशिष्टगोत्वसमानाधिकरण सास्नावती गौरिति पक्षधर्मताज्ञानं नास्तीत्यर्थः।

अयमाशयः। गोत्वं सास्नादिमन्निष्ठाभावप्रतियोगितानवच्छेदकमिति ज्ञाने गोत्वत्वस्य "गवेतरावृत्तित्वरूपस्य गोत्वनिरूपितव्याप्तिरूपस्य" ज्ञानस्यापेक्षितत्वेपि तादृशगोत्वत्वज्ञानं न गोत्वविधेयकानुमितौ कारणम्। व्याप्तिविशिष्टस्य पक्षधर्मताज्ञानस्यैवानुमितिहेतुत्वात्। एवं च यदा तादृशगोत्वत्वविशिष्टस्य गोत्वस्य पक्षे ज्ञानं नास्ति तदा इयं गौरित्यनुमितिगोत्वसाध्यिका न भवितुमर्हति, तदनुमितिकारणाभावादिति तदानीमुत्पन्नाया इयं गौरित्यनुमितेर्गोसाध्यकत्वमवश्यं स्वीकार्यमिति संक्षेपः।

केचित्तु गोत्वत्वरूपसाध्यतावच्छेदकानुपस्थित्या गोत्वसाध्यकानुमित्यौपयिकव्याप्तेर्दुर्ग्रहतया गोत्वसाध्यकानुमित्यसंभवेनेयं गौरित्यनुमितेरपलापप्रसक्त्या गोसाध्यकत्वमावश्यकम्। ननु गोः साध्यत्वेपि गोत्वत्वं धर्मितावच्छेदकीकृत्यैव व्यापकत्वमनुमितिहेतुर्वाच्यः, अन्यथा व्यभिचारस्य हेत्वाभासत्वानुपपत्तेः; प्रमेयत्वेन गोत्वावगाहिव्याप्तिज्ञानस्य व्यभिचारनिश्चयाप्रतिबध्यत्वात्। तथा च गोसाध्यकानुमितिरपि गोत्वत्वाद्यनुपस्थितिदशायां न संभवति धर्मितावच्छेदकज्ञानविरहेण व्यापकतावच्छेदकज्ञानविरहादिति चेन्न। वक्ष्यमाणप्रतियोगिताधर्मिकोभयाभावघटितलक्षणाभिप्रायेणेदमभिहितम्। तत्र स्वरूपतः साध्यतावच्छेदकप्रकारकोभयाभावावगाहिज्ञानस्य हेतुतया

यत्तु—'शुद्धगोत्वावच्छिन्नविधेयकानुमितिं प्रति निरवच्छिन्नगोत्वनिष्ठविशेष्य-

लक्ष्मीः

गोत्वत्वज्ञानानपेक्षणादिति प्राहुः ।

अथ सास्नाव्यापकतावच्छेदकताग्रहे धर्मितावच्छेदकविधया गवेतरावृत्तित्वरूपगोत्वत्वस्योपस्थितिध्रौव्येपि सास्नाहेतुकस्थले तस्य व्याप्तित्वं न संभवति । तथा हि-गोत्वत्वघटकगवेतरावृत्तित्वं गवेतर-निरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाभावः, साध्यवदन्यावृत्तित्व-घटकवृत्तित्वं च हेतुतावच्छेदकसंबन्धावच्छिन्नं ग्राह्यम्, सास्नायाः समवेतत्वसंबन्धेनैव हेतुतया तत्संबन्धावृत्तित्वस्यैव तद्घटकत्वम्, एवं च सास्नाहेतुकस्वरूपतो गोत्वसाध्यकानुमितिजनकतावच्छेदकी-भूतं गवेतरावृत्तित्वं गवेतरनिरूपितसमवेतत्वसंबन्धावच्छिन्नवृत्तित्वा-भावः इति तयोर्भेदसत्त्वात्तदुपस्थितिध्रौव्येपि साध्यवदन्यावृत्तित्व-रूपव्याप्तेरलाभेन कथं गोत्वविधेयकानुमितिस्वीकारः । तथा च तदुपस्थितावपि गोविधेयकत्वमनुमितौ अवश्यं स्वीकार्यम्, एवं च यदा तादृशव्याप्तिविशिष्टहेतोः पक्षवृत्तित्वज्ञानं नास्ति तदा गोविधेय-कानुमितिः स्वीकर्त्तव्येत्युत्तरकरणमसंगतमिति चेन्न । साध्यवदन्या-वृत्तित्वरूपव्याप्तिज्ञानस्य कारणतावच्छेदककुक्षौ हेतुतावच्छेदकसंब-न्धस्याऽप्रवेशेन सास्नाव्यापकतावच्छेदकत्वविशिष्टसाध्यतावच्छेदका-वच्छिन्नसामानाधिकरण्यरूपव्याप्तिज्ञानकाले गो'समवेत'रूपहेतुक-स्थलीय साध्यवदन्यावृत्तित्वज्ञानस्य संभवेन गोत्वविधेयकानुमितेः स्वीकर्त्तुं शक्यतया गोविधेयकत्वे प्रमाणविरहादित्येव शङ्कोदेति । गोरूपहेतुकस्थले च हेतुतावच्छेदकसंबन्धः समवाय एवेति न काप्यनुपपत्तिः ।

परे तु गोपदं पृथिवीपरम्, तथा च सास्नारूपहेतुः समवायसंबन्धेन यत्र वर्तते तत्र पृथिवीत्वमप्यस्तीति न संबन्धभेद इति वदन्ति ।

अन्ये तु नैयायिकमते भ्रमात्मकपरामर्शात्सदनुमित्यंगीकारा-त्समवायन सास्नाहेतुकगोत्वानुमित्यंगीकारे क्षत्यभावात्सास्नायाः समवायेन हेतुत्वमिति न काप्यनुपपत्तिरित्याहुः ।

गोत्वत्वाग्रहकालेपि तादात्म्येन गोसाध्यकानुमितिमुपपादयतां मतं दूषयितुमुपन्यस्यति । यत्तु इति। शुद्धगोत्वावच्छिन्नविधेयकानु-

ताकमेव प्रतियोगितानवच्छेदकत्वज्ञानं हेतुरतो गोत्वत्वाग्रहेऽपि गोत्वे सास्नादिव्यापकतावच्छेदकत्वग्रहसम्भवात् गोसाध्यकानुमितेर्नानुपपत्तिः, अभावलौकिकप्रत्यक्ष एवाधिकरणतावच्छेदकरूपेण तदुपस्थितेर्हेतुत्वादिति मतम्, तत्तुच्छम्—व्यभिचारज्ञानाप्रतिबध्यतया तादृशव्यापकताग्रहस्यानुमित्यहेतुत्वादन्यथा तुल्ययुक्त्या शुद्धगोत्वविधेयकानुमितिं प्रति निरवच्छिन्नगोत्व निष्ठ विशेष्यताकस्य,—

प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य, हेतुत्वादयं गौरित्यनुमितेर्गोत्वत्वाद्यनुपस्थितावपि गोत्वरूपधर्मसाध्यकत्वस्य दुर्वारत्वादिति दिक्। प्राञ्चस्तु-'गोतादात्म्यस्य सास्नाव्यापकत्वग्रहादेव गोस्तादात्म्येन सिद्धिसम्भवान्न तदनुरोधेन गोस्तादात्म्येन व्यापकत्वस्वीकारो युक्तः, सम्बन्धगतव्यापकत्वग्रहादेव सम्बन्धिनोऽनुमितेर्मिश्रादिसम्मतत्वादत उक्तं। गोत्वत्वाद्यग्रहदशायामिति। [ शि० पृ० १६६ ] गोतादात्म्यत्वाद्यग्रहदशायामिति तदर्थं—इत्याहुः। तच्चिन्त्यम्।

---

लक्ष्मीः

**मितिं प्रति**। तादात्म्यसंबन्धावच्छिन्नगोनिष्ठविधेयताकानुमितिं प्रति। **निरवच्छिन्नगोत्वनिष्ठविशेष्यताकं**। गोत्वत्वानवच्छिन्नविशेष्यताकं। एव कारेण गोत्वत्वावच्छिन्नत्वस्य व्यवच्छेदः। **प्रतियोगितानवच्छेदकत्वज्ञानं**। शुद्धगोत्वधर्मिकप्रतियोगितानवच्छेदकत्वप्रकारकज्ञानं। गोवृत्तित्वादिना गोत्वविशेष्यकज्ञानमिति यावत्। ननु गोत्वं सास्नासमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभाववदिति बुद्धौ अधिकरणतावच्छेदकविधया गोत्वत्वज्ञानमपेक्षणीयमित्यत आह। **अभावलौकिकप्रत्यक्ष एवेति**। **व्यभिचारज्ञानाप्रतिबध्यतयेति**। सास्नासमानाधिकरणाभावप्रतियोगितावच्छेदकं गोत्वमिति व्यभिचारधीर्विरोधित्वाभावेनेत्यर्थः। **तादृशव्यापकताग्रहस्य**। गोवृत्तित्वादिना गोत्वविशेष्यकसास्नासमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वग्रहस्य। **अनुमित्यहेतुत्वादिति**। व्यभिचारधीविरोधिज्ञानस्यैवानुमितिहेतुत्वादित्यर्थः। **अन्यथा**। व्यभिचारज्ञानाप्रतिबध्यज्ञानस्याप्यनुमितिहेतुत्वे। **तुल्ययुक्त्या**। गोत्वत्वाग्रहदशायामपीति शेषः। **हेतुत्वादिति**। सास्नासमानाधिकरणाभावाप्रतियोगिगोत्वमिति ज्ञानस्यापि हेतुत्वसंभवादिति भावः। **दुर्वारत्वापत्तेरिति**। तथा च धर्मिणो धर्मव्याप-

**तादात्म्येन गोर्व्यापकत्वग्रहे, सास्नादिना तादात्म्येन गौः, तादात्म्येन गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकः सिध्यति ॥१६॥**

[ 'गोत्वत्वाद्यग्रहदशायामित्यस्य', गोत्वत्वेनाग्रहो यस्मादिति व्युत्पत्त्या गोत्वबाधनिश्चयदशायामित्यर्थः, तथा च तदानीमयं गौरित्यनुमित्यर्थं धर्मिणो धर्मव्यापकत्वमवश्यं स्वीकार्यमित्यपि वदन्ति । ]

गौरिति ।—सिध्यतीति परेणान्वयः ।

लक्ष्मीः

कत्वं दुरुपपादं स्यादिति भावः । **सास्नाव्यापकत्वग्रहादेवेति ।** स्वरूपेणेत्यादिः। एवकारेण तादात्म्येन गोर्व्यवच्छेदः । **गोस्तादात्म्येन सिद्धिसंभवादिति ।** असतिप्रतिबन्धके इतिशेषः । **तदनुरोधेन ।** तादात्म्येन गवानुमित्यनुरोधेन । ननु संबन्धे व्यापकत्वग्रहे संबन्धस्यैवानुमितिभविष्यतीत्यत आह । **संबन्धगतेति । तदर्थः ।** गोत्वत्वाद्यग्रहदशायामित्यस्यार्थः । तथा च गोतादात्म्यत्वाग्रहदशायां गोतादात्म्ये सास्नाव्यापकत्वग्रहासंभवात्तदानीमियं गौरित्यनुमितेरुपपत्तये धर्मिणो धर्मव्यापकत्वं स्वीकार्यमिति भावः ।

न च गोतादात्म्यस्य गोत्वरूपतया गोतादात्म्यत्वेन व्यापकत्वग्रहे गोत्वत्वग्रहोप्यावश्यक इति वाच्यम् । तादात्म्यस्यातिरिक्तत्वाभ्युपगमात् । अन्यथा तादात्म्यसंबन्धेन वन्ह्यादिसाध्ये तद्रूपादिहेतौ हेत्वधिकरणवृत्त्यभावप्रतियोगिनः साध्यतावच्छेदकतादात्म्यसंबन्धेन संबन्धिनोऽप्रसिध्द्याऽव्याप्त्यापत्तेः, तथाविधतादात्म्यस्य वह्नित्वादिरूपतया घटपटादेर्व्यधिकरणसंबन्धत्वात् ।

**तच्चिन्त्यमिति ।** चिन्ताबीजन्तु तादात्म्येन व्यापकत्वग्रहे संसर्गमर्यादया तादात्म्यत्वरूपेण तादात्म्यग्रहेण कथं तादात्म्यत्वाग्रहऽसंभव इति ।

धर्मगतव्यापकत्वग्रहाद् धर्मिणोऽनुमितिरिति सर्वाननुमतत्वं चिन्ताबीजमित्यपरे ।

हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकं गोतादात्म्यत्वमिति धियोऽनुमितिहेतुतादृशज्ञानस्य गोतादात्म्यवानित्यनुमितावपि हेतुतया तादृशज्ञानानन्तरमनुमितेर्नियमत इयं गौः, गोतादात्म्यवतीत्युभयविषय-

एवं च संयोगेन गगनादेरपि द्रव्यत्वव्याप्यत्वम् । वृत्त्यनियामकसंयोगमात्रस्याभावप्रतियोगितावच्छेदकसंबन्धरूपत्वे सा-

एवंचेति । सामानाधिकरण्यादौ संबन्धित्वनिवेशे चेत्यर्थः । संयोगत्वेन संयोगमात्रस्य प्रतियोगितावच्छेदकसंबन्धत्वे वृत्त्यनियामकसंयोगस्यापि तत्त्वं सर्वजनसिद्धमतो मात्रपदम् । संबन्धत्वे इति । अन्यथा तादृशसंबन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिध्द्या गगनादेः पृथिवीत्वव्यापकत्वं दुर्घटमेव स्यादिति भावः ।

लक्ष्मीः

ताशालित्वापत्तिरिति मिश्रचरणाः ।

**गोत्वत्वेनेति । अग्रहः ।** गोत्वस्येत्यादिः । **तदानीमिति ।** गोत्वाभाववानयमिति निश्चयदशायामित्यर्थः । गोत्वप्रकारकानुमितेरसंभवेनेति भावः । इयं गौरित्यनुमितेस्तादात्म्येन गोविधेयकत्वमेवेति यावत् । वदन्तीत्यस्वरसः, तद्बीजं तु धर्मिणि गोत्वाभावनिश्चयसत्वे गोत्वप्रकारकबुद्धिवत् तादात्म्येन गोप्रकारकबुद्धिरपि भवितुं नार्हतीति ।

**सामानाधिकरण्यादौ इति ।** आदिपदाद् हेतुसामानाधिकरण्यप्रविष्टहेत्वधिकरणत्वस्य परिग्रहः । **दीधितौ—संयोगेन गगनादेरपि द्रव्यत्वव्याप्यत्वमिति ।** तथा च द्रव्यं गगनादित्यत्र गगस्याधिकरणाप्रसिद्धावपि संयोगेन गगनसंबन्धिवृत्त्यभावाप्रतियोगिद्रव्यत्ववत्संबन्धित्वस्य प्रसिध्द्या यथोक्तव्याप्तिसत्वनिर्वाह इति भावः । **तत्त्वं ।** संबन्धत्वं । **संबन्धरूपत्वे इति ।** संयोगत्वेन संयोगमात्रस्य प्रतियोगितावच्छेदकसंबन्धत्वे वृत्त्यनियामकसंयोगेपि तथात्वस्येष्टत्वेपि वृत्त्यनियामकसंयोगत्वेन प्रतियोगितावच्छेदसंबन्धत्वे इत्यर्थः । **दीधितौ । पृथिवीत्वादिव्यापकत्वमपीति ।** तथा च गगनवान् पृथिवीत्वादित्यत्र पृथिवीत्वाधिकरणवृत्त्यभावो न गगनाभावः गगनस्य सर्वमूर्तसंयोगित्वात् किन्तु घटाद्यभाव एव तत्प्रतियोगितानवच्छेदकत्वं गगनत्वे सत्वादिति भावः । **अन्यथा ।** वृत्त्यनियामकसंयोगस्य प्रतियोगितानवच्छेदकत्वे । **तादृशेति ।** वृत्त्यनियामकसंयोगेत्यर्थः । **दुर्घटमेव स्यादिति ।** तथा

ध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धित्वाभिधाने वा पृथिवीत्वादिव्यापकत्वमपि । तदभावतोपि पृथिव्यादेः संयोगेन तत्संबन्धित्वात् ।

---

तादृश संबन्धस्य प्रतियोगितानवच्छेदकत्वेपि द्वितीयविवक्षानुसारेण व्यापकत्वं संगमयति । **साध्यतावच्छेदकसंबन्धेनेति** । तथा च संबन्धान्तरावच्छिन्नघटाभावमादायैव लक्षणसमन्वय इति भावः । द्रव्यत्वस्य गगनासंयुक्तविभ्वन्तरे तद्व्यभिचारित्वाद् हेत्वन्तरमाह । **पृथिवीत्वादीति** । **व्यापकत्वमपीति** । गगनादेरिति पूर्वेणान्वयः ।

---

लक्ष्मीः

च वृत्त्यनियामकसंयोगसंबन्धावच्छिन्नप्रतियोगित्वं स्वीकृत्यैव वृत्त्यनियामकसंयोगेन गगनादेः पृथिवीत्वव्यापकत्वं संपादनीयमिति भावः । **तादृशसंबन्धस्य** । वृत्त्यनियामकसंयोगस्य । **प्रतियोगितानवच्छेदकत्वेपीति** । तथा च साध्यतावच्छेदकीभूतवृत्त्यनियामकसंयोगसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिध्या "साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताया अनवच्छेदकमिति" प्रथमकल्पोक्तरीत्या न गगनादेः पृथिवीत्वव्यापकत्वं संभवतीति भावः । **द्वितीयकल्पानुसारेण** । "यद्वा साध्यतावच्छेदकसंबन्धेन स्वप्रतियोग्यसंबन्धित्वं हेतुमतो वक्तव्यमिति" दीधितिग्रन्थानुसारेण । साध्यतावच्छेदकसंबन्धेन स्वप्रतियोग्यसंबन्धिहेतुसंबन्धिवृत्त्यभावनिरूपितप्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकेत्यादिकल्पानुसारेणेति यावत् । **व्यापकत्वं** । पृथिवीत्वव्यापकत्वं । **संबन्धान्तरावच्छिन्नघटाभावमादायैवेति** । वृत्त्यनियामकसंबन्धभिन्नसंबन्धावच्छिन्नप्रतियोगिताकघटाभावमादायैवेत्यर्थः । समवायसंबन्धावच्छिन्नप्रतियोगिताकघटाभावमादायैवेति यावत् । **लक्षणसमन्वय इति** । गगनवान् पृथिवीत्वादित्यत्र समवायेन घटाभावस्य साध्यतावच्छेदकीभूतवृत्त्यनियामकसंयोगेन स्वप्रतियोग्यसंबन्धिपृथिवीत्वसंबन्धि घटादिनिष्ठत्वेन घटाभावीय समवाय संबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य गगनत्वे सत्वाल्लक्षणसमन्वय इति भावः ।

सिद्धिरपि तस्य तथैव न तु वृत्तिनियामकसंबन्धेन, तेनासंबन्धित्वादव्यापकत्वाच्च । व्यक्तीभविष्यति चैतदुपरिष्टात् ।

---

ननूत्पत्तिकाले जन्यस्य प्रलयकाले नित्यस्य पृथिवीमात्रस्य गगनाभाववत्त्वात्कथं तस्य पृथिवीत्वव्यापकत्वमत आह । तदभाववतोपीति । गगनाभाववतोपीत्यर्थः । **संयोगेनेति** । वृत्त्यनियामकसंयोगेनेत्यर्थः । **तत्संबन्धित्वात्** । गगनादिसंबन्धित्वात् ।

नन्वेवं निरुक्तव्याप्तिज्ञानाद् घटो गगनवानित्यनुमितिः प्रमा स्यादत आह । सिद्धिरपीति । **तथैव** । वृत्त्यनियामकसंयोगेनैव, तथा च तादृशसंबन्धेन गगनानुमितेः प्रमात्वमिष्टमेवेति भावः ।

---

लक्ष्मीः

ननु द्रव्यत्वव्यापकत्वमपीत्येव कथं नोक्तमित्यत आह । **द्रव्यत्वस्येति** । **तद्व्यभिचारित्वादिति** । गगनव्यभिचारित्वादित्यर्थः । विभुद्वयसंयोगानभ्युपगमेन गगनाऽसंयुक्तद्रव्ये आत्मादौ द्रव्यत्वस्य तद्व्यभिचारित्वादिति भावः । **तस्य** । गगनस्य । **पृथिवीत्वव्यापकत्वम्** । पृथिवीत्ववन्निष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । **गगनादिसंबन्धित्वादिति** । तथा च तादृशगगनाभावश्च न साध्यतावच्छेदकसंबन्धेन वृत्त्यनियामकसंयोगेन प्रतियोग्यसंबन्धि हेतुमन्निष्ठ इत्यभावान्तरमादाय लक्षणसत्वं निष्प्रत्यूहमिति भावः । **दीधितौ-तस्य** । गगनस्य । **वृत्त्यनियामकसंयोगेनैवेति** । एव कारेण वृत्तिनियामकसंयोगव्यवच्छेदः । तदेवाह । **दीधितौ** । **नत्विति** । **तादृशसंबन्धेन** । वृत्त्यनियामकसंयोगेन । **गगनानुमितेः** । घटो गगनवानित्यनुमितेः । **दीधितौ-तेन** । वृत्तिनियामकसंयोगेन । **असंबन्धित्वादिति** । तत्संबन्धेन साध्यसंबन्धिसंबन्धित्वरूपसाध्यसामानाधिकरण्याप्रसिद्धेः । ननु वृत्तिनियामकसंयोगसंबन्धघटितसामानाधिकरण्यस्य परामर्शाविषयत्वेपि वृत्त्यनियामकसंयोगघटितसाध्यसामानाधिकरण्यावगाहिपरामर्शाद् वृत्तिनियामकसंयोगसंबन्धेन गगनानुमितौ बाधकाभाव इत्यत आह । **येन संबन्धेनेत्यादि** । **भासते इति** । तथा च वृत्तिनियामक

सामानाधिकरण्यधियो हेतुत्वस्य तदंशे संबन्धविशेषनिवेशस्य वाऽनङ्गीकारमते प्याह। अव्यापकत्वाच्चेति। तेनेत्यनुषज्यते। तथा च यादृशसंबन्धेन साध्यस्य हेतुव्यापकत्वं गृह्यते, तेनैव संबन्धेन साध्यसिद्धिः फलमतो वृत्तिनियामकसंबन्धेन साध्यस्य हेतुव्यापकत्वासंभवादेव न तेन साध्यस्य प्रमानुमितिरिति भावः।

ननु वृत्तिनियामकसंयोगेनापि गगनस्य पृथिवीत्वादिव्यापकत्वं दुर्वारं, तादृशसम्बन्धेन गगनसम्बन्ध्यप्रसिद्धया गगनाभावस्य प्रतियोगिव्यधिकरणत्वभावात्, तादृशाभावान्तरप्रतियोगित्वस्य च गगनादावसत्वादत आह। व्यक्तीत्यादि। इदं वृत्तिनियामकसम्बन्धेन गगनादेरव्यापकत्वं, तथा च निरुक्तप्रतियोगिप्रतियोगिकत्वेत्यादिना वक्ष्यमाणं "प्रतियोग्यसामानाधिकरण्यं" वृत्तिनियामकसम्बन्धेन गगनाभावेऽपि स्थास्यतीति भावः।

* नन्विति *।—कालिकसम्बन्धेन गोत्वादौ साध्ये घटादिरूपकालोपाधि-

---

संयोगेन गगनसंबन्धिसंबन्धित्वस्य साध्यसामानाधिकरण्यस्य परामर्शाऽविषयतया तेन संबन्धेन न गगनानुमितिसंभवः। **सामानाधिकरण्यधियो हेतुत्वस्येति**। अस्याऽनङ्गीकारमते इत्यनेनाऽन्वयः। साध्यसंबन्धितामात्रं वा व्याप्तिरित्युक्तत्वात्। **तदंशे**। सामानाधिकरण्यघटके साध्ये हेतौ च। संबन्धविशेषनिवेशस्यानंगीकारमते इति। येन केनापि संबन्धेन साध्यसाधनयोः सामानाधिकरण्यज्ञानादनुमितिरित्यस्यापि उक्तत्वात्। तथा च येन केनापि संबन्धेन सामानाधिकरण्यज्ञानस्यानुमितिहेतुतया अनुमितौ संबन्धभाननियामकाभावाद्वृत्त्यनियामकसंयोगेन गगनसंबन्धित्वज्ञानादपि वृत्तिनियामकसंयोगेन गगनानुमितिः स्यादिति भावः। **अव्यापकत्वाच्चेति**। वृत्तिनियामकसंयोगेनाव्यापकत्वाच्चेत्यर्थः। **हेतुव्यापकत्वासंभवादेवेति**। वृत्त्यनियामकसंयोगेनैव। गगनाभावस्य प्रतियोगिसमानाधिकरणतया वृत्तिनियामकत्वे एव प्रतियोगिव्यधिकरणाभावप्रतियोगिताया गगने सत्वेन तत्संबन्धस्य व्यापकत्वाऽघटकत्वादिति भावः। **तादृशसंबन्धेन**। वृत्तिनियामकसंयोगेन। **वक्ष्यमाणमिति**। साध्यतावच्छेदकसंबन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभाववत्तादृशप्रतियोगितानवच्छेदकेत्यादिना वक्ष्यमाणमित्यर्थः। साध्यतावच्छेदकीभूतवृत्तिनियामकसंयोगे पृथिवीत्वाधिकरणघटानुयोगिकत्वसत्वे-

**नन्वष्टद्रव्यातिरिक्त । द्रव्यात्मककालमात्रवृत्तिधर्म्मस्य,—**

मात्रवृत्तिघटत्वादिहेतौ नाव्याप्तिः। भिन्नकालीनतत्तद्व्यक्तित्वावच्छिन्नाभावस्यैव घटादौ प्रतियोगिवैय्यधिकरण्यसम्भवादत उक्तम्,—* अष्टद्रव्यातिरिक्तेति * । पृथिव्यादि-चतुर्द्रव्यातिरिक्तेति तु ज्यायः, गगनादेः कालत्वविरहादेव तद्व्युदासादिति ध्येयम् ।

कर्मात्मकखण्डकालस्यापि भिन्नकालीनतत्तद्व्यक्तित्वावच्छिन्नाभावप्रतियोग्यन-धिकरणत्वप्रसिद्ध्या तन्मात्रवृत्तिस्पन्दत्वादिहेतौ नाव्याप्तिरतश्चरम—'द्रव्य'—पदम् ।

---

पि गगनप्रतियोगिकत्वविरहेणोभयाभावसत्वाद् भवति गगनाभावः प्रतियोगिव्यधिकरण इत्याशयेनाह । **गगनाभावेपीति** ।

कालिकसंबन्धेन घटस्य साध्यत्वे स्वरूपेण महाकालत्वहेतौ कालो घटवान् महाकालत्वादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसि-द्धिनिबन्धनाव्याप्तिमाशंकते । **दीधितौ-नन्वित्यादिना** । अष्टद्रव्या-तिरिक्तो यो द्रव्यात्मको महाकालस्तन्मात्रवृत्तिधर्मस्तस्येत्यर्थः । जन्य-मात्रस्य कालोपाधितया घटादिकालोपाधिमात्रवृत्तिघटत्वादिवारणा-याष्टद्रव्यातिरिक्तेति । पृथिव्यादिचतुर्द्रव्यातिरिक्तेत्यर्थः । कर्मात्मक-कालोपाधिमात्रवृत्तिस्पन्दत्ववारणाय द्रव्यात्मक इत्युक्तम् । महाकाल-वृत्तिजन्यसाधारणकालत्ववारणाय मात्रपदम् । तादृशो धर्मो महा-कालत्वादिः । तस्य स्वरूपेण हेतुतालाभाय धर्मपदम् । संयोगवान् महाकालत्वादित्यत्र समवायेन संयोगस्य साध्यतायां समवायेन घटाभाव एव प्रतियोगिव्यधिकरणतया प्रसिद्ध इत्यत उक्तं । **विशेषणा-ताविशेषेणेति** । कालिकविशेषणतयेत्यर्थः । व्याप्यवृत्तिप्रमेयत्वादि-साध्यकस्थले प्रतियोगिवैयधिकरण्याप्रवेशादुक्तं । **अव्याप्यवृत्तीति** । घटादिकं द्रव्यत्वादिकं चेत्यर्थः । **किमपि व्यापकं न स्यादिति** । तथा च घटवान् महाकालत्वादित्यत्राव्याप्तिरिति स्पष्टार्थः । **जागदीश्यां-घटत्वादिहेताविति** । गोत्ववान् घटत्वादित्यत्रेत्यर्थः । अव्याप्त्य-भावं दर्शयति । **भिन्नकालीनेति** । घटासमानकालीनेत्यर्थः । तथा च घटत्वाधिकरणे घटात्मककाले घटासमानकालीनतत्तद्व्यक्त्यभावप्रति-योगितावच्छेदकतत्तद्व्यक्तित्वावच्छिन्नासंबन्धित्वस्य हेतुमति घटे सत्वेन तादृशाभावमादाय लक्षणसमन्वयाद्व्याप्त्यभावादिति भावः ।

विशेषणताविशेषेण अव्याप्यवृत्ति किमपि व्यापकं न स्यात् ।

तथाविधकालत्वादावप्युक्तदिशा नाव्याप्तिरतो—'मात्र'—पदम् ।

स्वरूपसम्बन्धेन हेतुतालाभाय,—'धर्म'—पदम्,

अन्यथा कालिकादिसम्बन्धेन महाकालत्वादि अधिकरणघटादौ प्रतियोगि—व्यधिकरणातीत्—तत्तद्व्यक्तित्वावच्छिन्नाऽभावप्रसिद्ध्या नाव्याप्तिरिति ध्येयम् ।

तादृशधर्मस्य महाकालत्वादेः समवायादिना व्यापकत्वं संयोगाद्यव्याप्यवृत्तेः

लक्ष्मीः

तथा च घटत्वस्य अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तित्वाभावान्नोद्देश्यतावच्छेदकाक्रान्तत्वम् । घटत्वस्याष्टद्रव्यारिक्तद्रव्यात्मककालवृत्तित्वाभावात् घटात्मककाले सत्वात् । **ध्येयमिति** । तान्त्रिकैर्महाकालस्याऽष्टद्रव्यातिरिक्तपदेनैवाऽभिधानेन चतुर्द्रव्यातिरिक्तेत्यभिधानेऽन्यपरत्वशंकानिरासाय विशिष्याभिधानापेक्षा स्यात् इति अष्टद्रव्यातिरिक्तत्वेनाभिधानम् । तथाभिधाने तु तैर्महाकालस्यैव तथाभिधानेनाऽन्यपरत्वशंकाया असंभवेन न विशिष्याभिधानापेक्षेति तथाभिधानमावश्यकमिति भावः । **स्पन्दत्वादिहेतौ** । गोत्ववान् स्पन्दत्वादित्यत्र । **नाव्याप्तिः** । स्पन्दत्वाधिकरणे स्पन्दे तदसमानकालीनव्यक्त्यभावस्य स्वप्रतियोगिव्यधिकरणस्य प्रतियोगितानवच्छेदकगोत्वत्वावच्छिन्नेत्यादिरीत्या लक्षणसमन्वयेनाव्याप्त्यभावादुक्तं द्रव्यात्मकेत्यत्र द्रव्यपदम् । स्पन्दत्वस्य द्रव्यात्मककालमात्रवृत्तित्वाभावान्नोद्देश्यतावच्छेदकाक्रान्तत्वमिति भावः । **तथाविधेति** । अष्टद्रव्यातिरिक्तद्रव्यात्मककालवृत्तीत्यर्थः । **उक्तदिशेति** । कालत्वाधिकरणखण्डकालव्यक्तिनिष्ठतदसमानकालीनतत्तद्व्यक्त्यभावमादाय लक्षणसमन्वयादित्यर्थः । **अतः** । तथाविधकालत्वस्योद्देश्यतानवच्छेदकत्वसंपादनायेति यावत् । **मात्रपदमिति** । तदर्थश्च अष्टद्रव्यातिरिक्तद्रव्यात्मककालेतरावृत्तित्वे सति तादृशकालवृत्तित्वम् । तथाविधद्रव्येतरघटादिवृत्तित्वेन तथाविधद्रव्यमात्रावृत्तित्वात्कालत्ववारणम् । **अन्यथा** । स्वरूपसंबन्धेन हेतुत्वास्वीकारे । **प्रसिध्येति** । विषयिताविषयतान्यसंबन्धेन विभिन्नकालीनयोराधाराधेयभावविरहादिति

स्वावच्छेदकसम्बन्धे प्रतियोगिनोऽसम्बन्धिनि

सुघटमित्यत उक्तं, विशेषणतेति। कालिकविशेषणतेत्यर्थः।

व्याप्यवृत्ति-प्रमेयत्वादेः प्रतियोगिवैय्यधिकरण्याघटितमेव कालिकसम्बन्धावच्छिन्नव्यापकत्वं सम्भवत्यत उक्तम्, अव्याप्यवृत्तीति। तादृशसाध्यं,—घटादिक, द्रव्यत्वादिकञ्च, तद्वतोऽपि—कालस्य, तदनधिकरणदेशावच्छेदेन कालिकसम्बन्धावच्छिन्नतदभाववत्त्वात्;

न ह्येवम्विधो वाच्यत्वादिः, तदनधिकरणदेशाप्रसिद्ध्या तदवच्छेदेन कालिकसम्बन्धावच्छिन्नवाच्यत्वाभावस्य दैशिकविशेषणतया कालेऽसम्भवादिति भावः।

लक्ष्मीः

भावः। **तादृशधर्मस्य**। अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मस्य। **महाकालत्वादेरिति**। निरूपितत्वं षष्ठ्यर्थः। अन्वयश्चास्य व्यापकत्वमित्यनेन। समवायादिना इत्यत्रादिपदात्स्वरूपपरिग्रहः। एवं संयोगादीत्यत्रादिपदात्संयोगाभावपरिग्रहः। तथा च महाकालत्वसमानाधिकरणसमवायादिना प्रतियोगिव्यधिकरणघटाभावप्रतियोगितानवच्छेदकत्वस्य संयोगत्वादौ सत्वाल्लक्षणसमन्वय इति भावः। **कालिकविशेषणतेति**। तथा च कालिकेन संयोगादिसाध्यकस्थलेपि कालिकेन प्रतियोगिव्यधिकरणाभावाप्रसिध्या संयोगादेर्महाकालत्वव्यापकत्वानुपपत्तिः। **तद्वतोपि**। घटादिमतोपि। **तदनधिकरणदेशावच्छेदेन**। घटानधिकरणदेशावच्छेदेन। **तदभाववत्वात्**। घटाभाववत्वात्। तथा च स्वाधिकरणवृत्यभावप्रतियोगितया घटादिकमव्याप्यवृत्तीति भावः। **एवं विधः**। स्वाधिकरणवृत्यभावप्रतियोगी। **तदनधिकरणदेशाप्रसिध्येति**। वाच्यत्वादेःकेवलान्वयित्वादिति भावः। **तदवच्छेदेन**। अनधिकरणदेशावच्छेदेन। **कालेऽसंभवादिति**। न च कालिकसंबन्धेन वाच्यत्वानधिकरणगगनाद्यवच्छेदेन काले कालिकसंबन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावः संभवतीति वाच्यम्। तदनधिकरणत्वघटकाधिकरणताया अव्याप्यवृत्तिताघटक-

**काले वर्तमानस्याभावस्य प्रतियोगितायां,—तत्सम्बन्धावच्छिन्नत्वस्य,—तेन सम्बन्धेन यत्प्रतियोगिसम्बन्धि तदन्यत्वस्य च —कालेऽसम्भवात् ।**

---

न स्यादिति । तथा च कालो घटवान्महाकालत्वादित्यादौ व्याप्तिलक्षणाऽव्याप्तिरिति भावः । प्रथमविवक्षानुसारेण दोषं सङ्गमयति,—स्वावच्छेदकेति ।

प्रतियोगितावच्छेदकसम्बन्धेनेत्यर्थः । काले=महाकाले, तत्सम्बन्धावच्छिन्नत्वस्य=साध्यतावच्छेदकीभूतकालिकसम्बन्धावच्छिन्नत्वस्य, 'असम्भवा'दिति परेणान्वयः ।

---

लक्ष्मीः

संसर्गातिरिक्तसंबन्धसामान्येन विवक्षितत्वात । अन्यथा निरुक्तरीत्या सर्वस्यैवाव्याप्यवृत्तितया साध्यघटकाऽव्याप्यवृत्तिपदमव्यावर्तकं स्यात् । **तथा च** । कस्यापि अव्याप्यवृत्तेर्व्यापकत्वाभावे च ।

**प्रथमविवक्षानुसारेणेति** । प्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावीय साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताघटितलक्षणानुसारेणेत्यर्थः । **दोषं** । तादृशप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिरूपं । **संगमयतीति** । तथा च समवायेन घटत्वावच्छिन्नासंबन्धिमहाकालवृत्तिसमवायसंबन्धावच्छिन्नप्रतियोगिताकघटाभावस्य प्रसिद्धत्वेपि तदीयप्रतियोगितायां साध्यतावच्छेदककालिकसंबन्धावच्छिन्नत्वविरहात्प्रथमकल्पोक्तरीत्या घटादेर्न महाकालत्वव्यापकत्वम् । **असंभवादिति** । कालिकसंबन्धेन वृत्तिमन्मात्रस्यैव महाकाले वृत्तेः, अवृत्तिगगनादेश्च तेन संबन्धेन संबन्ध्यप्रसिद्ध्या कस्यापि कालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिहेतुमद्वृत्तित्वासंभवात, समवायसंबन्धावच्छिन्नघटाभावस्य तथात्वेपि तत्प्रतियोगितायाः साध्यतावच्छेदकीभूतकालिकसंबन्धानवच्छेद्यत्वादिति भावः ।

**द्वितीयविवक्षानुसारेणेति** । साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिहेतुमद्वृत्त्यभावीय संबन्धावच्छिन्नत्वाविशेषितप्रतियोगिता-

लक्ष्मीः

निवेशकल्पाभिप्रायेणेत्यर्थः। समवायादिना पटाद्यभावप्रसिद्धावपि कालिकेन पटाद्यभावप्रतियोगितावच्छेदकपटत्वावच्छिन्नासंबन्धित्वस्य महाकालेऽसत्त्वात्साध्यतावच्छेदकीभूतकालिकसंबन्धेन स्वप्रतियोगिता-वच्छेदकावच्छिन्नासंबन्धित्वघटितं निरुक्तव्यापकत्वमप्रसिद्धमेवेत्याशयः। गगनाभावप्रतियोगिनः कालिकसंबन्धेन संबन्धिरूपप्रतियोग्यप्रसिद्ध्या तेन संबन्धेन प्रतियोगिसंबन्धिभिन्नत्वाप्रसिद्धिं स्फुटीकर्तुं प्रतियोग्यसंबन्धित्वस्येत्यनभिधाय यत्प्रतियोगिसंबन्धितदन्यत्वस्येत्यसमासेनाभिहितम्।

अथ व्यापकं न स्यादित्यक्षरानुरोधेनापत्तिः प्रदर्शिता। सा च न संभवति—तथाहि—अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मनिरूपितव्यापकत्वाभावस्याऽव्याप्यवृत्तिधर्मे आपत्तिर्न संभवति, तादृशधर्मनिरूपितव्यापकत्वस्यैवाऽप्रसिद्ध्या तदभावस्यापाद्यत्वासंभवात्, 'प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वविरहप्रयुक्तः—किंवा साध्यतावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणत्वासंभवप्रयुक्तो व्यापकत्वासंभव' इति जगदीशेनोक्तत्वात्। न च तादृशमहाकालत्व समानाधिकरणाभावप्रतियोगितानवच्छेदकत्वसंबन्धावच्छिन्नप्रतियोगिताकतादृशधर्माभावस्याव्याप्यवृत्तितावच्छेदकघटत्वादावापत्तिर्दीयते, तादृशसंबन्धस्य व्याप्यवृत्तिप्रमेयत्वादौ प्रसिद्ध्या घटत्वादावसत्वेन तादृशाभावस्य तत्र सत्वादिति वाच्यम्। इष्टत्वात्। तथाहि—तत्संबन्धावच्छिन्नप्रतियोगिताकतादृशधर्माभावस्य नापत्तिः संभवति तादृशधर्मे तदभास्य स्वतः सिद्धत्वात्। न चाष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मस्यान्यतरसंबन्धावच्छिन्नप्रतियोगिताकाभास्याऽव्याप्यवृत्तितावच्छेदकधर्मे आपत्तिः, अन्यतरसंबन्धश्च स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्व,—स्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपः, तथा चान्यतरसंबन्धघटकप्रथमसंबन्धः प्रमेयत्वादौ प्रसिद्धः, द्वितीयस्तु महाकालस्वरूपधर्मस्य व्यधिकरणसंबन्धः, तादृशान्यतरसंबन्धावच्छिन्नप्रतियोगिताकतादृशधर्माभावस्याऽव्याप्यवृत्तितावच्छेदके सत्वेनाऽऽपत्तिः संभवत्येव। नह्यत्रापीष्टापत्तिः संभवति, प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकत्वस्य वस्तुगत्या घट-

लक्ष्मीः

त्वादौ सत्वेन "विशेषरूपेण निवेशाकरणेन" व्यापकत्वासंभवादिति व्यापकत्वाभावस्यैवापत्तिः। आपादकं च प्रतियोगिव्यधिकरण-हेतुसमानाधिकरणाभावप्रतियोगितात्वव्यापकाभावप्रतियोगितानिरू-पितनिष्ठत्वसंबन्धावच्छिन्नावच्छेदकतावत्संबंधावच्छिन्नाऽव्याप्यवृत्ति-तावच्छेदकत्वमेव।

तथा च घटत्वं यदि तादृशान्यतरसंबन्धावच्छिन्नप्रतियोगिताक महाकालत्वाभाववत्स्यात् तदा प्रतियोगिव्यधिकरणहेतुसमानाधिक-रणाभावप्रतियोगितात्वव्यापकाभावप्रतियोगितानिरूपित्वनिष्ठत्वसंब-न्धावच्छिन्नावच्छेदकतावत्संबन्धावच्छिन्नाऽव्याप्यवृत्तितावच्छेदकं स्यादित्यापत्तिर्बोध्या। **तादृशप्रतियोगितात्वव्यापकाभावश्च।** सा-ध्यतावच्छेदकसंबन्धावच्छिन्नत्वाभावः, प्रकृते कालिकसंबन्धावच्छि-न्नत्वाभावः। निरूपकतासंबन्धेन कालिकसंबन्धनिष्ठावच्छेदकत्वा-भाव इति यावत्। किं वा हेत्वधिकरणवृत्तिभेदीय प्रतियोगितावच्छे-दकीभूता याऽधिकरणता तन्निरूपितनिरूपकतानवच्छेदकसंबन्धाव-च्छिन्ना, व्याप्यवृत्तितावच्छेदकत्वमापादकम्। साध्यतावच्छेदक-संबन्धावच्छिन्नप्रतियोगिताघटितमेकम्, साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यम्, प्रतियोगिता च यथाकथंचित्संबन्धेनेति द्वितीयम्, तथा च कालो घटवानित्यत्र प्रतियोगिव्यधिकरणहेतुस-मानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्न-त्वविरहेण तादृशाभाव एव व्यापकः। द्वितीये कालिकसंबन्धेन प्रति-योगिवैयधिकरण्यस्यासत्वेनान्यतरसंबन्धावच्छिन्ननिरूपकतानिरूपि-तानधिकरणत्वस्यैव सत्वेन तादृशनिरूपकतानवच्छेदकसंबन्धः कालि-क एव भविष्यतीति वाच्यम्। आपत्तिं प्रति आपाद्य व्यतिरेकनिश्च-यस्य कारणत्वेन तस्यासत्वेन तादृशापत्तेरशक्यत्वात्, तादृशधर्मा-भावस्य तत्र सत्वेन तदभावस्याऽसत्वादिति चेत्। अत्र सिद्धान्तानु-यायिनः। अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्ति महाकालत्वरूपे-धर्मलिंगकाऽव्याप्यवृत्तिघटादिविधेयकानुमितिः यदि प्रतियोगिव्यधि-करणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदका-वच्छिन्नसमानाधिकरणहेतुमान् पक्ष इति निरूप्यनिरूपकभावापन्न-विषयताशालिज्ञानजन्या न स्यात्तदाऽभ्रान्तपुरुषसमवेता न स्यादि

द्वितीयविवक्षानुसारेणाह—तेन सम्बन्धेनेति ।—साध्यतावच्छेदकीभूतकालिकसम्बन्धेनेत्यर्थः ।

ननु—महाकालान्यत्वविशिष्टघटाभाव एव महाकाले प्रतियोगिव्यधिकरणः सुलभः—

न चात्र 'विशेषणताविशेष' पदेन महाकालनिरुपितविशेषणताया एव विवक्षितत्वात्तादृशसम्बन्धेन निरुक्तप्रतियोगिवैय्यधिकरण्याप्रसिद्ध्यैवोक्ताऽभावस्यापि प्रतियोगिवैय्यधिकरण्यासम्भव इति वाच्यम् ;—

---

लक्ष्मीः

व्यापाद्यापादकभावस्यैव प्रकृते संभवात् । प्रकृते तथा व्याप्तेरप्रसिद्धावपि निरूप्यनिरूपकभावापन्नविषयताशालिज्ञानसंभवान्न कोपि दोषः ।

वस्तुतो ग्रन्थोऽयमनुमानपरः, तथाहि—अव्याप्यवृत्तिपदार्थः—अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मनिरूपितप्रतियोगिवैयधिकरण्यघटितव्यापकत्वप्रकारकज्ञानीय विशेष्यत्वाभाववान् साध्यतावच्छेदकसंबन्धावच्छिन्नत्वाभाववृत्तिनाद्दशधर्मकालीनाव्याप्यवृत्तिपदार्थत्वात् । विशेष्यत्वाभावश्च प्रमाणविशेष्यत्वीय स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकः । प्रमात्वं च भ्रमसामान्यभिन्नत्वम् । धर्मे कालवृत्तित्वं च स्वाश्रयवृत्तिप्रतियोगितात्वव्यापकत्वसं० स्वं धर्मः । प्रतियोगित्वे स्वाश्रयवृत्तित्वं च स्वावच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्ननिरूपकताकाधिकरणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसं० । स्वं०प्रतियोगिता । द्वितीयहेतुश्च प्रतियोगितात्वव्यापकताद्दशधर्माधिकरणवृत्तित्वकालीनाऽव्याप्यवृत्तिपदार्थत्वम् । ताद्दशधर्माधिकरणावृत्तित्वं च साध्यतावच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधिकरणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसं० ।

अपरे तु अव्याप्यवृत्तितावच्छेदकधर्मं पक्षीकृत्य महाकालत्वलिंगकानुमितीय कालिकसंबन्धावच्छिन्नविधेयतावच्छेदकत्वाभावः साध्यः । महाकालत्वलिङ्गकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकपक्षविषयतानिरूपितवृत्तित्वविषयतानिरूपिताधिकरणविषयतानिरूपितसाध्यविषयतानिरूपितप्रमीयविषयत्वाभावो हेतुः, एतदनुमानस्याग्रे दुष्टत्वमिति वदन्ति । अधिकन्तु गंगायाम् ।

घटवान् महाकालत्वादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धि-

लक्ष्मीः

माशंकते । नन्विति । महाकालान्यत्वविशिष्टघटाभाव एवेति । घटे महाकालान्यत्ववैशिष्ट्यं सामानाधिकरण्यसंबन्धेन, तच्च स्वरूपेण महाकालभेदाधिकरणे कालिकेन वृत्तिस्वरूपम् । एवं च सामानाधिकरण्यघटकविशेषणविशेष्योभयसंबन्धाभ्यां तदुभयवत्त्वस्य विशिष्टवत्त्वनियामकतया महाकाले महाकालान्यत्वविशिष्टघटवत्त्वासंभवात् । तथा चोक्तं प्रतियोगिन्यधिकरणः सुलभ इति ।

ननु महाकालान्यत्वविशिष्टघटाभावस्य साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगिताकत्वाभावात्कथमयमभावो लक्षणघटक इति वाच्यम् । "तादृशसाध्यं घटादिकं द्रव्यत्वादिकं च" लेखनस्वरसादादिपदग्राह्य द्रव्यत्वादिसाध्यके एव तादृशाभावधारणात् घटसाध्यके च महाकालान्यत्वविशिष्टपटाभावमादायैव लक्षणसमन्वयसंभवात् ।

केचित्तु महाकालान्यत्वविशिष्टाभावे एव तात्पर्यादिति वदन्ति वस्तुतस्तु पृथिवीत्वादिना सांकर्याद् घटत्वं यदि नाना तदा पार्थिवघटत्वसाध्यतावच्छेदककस्थले महाकालान्यत्वविशिष्टतैजसघटाभावः, तैजसघटसाधाकस्थले च महाकालान्यत्वविशिष्टपार्थिवघटाभावो लक्षणघटक इत्येव ग्रन्थतात्पर्यादिति ।

वैशिष्ट्यं च महाकालान्यनिरूपितकालिकसंबन्धावच्छिन्नवृत्तित्व रूपं महाकालान्यवृत्ति'त्वविशिष्ट' घटे एव पर्यवसानम् । तदभावीय प्रतियोगितावच्छेदकावच्छिन्नस्य तेन संबन्धेनाधिकरणत्वं महाकालान्यकाले एव । न च विशिष्टाधिकरणताया महाकालेऽनभ्युपगमे महाकालस्य जगदाधारत्वानुपपत्तिरिति वाच्यम् । तादृशाधिकरणत्वासत्वेपि घटाधिकरणतामादायैव जगदाधारत्वोपपत्तिः, विशिष्टस्य विशेष्यानतिरिक्तत्वात् । विषयितातिरिक्तसंबन्धेन तद्धर्मिवृत्तित्वविशिष्टनिरूपिततत्संबन्धावच्छिन्नाधिकरणतायास्तद्धर्मिनियतत्वात् । तेन स्वरूपेण ह्रदवृत्तित्वविशिष्टवन्ह्यभावादेर्विषयितया संबन्धित्वं ज्ञाने नानुपपन्नम्, अत एव ह्रदो वह्निमानित्यादौ ह्रदादिवृत्तित्वविशिष्टवन्ह्यभावादिबाधस्य हेत्वाभासत्वमुपपद्यते, ज्ञाननिष्ठविषयितया यादृशविशिष्टत्वमनुमितिप्रतिबन्धकतावच्छेदकं तादृशस्यैव दोषत्वादिति भावः ।

महाकालान्यत्वविशिष्टघटाभाव एवेति एव कारेण घटाभावादे-

तथा सति 'कालमात्रवृत्तिधर्मस्य तादृशविशेषणतया—किमपि व्यापकं न स्या' दित्यस्यैव सम्यक्त्वे—'अष्टद्रव्यातिरिक्तत्वाऽभिधानस्य सन्दर्भविरोधापत्तेः;—

---

लक्ष्मीः

गगनाभावस्य च व्यवच्छेदः। आद्यस्य प्रतियोगिसमानाधिकरणत्वात्, गगनाभावस्य च प्रतियोग्यधिकरणाप्रसिद्धेः।

ननु दीधितिस्थ विशेषणताविशेषपदं महाकालानुयोगिककालिकविशेषणतापरम्, तथा च महाकालान्यत्वविशिष्टघटाभावोपि न प्रतियोगिव्यधिकरण इत्याशंकते। **न चेति**। **अत्र**। नन्वष्टद्रव्यातिरिक्तेत्यादिग्रन्थे। **महाकालनिरूपितविशेषणताया एवेति**। महाकालानुयोगिककालिकविशेषणताया एवेत्यर्थः। एव कारेण शुद्धकालिकस्य व्यवच्छेदः। **तादृशसंबन्धेन**। महाकालानुयोगिककालिकविशेषणतया। **निरुक्तप्रतियोगिवैयधिकरण्याप्रसिद्ध्यैव**। महाकालानुयोगिककालिकसंबन्धेन महाकालान्यत्वविशिष्टघटाधिकरणाप्रसिद्ध्यैव। **उक्ताभावस्यापि**। महाकालान्यत्वविशिष्टघटाभावस्यापि। **प्रतियोगिवैयधिकरण्यासंभव इति**। महाकालान्यत्वविशिष्टघटस्य महाकालान्यकालानुयोगिकसंबन्धेनैव खण्डकाले एव सत्वात्। आशंकां समाधत्ते। **तथा सतीति**। विशेषणताविशेषपदेन महाकालानुयोगिककालिकविशेषणताविवक्षणे इत्यर्थः। **तादृशविशेषणतया**। **सन्दर्भविरोधापत्तेरिति**। महाकालानुयोगिककालिकेन गोत्वादौ साध्ये घटादिकालोपाधिमात्रवृत्तिघटत्वादिहेतोर्व्यभिचारितया प्रतियोगिवैयधिकरण्याप्रसिद्ध्या लक्षणागमनेपि क्षत्यभावादष्टद्रव्यातिरिक्तेत्यभिधानस्य संदर्भविरोधापत्तेरिति भावः।

ननु अष्टद्रव्यातिरिक्तद्रव्यात्मककालवृत्तिपर्यन्तस्य वैयर्थ्यसम्भवेऽष्टद्रव्यातिरिक्तमात्रस्य वैयर्थ्याभिधानं न संगच्छते इति चेन्न। कालिकसंबन्धस्य लाभार्थं कालपदोपादानात्। इदानीं कालपदेनैव महाकालानुयोगिककालिकसंबन्धलाभः। न च तथापि मात्रपदं व्यर्थमिति वाच्यम्। अव्याप्यवृत्तितावच्छेदकधर्मं पक्षीकृत्य उभयावृत्तिधर्मव्यापकत्वाभावः साध्यते, व्यापकता च स्वाश्रयानुयोगिककालिकविशेषणतया ग्राह्या, तथा च तत्क्रियानुयोगिककालिकविशेषणतया

—'स्वरूपसम्बन्धेन गगनादेर्वृत्तित्वे तु' इत्यग्रिमग्रन्थविरोधप्रसङ्गाच्च । कालिकसम्बन्धेन गगनादेर्वृत्तिमत्वेऽपि तादृशसम्बन्धसामान्ये,—महाकालान्यत्वविशिष्टघटत्वावच्छिन्नप्रतियोगिताकत्वविरहात्तादृशघटत्वावच्छिन्नाभावस्यैव निरुक्तक्रमेण प्रतियोगिव्यधिकरणत्वसम्भवेन पूर्वमतस्यैव सम्यक्त्वादिति चेन्न,

इदानीं महाकालान्यत्वविशिष्टो घटः, 'कालोऽयं महाकालान्यत्वविशिष्टघटवा'

---

लक्ष्मीः

क्रियात्वहेतुकेप्यव्याप्तेः सूचितत्वात् । मात्रपदस्योभयावृत्त्यर्थकतया सार्थक्यात् । न च धर्मव्यापकत्वाभाव एव स्वाश्रयानुयोगिककालिकेन साध्यतामिति वाच्यम् । धर्मपदेनोभयवृत्तिस्पन्दत्वरूपादीनामप्युद्देयतया स्पन्दत्वाश्रयानुयोगिककालिकेन स्वासमानकालीनतद्व्यक्तेरभावस्यैव प्रतियोगिव्यधिकरणतया स्पन्दत्वहेतुकेऽव्याप्त्यभावादिति ध्येयम् ।

ननु नन्वित्यादि दीधितिग्रन्थस्य कालमात्रवृत्तिधर्मस्य विशेषणताविशेषेणाव्याप्यवृत्तिकिमपि व्यापकं न स्यादित्यर्थे एव तात्पर्यमस्तु अतो दोषान्तरमाह । **स्वरूपसंबन्धेनेति** । कालिकसंबन्धेनेत्यर्थः । विरोधमेव दर्शयति । **तादृशसंबन्धसामान्ये इति** । महाकालानुयोगिककालिकसंबन्धसामान्ये इत्यर्थः ।

**निरुक्तक्रमेण** । संबन्धधर्मिकोभयाभावघटितलक्षणोक्तरीत्या । **पूर्वमतस्यैवेति** । गगनादेः कालिकसंबन्धेन वृत्तिमत्त्वमते कालिकसंबन्धसामान्ये गगनप्रतियोगिकत्व, महाकालानुयोगिकत्वयोर्द्वयोरेव सत्त्वाद् गगनाभावोपि घटवान् महाकालत्वादित्यत्र न प्रतियोगिव्यधिकरणोतः संबन्धधर्मिकोभयाभावघटितलक्षणं परित्यज्य प्रतियोगिताधर्मिकोभयाभावघटितलक्षणमभिहितं दीधितिकृता, विशेषणता विशेषपदस्य महाकालानुयोगिककालिकसंबन्धेपरत्वेतु महाकालानुयोगिककालिकसम्बन्धे महाकालान्यत्वविशिष्टघटाभावस्यैव प्रतियोगिव्यधिकरणत्वसंभवेनोक्तलक्षणस्यैव निर्दोषत्वसंभवेन प्रतियोगिताधर्मिकोभयाभावघटितं लक्षणानुसरणं व्यर्थमेवेति भावः । नन्वष्टद्रव्यातिरिक्तेत्याद्याशंकां परिहरति । **इति चेन्नेति** । ननु "इदानीं महाकालान्यत्वविशिष्टो घट इति प्रतीत्या

नित्यादिप्रतीत्या महाकालस्यापि तत्तत्कालोपाध्यवच्छेदेन महाकालान्यत्वविशिष्ट-घटवत्त्वात्,—

अन्यथोक्तप्रतीत्या खण्डकाल एव विशिष्टघटवत्त्वावगाहने वस्तुमात्रस्यैव महाकालेऽसत्त्वप्रसङ्गात्, 'इदानीं' 'तदानी' मित्यादिप्रतीतिव्यतिरेकेण महाकाल-विषयिण्याः प्रतीतेः स्वरसतः कुत्राप्यसत्वात्।

न चैवं खण्डकालस्याधिकरणत्वे मानाभावः,—'पटध्वंसविशिष्टः कालः पटवदन्य' इत्यादिप्रतीतेः प्रमात्वानुरोधेनैव खण्डकालस्यापि तथात्वादिति सिद्धान्तानुसारी पन्थाः।

---

लक्ष्मीः

तादृशघटे एतत्कालाभिन्नमहाकालवृत्तित्वसिद्धावपि न तादृश घटाधिकरणत्वसिद्धिः गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतिवदिति महाकाले तादृशघटाधिकरणत्वसाधकप्रतीतिमाह। **कालोयमिति। महाकालस्यापीति**। अपिना खण्डकालसमुच्चयः। महाकालान्यनिरूपितवृत्तित्वानिरूपकस्यापि महाकालस्येत्यर्थः। तथा च तेन संबन्धेन तद्धर्मिनिरूपितवृत्तित्वविशिष्टतत्संबन्धावच्छिन्नाधिकरणतायास्तद्धर्मिनैयत्ये यथा विषयितातिरिक्तत्वं तत्संबन्धे निवेश्यते तथा कालिकसंबन्धातिरिक्तत्वमपीति न काचिदनुपपत्तिरिति भावः। **तत्तत्कालोपाध्यवच्छेदेन**। महाकालान्यत्वविशिष्टघटाधिकरणकालोपाध्यवच्छेदेन। **महाकालान्यत्वविशिष्टघटवत्वात्**। तत्तत्कालोपाध्यवच्छिन्नमहाकालान्यत्वघटवत्वानगाहनात्। **अन्यथा**। उक्तप्रतीत्या महाकाले तादृशघटाद्याधात्वरत्वानवगाहने। **उक्तप्रतीत्या**। कालोयं महाकालान्यत्वविशिष्टवानिति प्रतीत्या। **खण्ड काले एव**। एव कारेण महाकालस्य व्यवच्छेदः। **विशिष्टघटवत्वावगाहने**। महाकालान्यत्वविशिष्टघटवत्वावगाहने। असत्वप्रसंगे हेतुमाह। **इदानीमिति**। **महाकालविषयिण्याः**। **प्रतीतेः**। महाकालो घटवानिति प्रतीतेः। **स्वरसतः**। स्वभावतः। **कुत्रापि**। कस्मिन्नपि-समये। ननु इदानीं घटः—तदानीं पट इत्यादि प्रत्ययेन महाकाल-निष्ठाधिकरणतावच्छेदकत्वमेव, खण्डकालादीनां 'एतत्कालादीनामव

अपरे तु—महानसीयवह्नित्वेन,—वह्नि-घटोभयत्वेन वा,—अवच्छिन्नप्रतियोगिताकस्य धूमसामानाधिकरणाभावस्य प्रतियोगितावच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यव्याप्तिभियाऽवश्यं साध्यतावच्छेदकभिन्नो यः साध्यवृत्तिधर्मस्तदनवच्छिन्ना हेतुसमानाधिकरणाभावस्य प्रतियोगितालक्षणे निवेशनीया,—

प्रत्येकमुभयत्र पर्याप्तिसम्बन्धेनासतो धर्मस्य तादृशसम्बन्धेनोभयवृत्तित्वासम्भवेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणभिन्नत्वस्य निवेशायोगात्,

एवञ्च प्रकृते महाकालान्यत्वविशिष्टघटत्वाद्यवच्छिन्नाभावस्य प्रतियोगितायाः साध्यतावच्छेदकघटकेन महाकालान्यत्ववैशिष्ट्यरूपसाध्यनिष्ठधर्मेणाऽनवच्छिन्नत्वात्तादृशप्रतियोगिताकाभावमादाय न प्रतियोगिव्यधिकरणाभावस्य प्रसिद्धिसम्भावनाऽपीति—" प्राहुः,—तच्चिन्त्यम् ।

'प्रमेयवान् वाच्यत्वा' दित्यादौ हेतुसमानाधिकरण—तादृशप्रतियोगिताकाभावाऽप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् ।

वस्तुतो—'यादृशप्रतियोगितावच्छेदकविशिष्टस्यानधिकरणत्वं हेतुमत' इत्यत्रावच्छेदकवैशिष्ट्यमवश्यं,—साध्यतावच्छेदकताघटकसम्बन्धेनैव वाच्यम्,—

अन्यथा तप्तायःपिण्डस्यापि कालिकसम्बन्धेन' धूमत्वविशिष्टस्य वन्ह्यादेः संयोगसम्बन्धेनाऽधिकरणतया 'धूमवान्वह्नेरित्यादावतिव्याप्त्यापत्तेः,

---

लक्ष्मीः

गाह्यते नत्वधिकरणत्वम्, तदा खण्डकाले कालिकेनाऽधिकरणत्वसाधकप्रत्ययान्तराभावात्तेषां कालिकेनाधिकरणत्वं न स्यात्प्रमाणान्तराभावादित्याशंकते । **न चेति** । अस्य मानाभाव इत्यनेनान्वयः ।

**एवं** । इदानीं महाकान्यत्वविशिष्टो घट इत्यादिप्रतीत्या महाकाले महाकालान्यत्वविशिष्टघटवत्त्वावगाहने । **प्रमात्वानुरोधेनैवेति** । एतादृशप्रतीतेर्महाकालविषयकत्वे तत्र पटवदन्यत्वविरहेण भ्रमत्वापातादिति भावः ।

**तथात्वादिति** । इदानीं घटः तदानीं घट इत्यादि प्रतीतौ खण्डकालस्यापि कालिकेन घटपटाद्यधिकरणावगाहनादिति भावः । एतावता महाकालान्यत्वविशिष्टघटस्यैव महाकाले सत्वान्न महाकालन्यत्वघटाभावोपि महाकाले प्रतियोगिव्यधिकरण इति सूचितम् ।

**अपरे तु इति** । अत्र यद्वक्तव्यं तदुक्तं प्राक् । **हेतुसमानाधिकरणतादृशप्रतियोगिताकाभावाप्रसिद्ध्येति** । साध्यतावच्छेदकातिरिक्त-

लक्ष्मीः

साध्यवृत्तियद्घटत्वादिकं तदनवच्छेद्यप्रतियोगिताकस्य हेतुसमानाधिकरणाभावस्याऽप्रसिद्ध्येत्यर्थः ।

महाकाले महाकालान्यत्वविशिष्टघटवत्त्वानभ्युपगमेपि महाकालान्यत्वविशिष्टघटाभावो न प्रतियोगिव्यधिकरण इत्याह । **वस्तुत इति । अन्यथा ।** संबन्धसामान्येन यादृशप्रतियोगितावच्छेदकवैशिष्ट्याभिधाने । **तप्तायः पिण्डस्यापि** । हेत्वधिकरणेत्यादिः । **तदधिकरणतया ।** कालिकेन धूमत्वविशिष्टवन्ह्यधिकरणतया । धूमाभावस्य प्रतियोगिसमानाधिकरणतयाऽभावान्तरमादायातिव्याप्तिरिति शेषः । ननु प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्यैव नातिव्याप्तिः, कालिकेन घटत्वविशिष्टवन्ह्यधिकरणत्वात्तप्तायःपिण्डस्य । न च तदयोगोलकसंयुक्तवस्त्वसमानकालीनवस्त्ववच्छिन्नाभावमादायातिव्याप्तिरिति वाच्यम् । तदयोगोलकसंयुक्तस्य गगनादेरसमानकालीनवस्त्वप्रसिद्धेः । न च संयुक्तांशे जन्यत्वप्रवेशान्न तथेति वाच्यम् । तादृशवस्त्ववच्छिन्नस्य महाकालस्याऽयोगोलके सत्वेनानधिकरणत्वासंभवात्, वृत्यनियामकसंबन्धेन साध्यतानुरोधेन प्रतियोग्यसंबन्धित्वस्यैव निवेशादिति चेन्न । वृत्तिनियामकसंबन्धेन धूमसाध्यकस्थले एवाऽतिव्याप्त्यभिधानात् । तत्र तादृशसाध्यतावच्छेदकसंबन्धेन तादृशवस्त्ववच्छिन्नस्य महाकालादेः संबन्धित्वाप्रसिध्द्या महाकालादेर्धर्त्तुमशक्यत्वाद्भवति तादृशाभावो लक्षणघटकः । न च तादृशवस्तुनोपि स्ववृत्तिवाच्यत्ववत्तासंबन्धेन तदयोगोलकसंयुक्तपदार्थेपि सत्त्वात्तदधिकरणत्वस्यैव तत्र सत्वादिति वाच्यम् । विषयितान्यसंबन्धसामान्येनैव विभिन्नकालीनयोराधाराधेयभावानभ्युपगमात् ।

नन्वेवं वन्हिमान् धूमादित्यादावव्याप्तिसंभवेऽतिव्याप्तिदानमनुचितम् । तत्रापि पर्वतसंयुक्तजन्यवस्त्वसमानकालीनपदार्थावच्छिन्नाभावस्य कथं चित्प्रसिद्धत्वेपि तत्प्रतियोगितावच्छेदकावच्छिन्नस्य महाकालादेर्हेतुमति संबन्धित्वादिति चेन्न । तत्पर्वतसंयुक्तजन्यवस्त्वसमानकालीनविभ्वान्यत्वविशिष्टपदार्थवदभावस्यैव लक्षणघटकत्वात्, महाकालादौ विभ्वन्यत्वाभावान्न तत्प्रतियोगितावच्छेदकावच्छिन्नमिति ध्येयम् ।

न च गुणवान् महाकालत्वादित्यत्र कालिकेन स्वप्रतियोगिता-

इत्थञ्च यत्र समवायेन घटत्वविशिष्टस्य कालिकसम्बन्धेन साध्यता, तत्र महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाभावस्य साध्यतावच्छेदकताघटकसम्बन्धेन

लक्ष्मीः

वच्छेदकविशिष्टस्य समवायेनाधिकरणताया महाकाले सत्वेन प्रतियोगिव्यधिकरणाभावाप्रसिध्द्याऽव्याप्तेरेव संभव इति वाच्यम्। विषयितया गगनविशिष्टज्ञानाभावमादायैव लक्षणसमन्वयात्। तत्र संबन्धसामान्येन गगनविशिष्टस्य समवायेनाधिकरणताया महाकालेऽसंभवादिति भावः।

**इत्थंचेति**। साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य प्रतियोगिवैयधिकरण्यघटकप्रतियोगितावच्छेदकवैशिष्ट्ये निवेशे चेत्यर्थः। **तत्र**। घटवान् महाकालत्वादित्यत्र। **अप्रसिद्धमिति**। साध्यतावच्छेदकताघटकसमवायेन महाकालान्यत्ववैशिष्ट्यघटत्वयोरवच्छिन्नत्वमप्रसिद्धमित्यर्थः। **स्वरूपसमवायाभ्यामेवेति**। स्वरूपेण समवायेन चेत्यर्थः। यथाश्रुतार्थस्तु न संगच्छते, तादृशोभयसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वाप्रसिद्धेः। एवकारेण केवलसमवायस्य व्यावृत्तिः। **तथात्वादिति**। स्वरूपेण महाकालान्यत्ववैशिष्ट्यावच्छिन्नत्वात् समवायेन च घटत्वावच्छिन्नत्वादित्यर्थः।

अयमाशयः। साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तियदधिकरणत्वं तादृशाधिकरणतावदन्यत्वं हेत्वधिकरणे निवेशनीयम्। रूपवृत्तित्वं च अधिरणत्वे–स्वनिरूपितनिरूपकतावच्छेदकताघटकपर्याप्त्यनुयोगितावच्छेदकत्वसं०। स्वं–अधिकरणत्वम्।

तन्निवेशव्यावृत्तिस्तु शुद्धसमवायेन वन्हित्वविशिष्टस्य विषयितया साध्यतायां तद्ज्ञानवन्हित्वप्रतियोगिकसमवायेन वन्हित्वविशिष्टविषयकज्ञानान्यतरत्वहेतौ हेत्वधिकरणे वन्हित्वप्रतियोगिकसमवायेन वन्हित्वविशिष्टविषयकज्ञाने शुद्धसमवायेन वन्हित्वविशिष्टस्य विषयितया योऽभावस्तस्य वन्हित्वप्रतियोगिकसमवायेन वन्हित्वविशिष्टप्रतियोगिसमानाधिकरणत्वादभावान्तरमादायातिव्याप्तिः। एवं वन्हित्वप्रतियोगिकसमवायेन वन्हित्वविशिष्टस्य विषयितया साध्यतायां तद्ज्ञानसमवायेन वन्हित्वविशिष्टविषयकज्ञानान्यतरत्वहेतावपि हेत्व-

प्रतियोगितावच्छेदकावच्छिन्नत्वमप्रसिद्धं—स्वरूप—समवायाभ्यामेव तत्र तथात्वात्, विशिष्टनिरुपितसमवायस्यानभ्युपगमात्, अतः। तादृशाभावमादाय नप्रसिद्धि-सम्भवः इति ध्येयम्।

---

लक्ष्मीः

धिकरणे समवायेन वन्हित्वविशिष्टविषयकज्ञाने साध्याभावस्य वन्हित्वप्रतियोगिकसमवायेन वन्हित्वविशिष्टाभावस्य समवायेन वन्हित्वविशिष्टरूपप्रतियोगिसमानाधिकरणत्वादभावान्तरमादायातिव्याप्तिश्चेत्यत इतरवारकन्यूनवारकपर्याप्तीनिवेश्ये।

तथा च कालो घटवान् महाकालत्वादित्यत्र तादृशप्रतियोगितावच्छेदकं महाकालान्यत्ववैशिष्ट्यं घटत्वं च, साध्यतावच्छेदकताघटकसमवायेन तदुभयावच्छिन्नत्वमसिद्धम्। स्वरूपसमवायाभ्यामेवोभयावच्छिन्नत्वादिति तादृशरूपवृत्तिप्रतियोगितावच्छेदकावच्छिन्ननिरूपकत्वमप्रसिद्धमित्यर्थो वा बोध्यः।

नन्वत्र साध्यतावच्छेदकताघटकसमवायसंबन्धेन प्रतियोगितावच्छेदकघटत्वावच्छिन्नस्यैव प्रसिद्धिसंभवेनाऽप्रसिद्धिदानमसंगतम्, महाकालान्यत्वविशिष्टत्वावच्छिन्नसमवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वाभावस्य हेतुमति सत्वादिति चेन्न। साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकनिष्ठनिष्ठत्वसंबन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकतानिष्ठावच्छेदताभिन्नावच्छेदकत्वानिरूपकनिरूपकत्वनिष्ठावच्छेदकताभिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकतानिरूपकावच्छेदकत्वानिरूपकाधिकरणतानिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य लक्षणे निवेशः कार्यः। अन्यथा कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभावीय प्रतियोगितावच्छेदकावच्छिन्नतत्कपिसंयोगनिष्ठनिरूपताकाधिकरणतावद्भेदस्य वृक्षे सत्वेनाव्याप्त्यापत्तेः। तथा च महाकालान्यत्ववैशिष्ट्यनिष्ठावच्छेदकतायाः साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताभिन्नत्वेन तादृशभेदस्य लक्षणाघटकत्वात्, शुद्धघटत्वावच्छिन्नाधिकरणत्वस्य महाकाले सत्वात् इत्यन्यत्र विस्तरः।

महाकालान्यत्ववैशिष्ट्यं सामानाधिकरण्यघटितसामानाधिकरण्यसंबन्धेन घटत्वे एव विशेषणम् न तु घटे, तथा च साध्यतावच्छेद

केचित्तु—"साध्य साधनभेदेन व्याप्तेर्भेदाद्विशिष्टसाध्यकस्थल एव 'यादृश-प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत' इत्यादि वक्तव्यम्,

अविशिष्टसाध्यकस्थले तु—'यादृशप्रतियोगिताश्रयानधिकरणत्वं हेतुमत' इत्येव लाघवाद्वाच्यम्,—तथा च शुद्ध घटस्य साध्यतायां महाकालान्यत्वविशिष्टघटाभावोऽपि प्रतियोगिसमानाधिकरण एव।

---

लक्ष्मीः

कताघटकीभूतसमवायेनैव महाकालभेदविशिष्टघटत्वावच्छिन्नत्वप्रसिद्धेस्तादृशाभावस्यैव प्रतियोगिव्यधिकरणत्वेन तमादायाऽव्याप्तिवारणसंभवादाह। **विशिष्टनिरूपितसमवायानभ्युपगमादिति।** तथा च तादृशवैशिष्ट्यावच्छिन्नघटत्वनिष्ठावच्छेदकतायां शुद्धसमवायसंबन्धावच्छिन्नत्वं न स्वीकरणीयम्. किन्तु विशिष्टप्रतियोगिकत्वसमवायत्वोभयावच्छिन्नसंसर्गताकत्वमेवे..थं। एवं शुद्धसमवायत्वस्य महाकालभेदविशिष्टघटत्वावच्छिन्ननिरूपकतावच्छेदकताघटकसंसर्गतावच्छेदकतापर्याप्त्यधिकरणत्वाभावात्तादृशाभावस्य लक्षणाघटकत्वादिति यावत्।

न च शुद्धसाध्यतावच्छेदककस्थलेऽवच्छेदकतायां निरवच्छिन्नत्वनिवेशादेव तादृशघटत्वावच्छिन्नाभाववारणसंभवे विशिष्टनिरूपितसमवायानभ्युपगमादिति कथनमसंगतमिति वाच्यम्। सांकर्याद् घटत्वस्य नानात्वमते घटत्वं न साध्यतावच्छेदकम् तथा च निरवच्छिन्नत्वपदेन साध्यतावच्छेदकनिष्ठसावच्छिन्नावच्छेदकत्वानिरूपकत्वस्यैव प्रतियोगितायां निवेशनीयतया तादृशघटत्वावच्छिन्नाभावस्य लक्षणाघटकत्वादव्याप्तिवारणसंभव इत्यत उक्तं। **विशिष्टनिरूपितेति** ध्येयम्।

वस्तुतो महाकालान्यत्वविशिष्टघटत्वावच्छिन्ननिरूपकतावच्छेदकता नृसिंहाकारा सा च वैशिष्ट्ये घटत्वे चैकैवेति एकस्यामेव स्वरूपसंबन्धावच्छिन्नत्वं समवायसंबन्धावच्छिन्नत्वं च वर्तते इति तादृशनिरूपकतावच्छेदकघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं स्वरूपत्वसमवायत्वगतद्वित्वे एव सत्वेन समवायत्वगतैकत्वेऽसत्वान्नायभावो लक्षणघटक इति जगदीशाशयः।

**केचित्त्विति।** **इत्येवेति।** एव कारेण यादृशप्रतियोगिताश्रयानधिकरणत्वमित्यस्य व्यवच्छेदः। **वक्तव्यमिति।** अन्यथा विशिष्ट-

न च तादृशसम्बन्धेन हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्य-

---

प्रतियोगिता च प्रतियोगितावच्छेदकधर्मस्वरूपैव, लाघवात्,—न तु प्रतियोगिस्वरूपा,—तेषां नानात्वेन गौरवादतो,—नैकप्रतियोग्यनधिकरणतामादाय 'संयोग्ये तत्वा' दित्यादावव्याप्ति" रित्याहुः,—तच्चिन्त्यम्,

—'कालो घटवान् महाकालत्वादित्यादावव्याप्तिवारणार्थमेवाविशिष्टसाध्यकस्थलेऽपि प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वप्रवेशस्य प्रामाणिकतया गौरवस्याकिञ्चित्करत्वादिति।

---

लक्ष्मीः

सत्तावान् जातेरित्यादावतिव्याप्तेरुक्तत्वात्। **प्रतियोगिसमानाधिकरण एव**। तादृशाभावीय प्रतियोगिताश्रयशुद्धघटाधिकरणमहाकालवृत्तिरेव। एव कारेण प्रतियोगिवैवधिकरण्यस्य व्यवच्छेदः। तथा च प्रतियोगिव्यधिकरणाभावाप्रसिध्याऽव्याप्तिसंगतिः। ननु संयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिः, संयोगाभावप्रतियोगिताश्रयीभूतजालादिवृत्तिसंयोगानधिकरणत्वस्य वृक्षे सत्वादिति आह। **प्रतियोगिता चेति**। **तेषां**। प्रतियोगिनां। **एकप्रतियोग्यधिकरणतां**। जलादिवृत्तिसंयोगाधिकरणतां। **नाव्याप्तिरिति**। संयोगत्वरूप "संयोगाभाव" प्रतियोगितावच्छिन्नाधिकरणत्वादिति भावः। **प्रामाणिकतया**। अव्याप्तिवारकत्वेन प्रमाणसिद्धतया। **अकिञ्चित्करत्वादिति**। तथा चाऽविशिष्टसाध्यकस्थलेपि घटवान्महाकालत्वादित्यत्राव्याप्तिवारणाय महाकालान्वत्वविशिष्टघटाभावस्य प्रतियोयोगिवैयधिकरण्यसंपादनार्थं प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वनिवेशस्य आवश्यकतया गौरवस्याकिंचित्करत्वादिति भावः।

**इदं च**। साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं च। **अवृत्तीत्यस्य प्रतियोगिन्यावृत्त्याऽन्वितमिति**। अवृत्तीत्यस्य वृत्तित्वाभाववानर्थः। तत्प्रतियोगिभूतं यद्वृत्तित्वं तेनान्वितमित्यर्थः। तथा च हेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वाभाववान् तादृशप्रतियोगी यस्य एवं विधोयोऽभाव इत्यर्थः। कालो घटवान् महाकालत्वादित्यत्र गगनाभाव एव प्रतियोगिव्यधिकरणः, तत्प्रतियोगिनो

वृत्तिप्रतियोगितानवच्छेदकविशिष्टप्रतियोगिसामान्यकत्वमेव वक्तव्यं, तथा चावृत्तिगगनाद्यभावद्वारिकैव तत्प्रसिद्धिः।

सत्ताद्यधिकरणकर्मादौ समवायेन ज्ञानसामान्यस्य,—संयोग सामान्यस्य चावृत्तेर्नातिप्रसङ्गः,

---

सार्वभौम मतमाशङ्क्य निराचष्टे,—न चेति।—'वाच्य'मिति परेणान्वयः। तादृशसम्बन्धेनेति। साध्यतावच्छेदकसम्बन्धेनेत्यर्थः। इह 'आवृत्ती' त्यस्य—प्रतियोगिन्या—वृत्त्याऽन्वितं,

तादृशपदस्य प्रतियोगितावच्छेदकसम्बन्धपरत्वे पुनरग्रे 'प्रतियोगिता—साध्यता वच्छेदकसम्बन्धावच्छिन्ना ग्राह्या।

तादृशसम्बन्धेनेत्यस्य फलमाह,—सत्तादीति। विषयताया वृत्त्यनियामक त्वमते, सत्वघति घटादौ ज्ञानाभावस्य चेति। नातिप्रसङ्ग इति। 'ज्ञानवान्'—संयोगवान् वा सत्त्वादित्यादौ नातिप्रसङ्ग इत्यर्थः।

---

लक्ष्मीः

गगनस्य हेत्वधिकरणमहाकालनिरूपितकालिकसंबन्धावच्छिन्नवृत्तित्वाभाववत्वात्,। तदेवाह। दीधितौ—तथा चेति। हेत्वधिकरणनिरूपितकालिकसंबन्धावच्छिन्नवृत्तित्वाभावविवक्षणे चेत्यर्थः। तत्सिद्धिः। प्रतियोगिवैयधिकरण्यप्रसिद्धिः। गगनाभावप्रतियोगिनः कालिकेनाधिकरणाप्रसिद्धावपि वृत्तिमति प्रसिद्धायाः कालिकसंबन्धावच्छिन्नवृत्तितायाः अभावस्य गगने प्रसिद्धत्वादिति भावः। पुनरग्रे। प्रतियोगितानवच्छेदकमित्यत्र। ग्राह्येति। अन्यथा समवायसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावमादाय वन्हिमान् धूमादित्यादावव्याप्त्यापत्तेः। हेत्वधिकरणे पर्वतनिरूपितसमवायसंबन्धावच्छिन्नवृत्तितायाः वन्हावसत्वात्। वस्तुतस्तादृशपदस्य साध्यतावच्छेदक संबन्ध परत्वमेव वाच्यम्। अन्यथा धनीचैत्रत्वादित्यत्र स्वामित्वसंबन्धेन धनस्य साध्यतायां स्वामित्वसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिध्याऽव्याप्तिप्रसंगादिति ध्येयम्।

इत्थं च वृत्तितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वानुक्तौ सत्ताधिकरणघटनिरूपितविषयतासंबन्धावच्छिन्नवृत्तितायाः ज्ञाने

भूतत्व-मूर्तत्वोभयत्वविशिष्टं, —गुण—कर्मान्यत्वविशिष्टसत्तात्वविशिष्टसत्तादिकन्तु

लक्ष्मीः

सत्वाद् ज्ञानाभावस्य प्रतियोगिवैयधिकरण्यविरहेण ज्ञानवान् सत्वादित्यत्रातिव्याप्तिप्रसंगात्। तदुक्तौ तु न दोष इत्याह। **दीधितौ। सत्ताधिकरणकर्मादौ समवायेन ज्ञानसामान्यस्येति।** अस्यचाऽवृत्तेरित्यनेनाऽन्वयः। तथा च समवायेन ज्ञानाभावस्य प्रतियोगिव्यधिकरणत्वान्नातिव्याप्तिरिति भावः।

स्थलान्तरानुसरणे बीजमाह। **विषयताया वृत्त्यनियामकत्वमते इति।** तथा च तत्संबन्धावच्छिन्नघटादिनिरूपितवृत्तित्वस्य वक्तुमशक्यत्वादिति भावः। घटेपि कालिकसंबन्धेन ज्ञानसत्वाद् ज्ञानाभावस्य प्रतियोगिवैयधिकरण्यं दुर्घटमत आदिपदम्, तेनाऽऽकाशादेः परिग्रहः। तथा च प्रतियोगिवैयधिकरण्ये संबन्धित्वानिवेशपक्षे संबन्धविशेषानिवेशपक्षेपि घटे जन्यमात्रस्य कालोपाधित्वानुपगमे उपगमेपि आदिपदग्राह्याऽऽकाशादौ ज्ञानाभावस्य प्रतियोगिवैयधिकरण्यं संभवतीत्यर्थः। **सहजतः।** यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वाप्रवेशेपि। **नातिप्रसंग इति।** तथा च हेत्वधिकरणगुणादिनिरूपितसमवायिसमवेतत्वसंबन्धावच्छिन्नवृत्तितया संयोगे सत्वात्संयोगाभावस्य प्रतियोगिवैयधिकरण्याभावेन संयोगी सत्वादित्यत्रातिव्याप्तिवारणार्थमेव वृत्तितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयमिति भावः।

केचित्तु-हेत्वधिकरणनित्यगुणे संयोगस्य कालिकेनाऽवृत्तेरतिव्याप्तिरसंगता अत आदिपदम्। तथा च संयोगवान् गुणान्यत्वविशिष्टसत्वात्—जन्यत्वविशिष्टसत्वाद्वा इत्यत्रातिव्याप्तिः, कर्मणो नित्यत्वाभावात्, तत्रैव कालिकेन संयोगस्य वृत्तेः, तदिदमुक्त। **दीधितौ-कर्मादाविति।** इत्थं च कर्ममात्रस्यैव कालिकेन संयोगत्वात्तत्र संयोगाभावस्य प्रतियोगिवैयधिकरण्यासंभवादतिव्याप्तिरिति भावः। अत एव जन्यमात्रस्य कालोपाधित्वानुपगमे तदुपगमे पिचायोगोलकीय परमाणावेव धूमाभावस्य प्रतियोगिवैयधिक-

सत्तावद्वृत्तित्वसामान्याभावस्य संयोगादावसत्वादुक्तातिव्याप्तिवारणमेव 'यत्किञ्चित्' पदस्यापि प्रयोजनमित्यवधेयम्। प्रतियोगितावच्छेदकविशिष्टे'त्यस्य,—फलमाह,—भूतत्वेत्यादि।

लक्ष्मीः

रण्यसंभवेन धूमवान् वन्हेरित्यादिस्थलपरित्यागेपि संयोगवान् सत्वादित्यत्र कथमतिप्रसंगः गुणे संयोगस्य संबन्धसामान्येनावृत्तेरित्यपि समाहितम्, गुणस्य हेत्वधिकरणत्वाभावात्, द्रव्ये समवायेन, कर्मणि कालिकेन संयोगस्य वृत्तेरित्याहुः।

**सत्तावद्वृत्तित्वसामान्याभावस्य।** सत्तावद् द्रव्यवृत्तित्वसामान्याभावस्य। **उक्तातिव्याप्तिवारणम्।** संयोगवान् सत्त्वादित्यत्रातिव्याप्तिवारणम्। **यत्किञ्चिदित्यस्यापि प्रयोजनमिति।** हेत्वधिकरणे यत्किञ्चित्त्वानिवेशे संयोगवान् सत्त्वादित्यत्रातिव्याप्तिः, संयोगाभावप्रतियोगिनः संयोगस्य हेत्वधिकरणद्रव्यवृत्तित्वात् संयोगाभावस्य, लक्षणाघटकत्वात्। तदुपादाने तु यत्किञ्चिद्धेत्वधिकरणे गुण कर्मादौ[1] संयोगस्य समवायेनाऽवृत्तित्वात्साध्याभावस्य लक्षणघटकत्वान्नातिप्रसंगः। यत्किञ्चिदित्यस्यापिना तादृशसंबन्धेनेत्यस्य समुच्चयः। तथा च यत्किञ्चित्पदस्य व्यावृत्तिस्तन्त्रेणैव दर्शिता नातो दीधितिकृन्न्यूनता। केचित्तु यत्किञ्चित्पदादाने हेत्वधिकरणवृत्तित्वसामान्याभावस्य साध्याभावप्रतियोगिन्यसत्वेन सर्वत्र व्यभिचारिण्यतिव्याप्तेः स्फुटत्वेन नाक्तेति न दीधितिकृन्न्यूनतेत्याहुः। वस्तुतो हेतौ यत्किञ्चित्व नेवेशेपि धूमवान् वन्हेरित्यत्रातिव्याप्त्ययोगादप्रसिद्धस्थलपरित्यागः।

**फलमाहेति।** तथा च यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वाभाववत् यदभावप्रतियोगिताश्रयसामान्यं तदभावप्रतियोगितानवच्छेदकेत्यादिविवक्षणे भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यत्र मूर्तत्वाधिकरणमनोव्यक्त्यवृत्तित्वस्य तादृशोभयाभावप्रतियोगिताश्रयमूर्तत्वेऽसत्वात् 'प्रतियोगिताया अव्यासज्यवृत्ति-

दिव्या

१ टि०—ननु यत्किञ्चित्त्वनिवेशेपि कथं द्रव्यवारणम्, यत्किञ्चिद्धेत्वधिकरणमध्ये द्रव्यस्याधारणादिति चेन्न।

**न मनो गुणादिवृत्ति,**

---

स्वयं मनसः खण्डनाद्भूतत्व-मूर्तत्वोभयसाध्यकमूर्तत्वस्य सद्धेतुतामाशङ्क्याहगुणकर्मान्यत्वेत्यादि 'विशिष्टान्त'द्वयं मनो—गुणयोः क्रमेणान्वितम् ।

---

लक्ष्मीः

त्वेन प्रत्येकस्मिन्नपि सत्वात्' उभयाभावस्य प्रतियोगिव्यधिकरणत्वाभावेनाऽभावान्तरमादायाऽतिव्याप्तिः, एवं गुणकर्मान्यत्व विशिष्टसत्तावान् जातेरित्यत्र जात्यधिकरणगुणवृत्तित्वस्यैव विशिष्टसत्ताभावप्रतियोगिताश्रयसत्तायां सत्वेनाऽभावान्तरमादायाऽतिव्याप्तिः स्यादिति भावः ।

स्थलान्तरानुसरणे बीजमाह । **स्वयमिति** । दीधितिकारेणैवेत्यर्थः । तथा च मनसोऽसत्वे मूर्तत्वाश्रये पृथिव्यादिचतुष्टये साध्यस्य भूतत्वमूर्तत्वोभयस्य सत्वेन मूर्तत्वहेतोः सद्धेतुतया तत्रातिव्याप्तिदानमसंगतमतः स्थलान्तरमनुसृतमिति भावः । उभयाभावप्रतियोगिताया व्यासज्यवृत्तित्वाद्वाप्रतियोगितापर्याप्त्यधिकरणस्यैव हेत्वधिकरणेऽवृत्तित्वविवक्षणे उक्तातिव्याप्तिनिरासेन स्थलान्तरमिति मान्याः ।

यद्यपि पूर्वं विशिष्टसत्तासाध्यकस्थलेऽतिव्याप्तिप्रदर्शनोत्तरं विशिष्टस्यातिरिक्ततापक्षे तदसंगतेरस्वरसादुभयसाध्यकातिव्याप्तिप्रदर्शनेनात्र पूर्वग्रन्थविपरीतोपन्यासादिदमसंगतम् । तथापि शिष्यबुद्धिवैशद्याय तथोक्तेरिति ध्येयम । स्वप्रतियोगितावच्छेदकावच्छिन्नस्यैव हेत्वधिकरणाऽवृत्तित्वविवक्षणे तु नातिव्याप्तिरित्याह । **दीधितौ । न मनो गुणादिवृत्तीति** । क्रमेणान्वितमिति । एवं च भूतत्वमूर्तत्वोभयत्वविशिष्टं न मनो वृत्ति, गुणकर्मान्यत्वविशिष्टसत्तात्वविशिष्टं तु न गुणादिवृत्तीत्यर्थः । तथा च तादृशोभयाभावप्रतियोगितावच्छेदकविशिष्टस्य भूतत्वमूर्तत्वोभयस्य मनसि अवृत्तित्वात्, विशिष्टसत्ताभावप्रतियोगितावच्छेदकविशिष्टस्य विशिष्टसत्वस्य गुणाद्यवृत्तित्वेन साध्याभावस्य लक्षणघटकत्वान्नातिव्याप्तिरिति भावः ।

ननु भूतत्वमूर्तत्वोभयस्य तादृशोभयाभावप्रतियोगिताश्रयशुद्धमूर्तत्वाद्भिन्नतया भूतत्वविशिष्टमूर्तत्वस्वरूपस्य मनसि अवर्तमानतया, विशिष्टसत्ताभावप्रतियोगिताश्रयीभूतायाः सत्तातो भिन्नतया विशिष्ट-

**संयोगसामान्यन्तु न किञ्चिद्द्रव्यावृत्तीति वाच्यम्, विशिष्टस्यानतिरिक्तत्वात्,**

---

इदञ्च विशिष्टस्यानतिरिक्तत्वं, विशिष्टधर्मावच्छिन्नाधेयत्वस्यातिरिक्तत्वमित्यभ्युपेत्य अन्यथा [ सार्वभौममते ] उभयत्वस्यैकविशिष्टापरत्वरूपत्वे भूतत्वमूर्तत्वोभय-गुणकर्मान्यत्वविशिष्ट—सत्वयोरतिरिक्ततया,—तयोः सहजत एव मनो—गुणाद्यवृत्ति-

---

**लक्ष्मीः**

सत्ताया गुणाद्यवृत्तित्वेन भूतत्वमूर्तत्वोभयाभावस्य विशिष्टसत्ताभावस्य च लक्षण घटकत्वसंभवेन प्रतियोगितावच्छेदकावच्छिन्ने हेत्वधिकरणावृत्तित्वविवक्षणमनर्थकम्, एवं विशिष्टसत्तात्वावच्छिन्नवृत्तत्वस्य शुद्धसत्तात्वावच्छिन्नवृत्तित्वाभिन्नतया सत्तात्वावच्छिन्ने गुणवृत्तित्वसत्त्वे विशिष्टसत्ताभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वावच्छिन्नेऽपि गुणवृत्तित्वस्य स्वीकरणीयतया प्रतियोगितावच्छेदकावच्छिन्ने हेत्वधिकरणावृत्तित्वविवक्षणेऽपि उक्तस्थलद्वयेऽतिव्याप्तिदुर्वारैवेत्यत आह। इदं चेति। अतिव्याप्तिदानं चेत्यर्थः। **विशिष्टस्य**। भूतत्वमूर्तत्वस्य गुणकर्मान्यत्वविशिष्टसत्वस्य च। **अनतिरिक्तत्वम्**। मूर्तत्व-शुद्धसत्तादितोऽनतिरिक्तत्वम्। विशिष्टशुद्धयोरनतिरिक्तत्वे च प्रतियोगितावच्छेदकपर्यन्तानुसरणेऽतिव्याप्तिस्थास्यत्येवेति सूचितम्। **विशिष्टधर्मावच्छिन्नाधेयत्वस्य**। विशिष्टसत्तात्वावच्छिन्नाधेयत्वस्य। **अतिरिक्तत्वम्**। शुद्धसत्तात्वावच्छिन्नाधेयतातो भिन्नत्वम्। एतेन प्रतियोगितावच्छिन्नपर्यन्तानुसरणे नातिव्याप्तिरिति सूचितम्। **अन्यथा**। विशिष्टस्य शुद्धातिरिक्तत्वे। **अतिरिक्ततयेति**। मूर्तत्वसत्तात इत्यादिः। विशिष्टं च केवलादन्यदिति भावः। **तयोः**। भूतत्वमूर्तत्वोभयगुणकर्मान्यत्वविशिष्टसत्तायोः। **सहजत एव**। प्रतियोगितावच्छेदकावच्छिन्नत्वानुपादानेऽपि। वस्तुतस्तु आधेयत्वमप्यनतिरिक्तमेव, शुद्धे विशेष्ये तद्वृत्तित्वसत्वेऽपि तद्वृत्तितानवच्छेदकविशेषणान्तरावच्छिन्ने तद्वृत्तित्वाभावोप्यक्षत एव, एकरूपावच्छिन्ने एव तत्तद्भावयोर्विरोधेनाऽवृत्तेरित्येभिमानः।

तथा,—'प्रतियोगितावच्छेदकविशिष्टेत्यभिधानमसङ्गतं स्यादिति ध्येयम्। 'सामान्य' पदस्य फलमाह,—संयोगसामान्यमित्यति। तथाच संयोगीद्र व्यत्वादित्याशावव्याप्ति-वारणार्थमेव सामान्यपदमिति भावः।

* विशिष्टस्येति *। विशिष्टनिरूपिताधेयत्वस्येत्यर्थः। तथा च 'विशिष्टसत्ता-वान् जातेः' रित्यादावतिव्याप्तिरिति भावः।

---

लक्ष्मीः

ननु विशिष्टधर्मावच्छिन्नाधेयत्वस्यातिरिक्तत्वेऽपि गुणादिनिरूपि-ताधेयत्वस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनि तु सत्वात्, तस्याऽनतिरिक्तत्वात्, तथा चातिव्याप्तिरादवश्यम्। न च प्रतियो-गितावच्छेदकस्य हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिरूपिताधेयतान-वच्छेदकत्वमिति वाच्यम्। सामान्यपदवैयर्थ्यापत्तेः, संयोगत्वस्य द्रव्यनिरूपिताधेयतानवच्छेदकत्वविरहादिति चेन्न। प्रतियोगिताव-च्छेदकसामान्यस्य तादृशाधेयतानवच्छेदकत्वविवक्षया संयोगिसाध्य-केव्याप्तिवारकतयैव सामान्यपदसार्थक्यात्, यत्किञ्चित्संयोगव्यक्तौ तादृशाधेयतानवच्छेदकत्वसत्वात्।

**सामान्यपदमिति।** प्रतियोगिसामान्यमित्यत्र सामान्यपदमि-त्यर्थः। संयोगी द्रव्यत्वादित्यादौ संयोगाभावप्रतियोगिनि यत्किञ्चि-त्संयोगव्यक्तौ हेत्वधिकरणयत्किञ्चिद्घटव्यक्तवृत्तित्वसत्वेपि तत्प्रति-योगिसामान्ये द्रव्यत्ववृत्तित्वासत्वेन तादृशाभावस्य लक्षणाघटक-त्वान्नाव्याप्तिरिति भावः।

सार्वभौममतं निराकरोति। **दीधितौ विशिष्टस्यानतिरिक्तत्वा-दिति। तथा च।** विशिष्टधर्मावच्छिन्नाधेयत्वस्यानतिरिक्तत्वे च। शुद्धसत्तात्वावच्छिन्नेगुणनिरूपितवृत्तित्वसत्वे विशिष्टसत्तात्वावच्छि-न्नेपि गुणनिरूपितवृत्तित्वत्वस्यैव सत्वादभावान्तरमादायातिव्याप्ति-रित्यर्थः। विशेष्यवृत्तिधर्मस्य विशिष्टेऽभावानंगीकारादिति यावत्।

स्थलान्तरानुसरणेबीजमाह। **नन्विति। तादृशसंबन्धावच्छि-न्नेति।** साध्यतासंबन्धावच्छिन्नेत्यर्थः। हेत्वधिकरणयत्किञ्चिद्व्यक्ति-निष्ठाधिकरणतानिरूपित साध्यतावच्छेदकसंबन्धावच्छिन्ननिरूपकता-नवच्छेदकं यद्भावप्रतियोगितावच्छेदकं तादृशाभावस्यैव प्रतियोगिवै-

**समवायेन जातेः साध्यत्वे मेयत्वादावतिव्याप्तिः,—जातिनिष्ठताद‍ृशाभावप्रतियोगितया जातित्वेनानवच्छेदात्,—जातिशून्ये च ताद‍ृशसम्बन्धेन वृत्तेरप्रसिद्धेः,**

---

ननु ताद‍ृश-सम्बन्धावच्छिन्न-यत्किञ्चिद्धेत्वधिकरणनिष्ठाधिकरणतानिरूपकतानवच्छेदक [स्व] प्रतियोगितावच्छेदकत्वं 'सामान्यकान्त' पदेन विवक्षितमतो नोक्त दोष इत्यत आह,—* समवायेनेति *।

ननु समवायेन जातेर्व्याप्यवृत्तित्वात्तत्साध्यके प्रतियोगिवैय्यधिकरण्यमेव न देयं,—देयञ्चाऽव्याप्यवृत्तिसाध्यकस्थलीयनिरुक्तौ साध्यतावच्छेदके,—

---

लक्ष्मीः

यधिकरण्यं विवक्षितम्। **अतो नोक्त दोष इति।** विशिष्टसत्ताभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वस्य गुणनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकतया ताद‍ृशाभावसंग्रहेण विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिरिति भावः। न चैवं विशिष्टसत्ताभावप्रतियोगितावच्छेदकस्य वैशिष्ट्यसहितसत्तात्वस्य गुणादिवृत्तितावच्छेदकसत्तात्वानतिरिक्ततया तदनवच्छेदकत्वासंभवेनोक्तविवक्षयापि ताद‍ृशाभावसंग्रहासंभवादतिव्याप्तिवारणाऽसंभव इति वाच्यम्। यत्किञ्चिद्धेत्वधिकरणनिष्ठाधिकरणतानिरूपितसाध्यतावच्छेदसंबन्धावच्छिन्ननिरूपकतावच्छेदकतापर्याप्त्यनुयोगितावच्छेकानवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताश्रयत्वमित्यर्थकतयोक्तातिव्याप्तिवारणात्। विशिष्टसत्तावान् जातेरित्यादौ गुणनिष्ठाधिकरणतानिरूपितकालिकसंबन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्यैव विशिष्टसत्तात्वेऽस्तीत्यतस्ताद‍ृशसंबन्धावच्छिन्नत्वस्य निरूपकतायां विवेशः। **दीधितौ—समवायेन जातेः साध्यत्वे इति।** अत्र मेयत्वं हेतुस्तदधिकरणं जातिमद् जातिशून्यं च तत्र जातिमदवृत्तित्वस्य जातावभावाज्जात्यभावस्य प्रतियोगिव्यधिकरणत्वाभावादभावान्तरीय प्रतियोगितानवच्छेदकत्वस्य जातित्वे सत्वादतिव्याप्तिः। जातिशून्यं च हेत्वधिकरणं सामान्यादियत्किञ्चित्पदेनोपादातुं न शक्यते इत्याह। **वृत्तेरप्रसिद्धिरिति।** सामान्यादिनिरूपितसमवायसंबन्धावच्छिन्नवृत्तेरप्रसिद्धेरित्यर्थः। तथा च यत्किंचिद्व्यक्तिपदेन न सामान्याद्युपादान

संयोगादिसाध्यकगुणकर्मान्यत्वादौ चातिव्याप्तिः अद्रव्यं हेतुमति तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः द्रव्ये च संयोगादेरपि वृत्तेः, मैवम्;

---

'व्याप्यवृत्तितानवच्छेदकत्व' विशेषणम्' अतो न तत्रत्य लक्षणस्यातिव्याप्तिरत आह,--* संयोगादीति * ।

गुण—कर्मान्यत्वेति * । एकैकोपादाने तत्र प्रतियोगिवैय्यधिकरण्यं प्रसिद्धमत उभयोपादानम् ।

अद्रव्ये गुणादौ समवायेन वृत्तेः प्रसिद्धेरत आह,—* हेतुमतीति * सामान्यादाविति शेषः ।

अत्र 'विशिष्टनिरूपिताधेयत्वस्यातिरिक्तत्वोपगमे—स्वप्रतियोगितावच्छेदकाव-

---

लक्ष्मीः

संभव इति भावः । स्थलान्तरमनुसरति । नन्विति । न देयमिति । तथा च जातिशून्यनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य जातित्वे सत्वान्न जातिमान् मेयत्वादित्यादावतिव्याप्तिरिति भावः । ननु व्यभिचारिणि प्रतियोगिव्यधिकरणघटितलक्षणस्याऽतिव्याप्तिरत आह । देयं चेति । तथा च तादृशघटाद्यभावाभावान्तरप्रतियोगितानवच्छेदकत्वस्य जातित्वे सत्वेपि व्याप्यवृत्तितानवच्छेदकत्वस्य जातित्वे विरहेण न जातिमान् मेयत्वादित्यत्रातिव्याप्तिरिति भावः ।

संयोगी गुणकर्मान्यत्वादित्यत्र हेत्वधिकरणद्रव्यावृत्तित्वस्य संयोगेऽसत्वात्तदभावो न प्रतियोगिव्यधिकरण इत्यभावान्तरमादायातिव्याप्तिः, संयोगत्वस्य व्याप्यवृत्तितानवच्छेदकत्वाच्चेत्यपि बोध्यम् । यत्किञ्चित्पदेन सामान्यादिकं च नोपादातुं शक्यते इत्याह । दीधितौ । अद्रव्ये इति । द्रव्यभिन्ने गुणादौ तादृशसंबन्धेन वृत्तेः प्रसिद्धत्वादुक्तं । हेतुमतीति । तथा च गुणादिकं न हेत्वधिकरणमिति भावः । तादृशसंबन्धेन । समवायसंबन्धेन । संयोगादेरपि वृत्तेरिति । तथा च द्रव्ये संयोगाभावो न प्रतियोगिव्यधिकरण इति भावः । तथा च सार्वभौममतं न सम्यगिति ध्येयम् ।

अत्र । सार्वभौममते । तथा च हेत्वधिकरणयत्किञ्चिद्व्यक्तिनि

लक्ष्मीः

रूपितवृत्तितासामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावः तादृशप्रतियोगितानवच्छेदकमित्यादि विवक्षणीयमित्यर्थः। तथा च पर्वतनिरूपितवृत्तितासामान्ये संयोगसंबन्धावच्छिन्नत्व, घटत्वावच्छिन्नत्वोभयाभावसत्वाल्लक्षणसमन्वयः। धूमवान् वन्हेरित्यत्र वन्ह्यधिकरणायोगोलकनिरूपितवृत्तितासामान्ये संयोगसंबन्धावच्छिन्नत्व, धूमत्वावच्छिन्नत्वोभयाभावसत्त्वान्नातिव्याप्तिः। विशिष्टनिरूपिताधेयत्वस्याप्रतिसिक्तत्वे गुणनिरूपितवृत्तितायां समवायसंबन्धावच्छिन्नत्व, विशिष्टसत्तात्वावच्छिन्नत्वोभयसत्वादतिव्याप्तिरतो। **अतिरिक्तत्वोपगमे इति**। पर्वतनिरूपितकालिकसंबन्धावच्छिन्नघटवृत्तितायां संयोगसंबन्धावच्छिन्नत्व वन्हित्वावच्छिन्नत्वोभयाभावसत्वादव्याप्तिरतः सामान्यपदम्।

कालिकसंबन्धावच्छिन्नत्वविशिष्टगगनत्वावच्छिन्नत्वाप्रसिद्ध्या घटवान् महाकालत्वादित्यत्राव्याप्तिवारणाय विशिष्टाभावमपहायोभयाभावनिवेशः।

पर्वतनिरूपितवृत्तितासामान्ये संयोगसंबन्धावच्छिन्नत्व, धूमत्वावच्छिन्नत्वोभयोः सत्वेन धूमाभावस्य लक्षणाघटकत्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय यत्किञ्चित्पदोपादानम्।

अथ यत्किञ्चिद्धेत्वधिकरणनिरूपितसामान्ये इत्येवोच्यतां किं वृत्तितात्वेन निवेशेनेति चेन्न। संयोगेन घटसाध्यकसंयोगसंबन्धावच्छिन्नप्रतियोगिताकघटाभावत्वहेतुके व्यभिचारिणि अतिव्याप्तिः, घटाभावनिरूपितप्रतियोगित्वे घटाभावप्रतियोगितावच्छेदकावच्छिन्नत्व संयोगसंबन्धावच्छिन्नत्वयोः सत्वात्।

न च तथापि हेत्वधिकरणयत्किञ्चिद्व्यक्तिनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितासामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नत्वाभावः, तादृशयत्किञ्चिद्व्यक्तिनिरूपित यादृशप्रतियोगितावच्छेदकावच्छिन्नवृत्तितासामान्ये वा साध्यतावच्छेदकसंबन्धावच्छिन्नत्वाभावस्तादृशप्रतियोगितानवच्छेदकत्वमित्यवोच्यतामिति वाच्यम्। संयोगी गुणान्यत्वे सति नित्यत्वादित्यत्र सामान्यादिनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्य, संयोगत्वावच्छिन्नवृत्तित्वस्य चाऽप्रसिद्धेः। नित्यद्रव्यनिरूपितसमवायावच्छिन्नवृत्तितायां संयोग-

च्छिन्नत्व, साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाववद्धेत्वधिकरणयत्किञ्चिद्व्यक्तिवृत्तित्व–सामान्यकत्वस्य विवक्षणात्, नोक्तदोष' इत्यस्मद्गुरुचरणाः ।

नव्यास्तु—'साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोग्यधिकरणयावद्धेत्वधिकरणको यो यस्तदन्यत्वं प्रतियोगिवैय्यधिकरण्यं वाच्यम्, अतो गगनाभावमादायैव प्रसिद्धेर्न कोऽपि दोषः,

---

## लक्ष्मीः

त्वावच्छिन्नत्वस्य, संयोगत्वावच्छिन्ननित्यद्रव्यवृत्तितायां च समवायावच्छिन्नत्वस्य विद्यमानतया साध्याभावस्य लक्षणाघटकत्वादिति ध्येयम् ।

**नोक्तदोष इति** । हेत्वधिकरणसामान्यादिनिरूपितवृत्तितासामान्ये एव संयोगत्वावच्छिन्नत्व, समवायावच्छिन्नत्वोभयाभावसत्वेन संयोगाभावस्य लक्षणघटकत्वात्संयोगी गुणकर्मान्यत्वादित्यत्र नातिव्याप्तिः ।

घटवान् महाकालत्वादित्यत्र च महाकालनिरूपितवृत्तितासामान्ये एव गगनत्वावच्छिन्नत्व, कालिकसंबन्धावच्छिन्नत्वोभयाभावसत्वाऽन्नाव्याप्तिः ।

यथाश्रुतानुगमस्तु—हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिरूपितवृत्तितात्वव्यापकतादृशोभयाभावप्रतियोगितानिरूपितपरंपरयाऽवच्छेदकतावत्प्रतियोगितानवच्छेदकेत्यादि ।

गगनस्यावृत्तित्वमते गगनाभावस्य प्रतियोगिवैयधिकरण्यमुपपादयतां नव्यानामतमाह । **नव्यास्तु इति** । तथा च कालो घटवान् महाकालत्वादित्यत्र कालिकसंबन्धेन गगनाभावप्रतियोग्यधिकरणयावद्धेत्वधिकरणाप्रसिध्या स्वपदेन गगनाभावो गृहीतुं नैव शक्यते किन्तु घटाभाव एव तत्प्रतियोग्यधिकरणयावद्धेत्वधिकरणस्य प्रसिद्धत्वात्, एवं च स्वप्रतियोग्यधिकरणयावद्धेत्वधिकरणको यो यः घटाभावस्तदन्यत्वं गगनाभावे इति तत्र प्रतियोगिवैयधिकरण्यप्रसिद्धिः । वह्निमान् धूमादित्यादौ संयोगेन वन्ह्यभावप्रतियोग्यधिकरणयावद्धेत्वधिकरणको यो वन्ह्यभावस्तदन्यत्वं घटाभावे इति समन्वयः । धूमवान् वन्हेरित्यादौ च स्वपदेन धूमाभावो गृहीतुं नैव शक्यते धूमाभावप्रतियोग्यधिकरणयावद्धेत्वधिकरणत्वविरहात्, किन्तु वन्ह्यभाव एव तदन्यत्वं धूमाभावे इति नातिव्याप्तिः । अत एव यावत्पदम् । अन्यथा

न चैवं यद्यत्सम्बन्धेन यद्धर्मावच्छिन्नानधिकरणं हेत्वधिकरणं; तत्सम्बन्धान्यसाध्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नसमानाधिकरण्यमेव [illegible]द्व्याप्तिरस्तु,—

—तथा च घटवान् महाकालत्वादित्यादौ समवायेन घटाद्यभावोऽपि प्रतियोगिव्यधिकरणः सम्भवतीति वाच्यम्;

---

लक्ष्मीः

यत्किञ्चिद्धेत्वधिकरणे पर्वतादौ धूमाभावप्रतियोगिनो धूमस्याधिकरणहेत्वधिकरणकत्वस्य धूमाभावे सत्वेन तद्भिन्नत्वस्याभावान्तरे सत्वादतिव्याप्तिः स्यादिति ।

कालिकेन धूमाभावप्रतियोग्यधिकरणयावद्धेत्वधिकरणत्वाद् धूमाभावस्य स्वपदग्राह्यतयाऽतिव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धेनेति ।

अनुगमस्तु हेत्वधिकरणत्वव्यापकप्रतियोगिताभिन्नप्रतियोगितानवच्छेदकमित्यादि । व्यापकता च प्रतियोगितायां स्वावच्छेदकधर्मावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्ननिरूपकताधिकरणतात्वसं० । स्वं-प्रतियोगिता ।

न चेति । एवं । यथाश्रुतार्थपरित्यागे । यद्यदिति वीप्सादराद् धूमवान् वन्हेरित्यादौ नातिव्याप्तिः, समवायेन धूमानधिकरणत्वस्य हेतुभूतवन्ह्यधिकरणे सत्वात् । यद्धर्मेति । साध्यतावच्छेदकेत्यर्थः । तथा च यद्यत्संबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तत्तत्संबन्धान्यसाध्यतावच्छेदकसंबन्धेन साध्यसामानाधिकरण्यम् ।

वन्हिमान् धूमादित्यादौ समवायादिना वन्ह्यनधिकरणं धूमाधिकरणमिति समवायान्यसाध्यतावच्छेदकसंयोगसंबन्धेन वन्हिसामानाधिकरण्यमादाय लक्षणसमन्वयः । धूमवान् वन्हेरित्यादौ संयोगेन धूमानधिकरणं हेत्वधिकरणायोगोलकं तत्सम्बन्धान्यसाध्यतावच्छेदकसंबन्धाप्रसिद्धया नातिव्याप्तिः ।

घटाभावोपीति । तथा च समवायेन घटानधिकरणं महाकालस्तत्संबन्धान्यसाध्यतावच्छेदक कालिकसंबन्धेन घटत्वावच्छिन्नसामानाधिकरण्यमादाय घटवान् महाकालत्वादित्यत्र लक्षणसमन्वय इति भावः ।

साध्यतावच्छेदकसम्बन्धसामान्ये—निरुक्तप्रतियोगिप्रतियो-

'घटवृत्तित्वविशिष्ट द्रव्यवान् घटत्वा'दित्यादावव्याप्ते', केनापि सम्बन्धेन हेतु-मतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासम्भवात्,

लक्ष्मीः

अथैतलक्षणस्याऽभावघटितत्वात्वा घटाभावोपीति ग्रन्थासंगतिरिति चेन्न। अनुगमशरीरेऽभावनिवेशाभिप्रायेण तथोक्तेः। अनुगमस्तु संबन्धविशिष्टान्यसाध्यतावच्छेदकसंबन्धेन सानाधिकरण्यम्। वै० स्वतादात्म्य–स्वावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणतावच्छिन्नहेत्वधिकरणवृत्त्यभावीय प्रतियोगितावच्छेदकत्वोभय संबन्धेन।

घटवृत्तित्वविशिष्टेति। ननु द्रव्यत्वसाध्यकेऽपि अव्याप्ति संभवेन घटवृत्तित्वविशिष्टेत्यस्य वैयर्थ्यमिति चेन्न। विशेषरूपेण संसर्गतामते पटानुयोगिकसमवायेन पटे द्रव्यत्वाधिकरणत्वस्य प्रसिद्धस्य घटादावनधिकरणत्वसत्वेन यत्पदेन द्रव्यत्वस्य धर्तुं शक्यतयाऽव्याप्तिविरहात्। न च तथोक्तौ उक्तस्थलेपि तद्घटानुयोगिकसमवायेन तस्याधिकरणत्वे तद्घटे एव। अनधिकरणत्वस्यापरघटे सत्वेनाऽव्याप्तिवारणसंभव इति वाच्यम्। तद्घटवृत्तित्वविशिष्टद्रव्यत्ववान् तद्घटत्वादित्यत्राव्याप्तिदाने तात्पर्यात्।

ननु तादात्म्येन घटवृत्तित्वविशिष्टद्रव्यत्वस्य तादृशद्रव्यत्वे एव सत्वेनाऽनधिकरणत्वस्य हेतुमति सत्वेनाव्याप्तिवारणसंभव इत्यत आह। तथाविधानधिकरणत्वसंभवेपीति। दधित्वविशिष्टेति। वैशिष्ट्यं चात्र समवायघटितसामानाधिकरण्यसंबन्धेन। समवायेन दधित्वाधिकरणे समवायेन वृत्तिप्रमेयस्य तादात्म्येन साध्यत्वमिति यावत्। स्थूलपदं च व्यभिचारवारणाय, अन्यथा दधित्वाधिकरणे दधिद्व्यणुके तादात्म्येन त्रसरेण्वादिरूपप्रमेयस्य "साध्यस्य" असत्वेन व्यभिचारः स्यात् तदुपादाने तु स्थूलदधित्वस्य द्व्यणुकेऽसत्वान्नव्यभिचारः। घटानुयोगिकसमवायेन प्रमेयाभावस्य हेतुमति सत्त्वाद्दधित्वविशिष्टेति। ननु दध्यन्तरानुयोगिकसमवायेन दधित्वविशिष्टप्रमेयस्य दध्यन्तरे एव सत्वेन तदनधिकरणत्वस्यैतद्दधिसत्वात्कथमव्याप्तिरिति चेदेवमपि गगनाभाववृत्तित्वविशिष्टगगनाभाववान् गगनाभावत्वादि-

**गिकत्व,—हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्य विवक्षितत्वात् ॥**

---

तादात्म्येन तथाविधानधिकरणत्वसम्भवेऽपि 'दण्डिवन्निशिष्ट प्रमेयवान् 'स्थूलदधित्वा'दित्यादावव्याप्तेरिति—प्राहुः। *तादृशसम्बन्धसामान्य इति*। अस्य पूर्ववदर्थो बोध्यः। क्वचित्साध्यतावच्छेदकसम्बन्ध सामान्ये' इत्येव पाठः। *विवक्षितत्वादिति*। अभावान्तमूलग्रन्थेनेत्यादिः;

तथा च साध्यतावच्छेदकसम्बन्धसामान्ये,—यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व–हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्तादृशप्रतियोगितानवच्छेदकीभूतसाध्यतावच्छेदकावच्छिन्न सामानाधिकरण्यं व्याप्तिरित्यर्थः।

'सम्बन्धसामान्ये' इत्युक्तौ,—कालिकसम्बन्धे धूमप्रतियोगिकत्वाऽयःपिण्डानुयोगिकत्वोभयसत्वाद्धूमवान् वह्नेः इत्यादावतिव्याप्तिरतः "साध्यतावच्छेदके"—ति समवायिनः संयोगेन साध्यतायां 'जातिमत्वा' दावतिव्याप्तिः, साध्यतावच्छेदकीभूतसमवायात्मकधर्म—समवायित्वावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरण गुणाद्यनुयोगिकत्वोभयसत्वेन,—साध्याभावस्य लक्षणाघटकत्वादतः—'सम्बन्ध'—पदं,

---

लक्ष्मीः

त्यत्र तादात्म्येन साध्यतायामव्याप्तिर्बोध्या।

**दीधितौ निरुक्तेति**। यादृशप्रतियोगितावच्छेदकविशिष्टेत्यर्थः। **तथा चेति**। वन्हिमान् धूमादित्यत्र घटाभावमादाय लक्षणसमन्वयः, साध्यतावच्छेदकीभूतसंयोगसंबन्धसामान्ये यादृशप्रतियोगितावच्छेदकीभूतघटत्वावच्छिन्नप्रतियोगिकत्वसत्वेपि हेत्वधिकरणपर्वतानुयोगिकत्वविरहेणोभयाभावसत्वात्तादृशप्रतियोगितावच्छेदकं घटत्वमनवच्छेदकत्वस्य वन्हित्वे सत्त्वाल्लक्षणसमन्वयः। धूमवान् वन्हेरित्यत्रातिव्याप्तिवारणप्रकारं स्वयं दर्शयिष्यति संयोगसामान्ये एवेत्यादिना। **संबन्धसामान्ये इत्युक्तौ**। संबन्धसामान्यत्वेन साध्यतावच्छेदकसंबन्धनिवेशे। **उभयसत्वादिति**। उभयाभावविरहेण धूमाभावस्य लक्षणाघटकत्वेन गगनाभावमादायाऽतीताऽनागतव्यक्त्यभावमादाय वाऽतिव्याप्तिरिति यावत्।

**जातिमत्त्वादौ**। **व्यभिचारिणि**। समवायाभाववति गुणादौ

यद्धर्मावच्छिन्न—संसर्गताकप्रकृतसाध्यकानुमितिः फलं तद्धर्मावच्छिन्न सम्बन्ध-सामान्य इति तु फलितार्थः। घटीयसंयोगेन, पर्वतीयसयोगे वा,—हेतुमन्महानसानुयोगिकत्ववह्नित्वावच्छिन्नप्रतियोगिकत्वोभयाभावसत्वात् 'वह्निमान् धूमादि' त्यादावतिव्याप्तिरतः—प्रथम—'सामान्यं' पदं,

तथा च,—महानसीयवह्निसंयोग एव तादृशोभयाभावविरहान्ना व्याप्तिः।

संयोगसामान्ये एव हेतुमदयोगोलकानुयोगिकत्व—धूमत्वावच्छिन्न प्रतियोगि-

लक्ष्मीः

जातेः सत्वाद्व्यभिचारो बोध्यः। **अतिव्याप्तिरिति**। साध्यतावच्छेदको धर्मः संबन्धश्च। समवायात्मकसाध्यतावच्छेदकधर्मे समवायित्वावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणगुणानुयोगिकत्वोभयोः सत्त्वात्[1] साध्याभावस्य लक्षणाघटकत्वाद् गगनाभावमादायाऽतिव्याप्तिरित्यर्थः। संबन्धपदोपादाने तु साध्यतावच्छेदकीभूते संयोगसंबन्धे समवायित्वावच्छिन्नप्रतियोगिकत्वसत्वेपि गुणानुयोगिकत्वविरहेणोभयाभावसत्वात्साध्याभावस्य लक्षणघटकत्वात्समवायी जातिमत्वादित्यत्र नातिव्याप्तिरिति भावः। **यद्धर्मावच्छिन्नेति**। संयोगत्वावच्छिन्नेत्यर्थः। साध्यतानिरूपितकिंचित्संबन्धानवच्छिन्नावच्छेदकताश्रये इति यावत्।

**घटीयसंयोगे इति**। साध्यप्रतियोगिकसाध्यतावच्छेदकसंबन्धे इत्युक्तौ घटीयसंयोगमादायाव्याप्त्यभावादाह। **पर्वतीय संयोगे इति**। सामान्यपदोपादाने तु सामान्यान्तर्गतमहानसीयसंयोगे तादृशोभयाभावविरहेण यादृशप्रतियोगितापदेन वह्नित्वावच्छिन्नप्रतियोगिताया धर्त्तुमशक्यत्वेन नाव्याप्तिरिति भावः। समवायेन साध्यतायां लक्षणगमनान्नासंभवोऽभिहितः, समवायस्यैक्यात्।

साध्यतानिरूपितकिञ्चित्संबन्धानवच्छिन्नावच्छेदकताश्रयसामान्ये इत्यर्थः। साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताश्रये इति यावत्। तेन स्वसमवायि संयोगपरंपरासंबन्धेन लौहित्यादेः साध्यतायां विलक्षणस्फटिकत्वहेतौ लोहितः स्फटिकत्वादित्यत्र साध्यतावच्छेदकसंसर्गक्रान्ते समवाये हेत्वधिकरणस्फ-

१ समवायस्यैक्यादिति भावः।

कत्वोभयाभावसत्वाद् 'धूमवान्वह्नेः' इत्यादौनातिव्याप्तिः।
संयोगसामान्य एव समवायनिष्ठपर्वतानुयोगिकत्वस्य, वह्नित्वावच्छिन्न प्रतियोगिकत्वस्य च —द्वयोरभावसत्त्वात्तथैवाऽव्याप्तिरतः—"सामान्योभये—" ति; सामान्यपदमुभयत्रान्वितमिति भावः।

---

## लक्ष्मीः

टिकानुयोगिकत्वस्य, संयोगे च लौहित्यप्रतियोगिकत्वस्याभावप्रयुक्तोभयाभावसत्वेपि नाव्याप्तिः, तत्र सांसर्गिकविषयतायाः परंपराघटकयावद्वस्तुष्वेव पर्याप्ततया तदाश्रयप्रत्येकवृत्तिधर्मावच्छेदेनोभयाभावसत्वेपि तत्पर्याप्त्यवच्छेदकतावद्वस्तुधर्मावच्छेदेनोभयाभावसत्वात्। **तथा च**। सामान्यपदोपादाने च। **तादृशोभयाभावविरहादिति**। हेतुमन्महानसानुयोगिकत्व,वह्नित्वावच्छिन्नप्रतियोगिकत्वोभयाभावविरहादित्यर्थः। धूमवान् वन्हेरित्यत्रातिव्याप्तिं निराकरोति। **संयोगसामान्ये एवेति**। **नातिव्याप्तिरिति**। धूमाभावस्य लक्षणघटकत्वादिति भावः।

यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वसामान्यस्य — हेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्यस्य चोभयाभावः साध्यतावच्छेदकसंबन्धसामान्ये विवक्षणीयः। तत्र तादृशानुयोगिकत्वसामान्यस्य विवक्षणेऽनुपपत्तिमाह। **समवायनिष्ठपर्वतानुयोगिकत्वस्येति**। **द्वयोरभावसत्वादिति**। एवं प्रतियोगिकत्वेपि सामान्यपदस्यान्वयः, तेन समवायनिष्ठवह्निप्रतियोगिकत्वघटितोभयाभावस्य संयोगसामान्ये सत्वेपि वन्हिमान् धूमादित्यादौ नाव्याप्तिः। अत्र वन्हिधूमोभयवान् धूमादित्यत्र संबन्धसामान्ये एव तादृशोभयत्वावच्छिन्नप्रतियोगिकत्वाप्रसिध्द्याऽभावान्तरमादाय लक्षणसमन्वयसंभवान्नाऽसंभव उक्त इति बोध्यम्। **उभयत्र**। प्रतियोगिकत्वे, अनुयोगिकत्वे च। उभयत्र सामान्यपदोपादाने तु वन्हित्वावच्छिन्नप्रतियोगिकत्वसामान्यान्तर्गतसंयोगनिष्ठवन्हित्वावच्छिन्नप्रतियोगिकत्वस्य, पर्वताद्यनुयोगिकत्वसामान्यान्तर्गतसंयोगनिष्ठपर्वताद्यनुयोगिकत्वस्य च साध्यतावच्छेदकसंयोगसामान्येऽभावविरहान्नाव्याप्तिरिति भावः। पूर्वोक्तोभयसाध्यके लक्षणसमन्वयसंभवान्नासंभव इति ध्येयम्। **तादृशोभयाभावश्चेति**। या-

ताद्दशोमयाभावश्च,—स्वरूपसम्बन्धेन बोध्यः;

तेन समवायादिना तदुभयाभावस्य सम्बन्धमात्रे सत्त्वेऽपि सद्धेतौ नाव्याप्तिः। 'एतद्घटवान् कालान्तरीय-तद्घटत्वादित्यादावेद्घटत्वावच्छिन्न प्रतियोगिकत्ववि-शिष्टतद्घटानुयोगिकत्वाप्रसिद्धेः—

अभावान्तरमादायातिव्याप्तिः गगनप्रतियोगिकत्वविशिष्ट—महाकालानुयोगिक-त्वाप्रसिद्धया गगनाभावमादाय प्रकृताव्याप्तिवारणासम्भवश्च स्यात्,

---

लक्ष्मीः

द्दशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वसामान्य-हेत्वधिकरण-यत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्यैतदुभयाभावश्चेत्यर्थः। **स्वरूप-संबन्धेनेति**। स्वरूपसंबन्धावच्छिन्नप्रतियोगिताक इत्यर्थः। **तेन**। स्व-रूपेण तदुभयाभावविवक्षणेन। **समवायादिना तदुभयाभावस्य**। समवायसंबन्धावच्छिन्नप्रतियोगिताकतदुभयाभावस्य। व्यधिकरण-संबन्धावच्छिन्नप्रतियोगिताकतयेति शेषः। वन्हिधूमोभयसाध्यकस-द्धेतौ अव्याप्त्यभावादाह। सद्धेतौ नाव्याप्तिरिति।

ननु लाघवात् याद्दशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्ववि-शिष्टहेत्वधिकरणव्यक्त्यनुयोगिकत्वाभाव एव कुतो नोक्तः, वन्हिमान् धूमादित्यादौ च कालिके एव विशिष्टप्रसिद्धिरिति चेत्तत्राह। **एतद्-घटवानित्यादि। अप्रसिद्धेरिति**। विभिन्नकालीनयोराधाराधेयभा-वानभ्युपगमादिति भावः। **अभावान्तरमादायेति**। कालान्तरीय तद्-घटासमानकालीनएतद्घटविषयकज्ञानाभावमादायेत्यर्थः। तथा च ताद्दशज्ञानाभावप्रतियोगितावच्छेदकीभूतैतद्घटत्वावच्छिन्नप्रतियोगि-कत्वविशिष्टकालान्तरीयतद्घटानुयोगिकत्वस्य विषयितायां प्रसिद्धत्वे-न विशिष्टाभावः कालिके सुलभ एव, विभिन्नकालीनविषयितातिरिक्त-संबन्धेनैव नाधाराधेयभाव इति नियमात्। प्रकृताव्याप्तिवारणासंभ-वश्चस्यादिति। घटवान् महाकालत्वादित्यत्राव्याप्तिवारणाऽसंभव इत्यर्थः।

न च महाकालाभावमादायैवाऽव्याप्तिवारणं संभवति, तादात्म्ये प्रसिद्धस्य महाकालानुयोगिकत्वविशिष्टमहाकालप्रतियोगिकत्वस्य कालिकेऽभावादिति वाच्यम्। तादात्म्यकालिकान्यतरसंबन्धेन घटसा-

—अतो निरुक्तप्रतियोगिकत्वविशिष्ट—यत्किञ्चिद्धेत्वधिकरणानुयोगिकत्व-सामान्याभावं परित्यज्य—'तदुभयसामान्याभावमुक्तः।

नच यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिक [त्वविशिष्ट] सम्बन्ध-सामान्ये,—हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिक [त्व] साध्यतावच्छेदकसम्ब-न्धत्वस्य तथाविधसम्बन्धसामान्ये वा, यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिक-त्वस्य व्यतिरेकः,—तादृशप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदकस्य कथं नो-क्तमिति वाच्यम्; 'द्रव्यवान् प्रमेयत्वा' दित्यादौ संयोगेन साध्यतायामतिव्याप्त्यापत्तेः;

---

लक्ष्मीः

ध्यके महाकालत्वहेतावव्याप्तेस्तात्पर्यात्, साध्यतावच्छेदकतादात्म्य-संबन्धे तादृशविशिष्टस्यैव सत्त्वेन विशिष्टाभावस्याप्रसिद्धत्वादिति ध्येयम्।

अथोभयाभावापेक्षया विशिष्टाभावे किं लाघवम्, प्रत्युत विशिष्टा-भावप्रतियोगितावच्छेदककोटौ सामानाऽधिकरण्यनिवेशे गौरवमिति चेन्न।

अद्रव्ये "संसर्गे" उभयत्वस्यापेक्षाबुद्धिविशेषविषयत्वरूपतया तस्यावच्छेदकत्वे बहुषु अवच्छेदकत्वप्रसंगेन गौरवात्, अवच्छेदक-ताया' बाहुल्ये संसर्गताया बाहुल्यप्रसंगात्, तदपेक्षया सामानाधिकर-ण्यत्वावच्छिन्नैकगुरुसंसर्गताप्रवेशे एव लाघवमिति ध्येयम्।

अतः। उक्तापत्त्यनुपपत्तिभ्यां। **निरुक्तेति**। यादृशप्रतियोगि-तावच्छेदकावच्छिन्नेत्यर्थः। **तदुभयसामान्याभाव इति**। यादृशप्रति-योगितावच्छेदकावच्छिन्नप्रतियोगिकत्वसामान्य-हेत्वधिकरणीभूतय-त्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभाव इत्यर्थः।

शङ्कते। **न चेति**। तथाविधसंबन्धसामान्ये वा। हेत्वधिकरणी-भूतयत्किञ्चिद्व्यक्त्यनुयोगिकसाध्यतावच्छेदकसंबन्धसामान्ये वा। **कथं नोक्तमिति**। तावतैव वन्हिप्रतियोगिकसंबन्धसामान्यान्तर्गत-संयोगे हेत्वधिकरणपर्वताद्यनुयोगिकसाध्यतावच्छेदकसंबन्धत्वस्य, तादृशपर्वताद्यनुयोगिकसंयोगे वा वन्हिप्रतियोगिकत्वस्य व्यतिरेका-भावेन वन्ह्यभावस्य लक्षणाघटकत्वाद् वन्हिमान् धूमादित्यादौ लक्षण-समन्वयात्, घटवान् महाकालत्वादित्यत्र तु गगनाभावो लक्षणाघटकः, गगनप्रतियोगिकतादात्म्ये महाकालानुयोगिककालिकसंबन्धत्वस्य, म-

प्रमेयानुयोगिकसंयोगसामान्यस्यैव द्रव्यत्वावच्छिन्नप्रतियोगिकत्वेन साध्याभावस्य लक्षणाघटकत्वादिति ध्येयम् ।

एवञ्च कालिकसम्बन्धसामान्ये,—महाकालानुयोगिकत्वसत्त्वेऽपि,—गगनप्रतियोगिकत्वविरहाद्गगनाभाव एव 'घटवान् महाकालत्वादित्यादौ प्रतियोगिव्यधिकरतया प्रसिद्ध इति भावः ।

ननु हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वं यदि तद्वृत्तित्वं, तदा 'धूमवान् वह्नेः' इत्यादावतिव्याप्तिः, धूमप्रतियोगिकस्यापि संयोगस्य कालिकसम्बन्धेनायोगोलकवृत्तित्वात् ।

---

लक्ष्मीः

हाकालानुयोगिककालिके वा गगनप्रतियोगिकत्वस्य विरहादिति भावः । समाधत्ते । **द्रव्यवानिति** । अतिव्याप्तिमुपपादयति । **प्रमेयानुयोगिकसंयोगसामान्यस्यैवेति** । द्रव्यानुयोगिकसंयोगसामान्यस्यैवेत्यर्थः । एव कारेण गुणादीनां व्यवच्छेदः । गुणाद्यनुयोगिकसंयोगाप्रसिद्ध्या गुणादेर्हेत्वधिकरणपदेन गृहीतुमशक्यत्वात् । तथा च द्रव्यत्वावच्छिन्नप्रतियोगिकसंबन्धसामान्यान्तर्गतसंयोगसामान्ये हेत्वधिकरणद्रव्यानुयोगिकसंयोगसंबन्धत्वस्याभावविरहाद्द्रव्याभावस्य लक्षणाघटकतया प्रथमेऽतिव्याप्तिः ।

द्वितीयेपि हेत्वधिकरणद्रव्यानुयोगिकसंयोगसंबन्धे द्रव्यत्वावच्छिन्नप्रतियोगिकत्वसत्त्वेन द्रव्याभावस्य लक्षणाघटकत्वादतिव्याप्तिरिति भावः ।

यद्यपि हेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकसंबन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वाभावविवक्षणे निरुक्तातिव्याप्तिवारणं कथंचित्संभवति तथापि अयोगोलकानुयोगिककालिकसंबन्धे धूमप्रतियोगिकत्वस्यैव सत्त्वेन धूमाभावलक्षणाघटकत्वाद् धूमवान् वन्हेरित्यादावतिव्याप्तिर्बोध्या ।

प्रसक्तां प्रतियोगिकधिकरणाभावाप्रसिद्धिं निराकरोति । **एवं चेति** । साध्यतावच्छेदकसंबन्धसामान्ये उभयाभावनिवेशे चेत्यर्थः । **प्रसिद्ध इति** । गगनस्यावृत्तित्वादिति भावः ।

**तद्वृत्तित्वम्** । हेत्वधिकरणवृत्तित्वम् । **वृत्तितासंबन्धसामान्येन** । **अयोगोलकवृत्तित्वादिति** । संयोगे धूमप्रति-

यदि च साध्यतावच्छेदकसम्बन्धस्य संसर्गतानियामको यः सम्बन्धस्तेन सम्बन्धेन हेत्वधिकरणवृत्तित्वम् [ एव ] तदनुयोगिकत्वं,

—तदा संयोगेन द्रव्यस्य साध्यतायां द्रव्य—जात्यन्तरत्वादावतिव्याप्तिः जातौ समवायेन वृत्तेरप्रसिद्धेः।

न च साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतासामान्ये, निरुक्तोभयाभाववत्त्वं विवक्षितं, तत्र च हेत्वधिकरणवृत्तित्वं स्वरूपसम्बन्धेनैव वाच्यमिति—साम्प्रतम्; 'अत एवे' त्यादिवक्ष्यमाणग्रन्थासङ्गतिप्रसङ्गात्;

---

लक्ष्मीः

योगिकत्वाऽयोगोलकानुयोगिकत्वोभयसत्त्वेन धूमाभावस्य लक्षणाघटकतया असमानकालीन तत्तद्द्रव्यक्तित्वावच्छिन्नाभावमादायातिव्याप्तिरित्यर्थः। साध्यतावच्छेदकसंबन्धस्य संसर्गतानियामको यः संबन्ध इति। विशेष्यतासंबन्धेन साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिबुद्धिं प्रति साध्यतावच्छेदकसंयोगस्य समवायेन कारणत्वम्, एवं च विशेष्यतासंबन्धेन तादृशबुद्धेः पर्वते सत्वेन तत्र समवायेन संयोगस्यापि सत्वमुपपन्नम्। तथा च तादृशबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकसंबन्धेन हेत्वधिकरणवृत्तित्वं यदीत्यर्थः। तथा च धूमसंयोगस्य तादृशसंसर्गतानियामकसमवायेनायोगोलकवृत्तित्वविरहेणैवोभयाभावसत्वाद् धूमवान् वह्नेरित्यत्र नातिव्याप्तिरिति भावः। **तदेति। अप्रसिद्धेरिति।** संयोगनिष्ठसंसर्गतानियामकसमवायेन जातिवृत्तित्वाप्रसिद्ध्या यत्किञ्चिद्धेत्वधिकरणपदेन तस्याः धर्तुमशक्यत्वात्, द्रव्यस्य धर्तुं शक्यत्वेपि द्रव्यनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्य "द्रव्यानुयोगिकत्वरूपस्य" द्रव्यत्वावच्छिन्नप्रतियोगिकत्वस्य च संयोगसामान्ये सत्त्वाद्द्रव्याभावस्य लक्षणाघटकत्वाद् गगनाभावमादायातिव्याप्तिरित्यर्थः।

**न चेति।** सांप्रतमिति परेणान्वयः। **निरुक्तोभयाभाववत्वमिति।** यादृशप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपितत्व, हेत्वधिकरणीभूतयत्किञ्चिद्द्रव्यक्तिवृत्तित्वोभयाभाववत्त्वम्। **विवक्षितमिति।** तथा च साध्यतासंबन्धावच्छिन्नाधिकरणतासामान्ये निरुक्तोभयाभावस्तादृशप्रतियोगितानवच्छेदकेत्यादि। अधिकरणताया आ-

समवायस्यैकत्वेऽपि तदवच्छिन्नाधिकरणतायां निरुक्तोभयाभावसत्वेन 'द्रव्यं जाते' रित्यादावतिव्याप्त्याभावादिति चेन्न;

'संयोग पर्वते वह्नेः सम्बन्धो, न तु वह्नौ पर्वतस्येत्यादिप्रतीत्या किञ्चित्प्रतियोगिक—किञ्चिदनुयोगिक—सम्बन्धत्वमनुभवसिद्धं कुत्र चिदेव संयोगादौ, न तु सर्वत्र, तच्च स्वरूपसम्बन्धविशेषोऽतिरिक्तोवेत्यन्यदेतत् ;

---

लक्ष्मीः

धेयप्रतियोगिकत्वे यथाश्रुतमेव सम्यक् । तच्च । हेत्वधिरणवृत्तित्वं च । स्वरूपसंबन्धनैव । एव कारेण साध्यतावच्छेदकसंबन्धस्य संसर्गतानियामकसंबन्धस्य व्यावृत्तिः । संयोगसंबन्धावच्छिन्नाधिकरणतासामान्ये धूमत्वावच्छिन्नाधेयतानिरूपितत्वसत्वेपि स्वरूपेणाऽयोगोलकवृत्तित्वविरहादुभयाभावसत्वेन धूमाभावस्य लक्षघटकत्वाद् धूमवान् वन्हेरित्यत्र नातिव्याप्तिर्न वा संयोगेन द्रव्यवान् द्रव्यजात्यन्यतरत्वादित्यत्र संयोगसंबन्धावच्छिन्नाधिकरणतासामान्ये द्रव्यत्वावच्छिन्नाधेयतानिरुपितत्वसत्वेपि स्वरूपेण हेत्वधिकरणजातिवृत्तित्वाभावादुभयाभावस्याक्षततया साध्याभावमादायातिव्याप्तिः । पर्वतनिष्ठसंयोगसंबन्धावच्छिन्नाधिकरणतायां हेत्वधिकरणमहानसनिरूपितवृत्तित्वविरहादव्याप्तिवारणाय सामान्यपदमिति संक्षेपः ।

वक्ष्यमाणग्रन्थासंगतिप्रसंगादिति । द्रव्यं जातेरित्यत्र समवायस्यैक्यमते समवाये द्रव्यत्वप्रतियोगिकत्व, गुणानुयोगिकत्वयोर्द्वयोः सत्वेन द्रव्यत्वाभावस्य लक्षणाघटकत्वेन गगनाभावमादाय वक्ष्यमाणातिव्याप्त संगतत्वापत्तेरित्यर्थः । ग्रन्थासंगतिमाह । समवायस्यैकत्वेपीति । तदवच्छिन्नाधिकरणतायां । समवायसंबन्धावच्छिन्नाधिकरणतायां । निरूक्तोभयाभावसत्वेन । द्रव्यत्वत्वावच्छिन्नाधेयतानिरूपितत्वसत्वेपि जात्यधिकरणगुणनिरूपितवृत्तित्वविरहेणोभयाभावसत्वेनेत्यर्थः । तथा च साध्याभावस्य लक्षणघटकतयाऽतिव्याप्त्यभावादिति भावः । ननु हेत्वधिकरणीभूतेत्याद्याशङ्कां समाधत्ते । नेति । पर्वते वन्हेः संबन्ध इत्यनेन संयोगे पर्वतानुयोगिकत्वं वह्निप्रतियोगिकत्वं च दर्शितम् । न तु वन्हौ पर्वतस्येत्यनेन संयोगे वन्ह्यनुयोगिकत्वाभावः पर्वतप्रतियोगिकत्वाभावश्च प्रदर्शितः ।

तथा च साध्यतावच्छेदकसम्बन्धसामान्ये,—निरुक्त [ प्रतियोगि ] प्रतियोगिकसम्बन्धत्व—हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसम्बन्धत्वोभयाभावस्य विवक्षणात्,—धूमसंयोगस्यायोगोलकानुयोगिकसंसर्गत्वविरहादेव नातिप्रसङ्गः,

---

लक्ष्मीः

**कुत्रचिदेव संयोगादौ इति।** येन संयोगेन यत्र यस्य विशिष्टधीः प्रमा तादृशसंयोगे एव तदनुयोगिकतत्प्रतियोगिकसंबन्धत्वं न तु यावत्संयोगादौ अननुभवात्। इदन्त्ववधातव्यमित्यादिना स्वयमेव वक्ष्यति। **तच्च।** प्रतियोगिकत्वं-अनुयोगिकत्वं च। **स्वरूपसंबन्धविशेष इति।** विशेषत्वं च अभावीय प्रतियोगित्वव्यावृत्तम्, तेनाऽयोगोलकानुयोगिकसंयोगस्य तादृशसंयोगवच्छिन्न "धूमादि" भेदात्मकत्वेपि न धूमादिप्रतियोगिकत्वं किन्तु महानसाद्यनुयोगिकसंयोगस्यैवेति नातिव्याप्तिरिति।

**तथा च।** संयोगे यत्किञ्चित्प्रतियोगिकसंबन्धत्वस्य यत्किञ्चिदनुयोगिकसंबन्धत्वस्यानुभवसिद्धत्वे च।

ननु प्रतियोगिकत्वानुयोगिकत्वयोः स्वरूपसंबन्धविशेषत्वे निरुक्तप्रतियोगिकत्वघटितोभयाभावनिवशेनैवातिप्रसंगवारणसंभवे प्रथमदिशि संबन्धत्वनिवेशो व्यर्थ इति चेन्न। कालिकसंबन्धावच्छिन्नप्रतियोगिताकस्वरूपाभावस्य स्वरूपेण साध्यतायां आत्मघटान्यतरत्वहेतौ स्वरूपाभावाभावस्य निखिलस्वरूपात्मकतया साध्यतावच्छेदकस्वरूपसंबंधे साध्याभावप्रतियोगिप्रतियोगिकत्वस्य हेत्वधिकरणघटानुयोगिकसंबन्धत्वस्य च सत्वेनाऽभावान्तरमादायाऽतिव्याप्तेः, तन्निवेशे च यादृशस्वरूपे हेत्वधिकरणानुयोगिकसंबन्धत्वं तत्र स्वरूपाभावप्रतियोगिकत्वं नास्ति, पूर्वन्तु स्वरूपात्मकाभावप्रतियोगिप्रतियोगिकत्वं निखिलस्वरूपे आसीत्, संबन्धत्वप्रवेशे तु तन्न निखिलस्य स्वरूपे इति विशेषः।

द्वितीयदिशिसंबन्धत्वाप्रवेशे तु घटाभावस्य प्रतियोगितासंबन्धेन साध्यतायां घटाभावत्वहेतौ अतिव्याप्तिः, प्रतियोगितासंबन्धे साध्यप्रतियोगिकसंबन्धत्वस्य हेत्वधिकरणघटाभावनिष्ठघटाभावत्वरूपानुयोगितानिरूपितत्वस्य च सत्वात्, साध्याभावस्य लक्षणाघटकत्वात्, तन्निवेशे तु घटाभावानुयोगिकसंबन्धत्वविरहात् उभयाभावस्य तादृशप्रतियोगितासंबन्धे सत्वान्नातिव्याप्तिः।

तत्र यथार्थविशिष्टधीनियामकस्यैव तदनुयोगिकसम्बन्धत्वात् ।

एतेन—'वह्निमान् वह्निरूपा' दित्यादावतिव्याप्तिः, पर्वत—वह्निसंयोगएव—वह्निप्रतियोगिकत्व—हेत्वधिकरणीभूतवह्न्यनुयोगिकत्वोभयाभावविरहेण तत्र तादृशोभयाभावसत्वात् ।

वह्निसामान्याभावस्य लक्षणाघटकत्वादित्यपास्तम् । पर्वतवह्निसंयोगस्य हेतुमद्वह्निवृत्तित्वेपि, वन्ह्यनुयोगिकसम्बन्धत्वविरहेण ।

इदन्त्ववधात्वं—यत्रैकसंयोगव्यक्त्या यत्पदार्थयोः परस्परं विशिष्टधीः प्रमा, तत्र

---

## लक्ष्मीः

नातिप्रसंग इति । संयोगसामान्ये उभयाभावसत्वेन धूमाभावस्य लक्षणघटकत्वादिति भावः । ननु तदनुयोगिकसंबन्धत्वं यदि तद्धर्मिकज्ञानविषयीभूतसंसर्गत्वं तदा संयोगेन धूमवदयोगोलकमिति प्रतीतिविषयीभूतसंसर्गत्वस्य संयोगे सत्त्वादयोगोलकानुयोगिकत्वमपि धूमसंयोगे संभवत्येवेति कथमतिव्याप्तिवारणमत आह । **तत्रेति** । तद्धर्मिणीत्यर्थः । **यथार्थविशिष्टधीनियामकस्यैव** । यथार्थविशिष्टधीजनकस्यैव । एव कारेण भ्रमव्यावृत्तिः । धूमप्रतियोगिक संयोगस्याऽयोगोलके भ्रमात्मकविशिष्टधीनियामकत्वात् । अत एव यथार्थपदम् । **तदनुयोगिकसंबन्धत्वात्** । धर्म्यनुयोगिकसंबन्धत्वात् । तथा च यत्र यत्रायोगोलकानुयोगिकसंबन्धत्वं तत्र तत्र तद्धर्मिकयथार्थविशिष्टधीविषयत्वमिति नियमाद्धूमसंयोगेऽयोगोलकधर्मिकयथार्थविषयत्वरूपव्यापकाभावादयोगोलकानुयोगिकसंबन्धत्वरूपव्याप्याभावः सिद्ध्यतीति भावः । तथा च धूमसंयोगेऽयोगोलकानुयोगिकसंबन्धत्वाभावान्नातिव्याप्तिरिति निष्कर्षः ।

**एतेन** । हेत्वधिकरणानुयोगिकसंबन्धत्वघटितोभयाभावस्य प्रवेशेन । **हेतुमद्वन्हिवृत्तित्वेपि** । हेत्वधिकरणवृत्तित्वरूपहेत्वधिकरणानुयोगिकत्वस्य पर्वतवन्हिसंयोगे सत्वेपि । **वन्ह्यनुयोगिकसंबन्धत्वविरहेणेति** । पर्वतवन्हिसंयोगेन वन्हिमान् पर्वत इति यथार्थविशिष्टधीनियामकस्यैव पर्वतानुयोगिकसंबन्धत्वात्, नतु पर्वतवन्हिमान् वन्हिरिति यथार्थविशिष्टधीः, तन्नियामकस्य वन्ह्यनुयोगिकसंबन्धत्वविरहात्, तादृशबुद्धेर्भ्रमत्वादिति भावः । **तत्र** । पर्वतवन्हिसंयोगे । **ता-**

**धूमसंयोगे—वह्न्यधिकरणायोगोलकानुयोगिकत्वस्य,—चैत्रान्यत्वविशिष्टैतद्दण्डसंयोगे—एतद्दण्डाधिकरणचैत्रानुयोगिकत्वस्य**

---

तयोरेकस्मिन् संयोगेन साध्ये तदीयरूपादौ व्यभिचारिण्यतिव्याप्तिः, तदुभयसंयोगस्य निरुक्तोभयाभावविरहादिति ॥

'यत्किञ्चिदि'त्यस्य फलमाह—* धूमसंयोग इति * । अन्यथा वह्न्यधिकरणमहानसानुयोगिकत्व-धूमप्रतियोगिकत्वोभयस्यैव धूमसंयोगे सत्वेन धूमाभावस्य प्रतियोगिवैयधिकरण्याभावेन धूमवान् वह्नेरित्यादावतिप्रसङ्गात्स्यादिति भावः । षष्ठ्यन्तद्वय,-'विरहा' दित्यन्वयि । 'निरुक्त' पदस्य कृत्यतः फलमाह,—* चैत्रान्यत्वेति * ।

---

लक्ष्मीः

उभयोरभावस्य सत्वात् । वन्हिप्रतियोगिकसंबन्धत्व-हेतुमद्वन्ह्यनुयोगिकसंबन्धत्वोभयाभावसत्वात् । तथा च पर्वतवन्हिसंयोगे वन्हिधर्मिकयथार्थवैशिष्टधीविषयत्वाभावेन वन्ह्यनुयोगिकसंबन्धत्वाभावेनोभयाभावसत्वात्साध्याभावस्य लक्षणघटकत्वान्नातिव्याप्तिरिति भावः ।

**इदन्त्ववधेयमिति** । विचारणीयमित्यर्थः । **यत्र** । स्थलविशेषे । **एकसंयोगव्यक्त्या** । एकसंयोगेन । **यत्पदार्थयोः** । द्वयोरङ्गुल्योः । **परस्परं विशिष्टधीः प्रमाः** । संयोगेन [ एतदङ्गुलीयवान् तदङ्गुलीयः, तदङ्गुलीयवानेतदङ्गुलीयः इति प्रमा ] । एतदङ्गुलिमती तदङ्गुलिः, तदङ्गुलिमती एतदङ्गुलिः इति प्रमा । **तत्र** । स्थलविशेषे । **तयोरिति** । अङ्गुलिद्वयमध्ये इत्यर्थः ।

**एकस्मिन्साध्ये** । एतदङ्गुलिमती एतद्रूपादित्यत्र । **व्यभिचारिणि** । एतदङ्गुल्यन्तर्भावेन व्यभिचारो बोध्यः । **अतिव्याप्तिमाह** । **तदुभयसंयोगे इति** । अङ्गुलिद्वयसंयोगे इति । **निरुक्तोभयाभावविरहादिति** । तथा च साध्यतावच्छेदकअङ्गुलिद्वयसंयोगे एतदङ्गुलिप्रतियोगिकसंबन्धत्व एतद्रूपाधिकरणएतदङ्गुल्यनुयोगिकसंबन्धत्वस्य च द्वयोः सत्वेनोभयाभावविरहादभावान्तरमादायातिव्याप्तिरिति भावः ।

**अन्यथा** । हेत्वधिकरणव्यक्तौ यत्किञ्चित्त्वस्यानिवेशे । **प्रतियोगिवैयधिकरण्याभावेनेति** । आभावान्तरमादायातिव्याप्तिरिति

'निरुक्त' पदानुक्तौ 'चैत्रान्यत्वविशिष्टैतद्दण्डवानेतद्दण्डा' दित्यत्र चैत्रवृत्त्येतद्दण्डसंयोग एव,—चैत्रान्यत्वविशिष्टैतद्दण्डाभावप्रतियोगिप्रतियोगिकत्व—हेत्वधिकरणीभूतचैत्रानुयोगिकत्वो[illegible]भयाभावविरहात्तादृशदण्डाभावस्य लक्षणाघटकतयाऽतिव्याप्तिः स्यात्—,

—तदुपादाने तु चै[illegible]त्वविशिष्टैतद्दण्डत्वावच्छिन्नप्रतियोगिकत्वस्या भावादेव तत्रोभयाभावसम्भव इति नातिव्याप्तिरिति भावः।

यदि च 'प्रतियोगिता प्रत्याश्रयं नानैव, न त्वेकेति मतं, तदा चैत्रान्यत्व—विशिष्टदण्डत्वावच्छिन्नं यच्चैत्रावृत्तिदण्डनिष्ठं प्रतियोगित्वं, तदाश्रयप्रतियोगिकत्व,—हेत्वधिकरणीभूतचैत्रानुयो[illegible]त्वोभयाभावस्य संयोगसामान्य एव सत्वात् 'निरुक्त'

---

लक्ष्मीः

भावः। यत्किञ्चित्पदोपादाने तु हेत्वधिकरणीभूतायोगोलकानुयोगिकत्वस्य धूमसंयोगे [illegible]रहाद् धूमाभावस्य लक्षणघटकत्वान्नातिव्याप्तिः।

**निरुक्तपदस्येति।** प्रतियोगितावच्छेदकावच्छिन्नार्थकनिरुक्तपदस्येत्यर्थः। **छद्मतः।** यत्किञ्चित्पदप्रयोजनव्याजेन। **चैत्रान्यत्वविशिष्टेति।** यत्र एकस्या एव दण्डव्यक्तेः चैत्र चैत्रान्योभयवृत्तित्वं तादृशदण्डव्यक्तेः साध्यता। चैत्रान्तर्भावेन व्यभिचारो बोध्यः। **अतिव्याप्तिरिति।** तथा च प्रतियोगितावच्छेदकावच्छिन्नार्थकनिरुक्तपदानुक्तौ यादृशप्रतियोगिताश्रयप्रतियोगिकत्वप्रवेशे साध्यतावच्छेदकसंयोगसामान्ये चैत्रान्यत्वविशिष्टैतद्दण्डाभावप्रतियोगिताश्रयशुद्धदण्डप्रतियोगिकत्व हेत्वधिकरणचैत्रानुयोगिकत्वोभयसत्वेन साध्याभावस्य लक्षणाघटकत्वाद्भावान्तराद[illegible]तिव्याप्तिरित्यर्थः। निरुक्तपदोपादाने तु संयोगे चैत्रानुयोगिकत्वसत्वेपि चैत्रान्यत्वविशिष्टदण्डत्वावच्छि[illegible]कत्वविरहे[illegible]साध्याभावमादाय नातिव्याप्तिरिति भावः।

संयोगे चैत्रान्यत्वविशिष्टैतद्दण्डत्वावच्छिन्नप्रतियोगिकत्वस्य मैत्रानुयोगिकत्वोभयोः सत्वात्साध्याभावस्य लक्षणाघटकत्वेनाऽतिवारणं यत्किञ्चिदित्यस्यापि प्रयोजनम्, उपादाने तु चैत्रान्यत्वविशिष्टैतद्दण्डसंयोगे हेत्वधिकरणीभूतयत्किञ्चिचैत्रव्यक्त्यनुयोगिकत्व विरहेणोभयाभावसत्वेन साध्याभावमादाय नातिव्याप्तिरिति ध्येयम्।

साध्यघटकैतत्पदप्रयोजनमाह। **यदि चेति। तदा।** यादृश-

**गुण—कर्मान्यत्वविशिष्टसत्तासमवाये च—जात्यधिकरण-गुणानुयोगिकत्वस्य,—विरहान्नातिप्रसङ्गः ॥ १६ ॥**

पदं विनापि नातिव्याप्तिः सम्भवतीति तन्मतसाधारण्येनातिव्याप्तिरक्षणार्थमुक्तम्—* एतदिति * [ शि० ] ।

यद्यनुयोगिता प्रत्याश्रयं, नानैव, न त्वेकेत्यभिमतं, तदा दण्डसामान्यस्य हेतुत्वे—एतद्दण्डप्रतियोगिकसंयोगसामान्ये दण्डान्तराधिकरणीभूतयत्किञ्चिद्द्रव्यव्यक्त्यनुयोगिकत्वाभावादेवोभयाभावसत्वादतिव्याप्तिविरहः स्यादतो हेतौ—*एतदिति* [शि०]

लक्ष्मी

प्रतियोगिताश्रयप्रतियोगिकत्वमात्र विवक्षणेपीति शेषः । **चैत्रावृत्ति-दण्डनिष्ठं** । चैत्रावृत्तिउदासीनदण्डनिष्ठं । **नातिव्याप्तिः संभवतीति** । तथा च चैत्रान्यत्वविशिष्टदण्डवानेतद्दण्डादित्यत्र "साध्यघटकैतत्पदानिवेशे" आश्रयभेदेन प्रतियोगिताया भिन्नत्वमते निरुक्तपदानिवेशेपि केवलप्रतियोगिताश्रयप्रतियोगिकत्वविवक्षणेपि संयोगसामान्ये एतद्दण्डाधिकरणचैत्रानुयोगिकत्वसत्वेपि चैत्रान्यत्वविशिष्टदण्डाभावीयं यच्चैत्रमैत्रावृत्तिउदासीन "दण्डनिष्ठप्रतियोगित्वं तदाश्रय" चैत्रावृत्तिदण्डप्रतियोगिकत्वविरहादेवोभयाभावसत्वेन साध्याभावस्य लक्षणघटकत्वान्नातिव्याप्तिरतोऽतिव्याप्तिसंपादनाय एतदिति । तथा च सति चैत्रान्यत्वविशिष्टैतद्दण्डाभावीयं यदेतद्दण्डनिष्ठप्रतियोगित्वं तदाश्रयत्वमेतद्दण्डस्यैव तत्प्रतियोगिकत्वं हेत्वधिकरणीभूतचैत्रानुयोगिकत्वोभयसत्वेनातिव्याप्तिरतो निरुक्तपदमिति भावः ।

**तन्मतसाधारण्येन** । प्रतियोगिताप्रत्याश्रयं नानैवेति मतेन । **अतिव्याप्तिरक्षणार्थं** । अतिव्याप्तिसंपादनार्थम् । न च तन्मतावलंबने कपिसंयोगी एतत्त्वादित्यत्राव्याप्तिः, एतद्वृक्षानुयोगिकसमवाये संयोगाभावप्रतियोगिताश्रयजलादिवृत्तिकपिसंयोगप्रतियोगिकत्वविरहेणोभयाभावसत्वेनाव्याप्तिभयेन तन्मतस्यानादरणीयत्वादिति चेत् न ।

स्ववृत्तितावच्छेदकावच्छिन्नत्व—स्वावृत्तित्वोभयानवच्छिन्नत्वस्यैव प्रतियोगितायां विवक्षणीयत्वात् । स्वं हेत्वधिकरणम् । तथा च कपिसंयोगाभावप्रतियोगितायां तादृशोभयसत्वादभावान्तरमादाय नाव्याप्तिः । प्रकृते तु व्यभिचारिस्थलघटितोभयाभावसत्वान्नासंगतिरिति

संयोगेन साध्यतायां निरुक्तपदस्य व्यावृत्तिमुक्त्वा,—समवायेन साध्यतायां तामाह,—॥ गुणकर्मान्यत्वेति ॥।—इदञ्च समवायस्य [ अधिकरणभेदेनापि ] नानात्वमभिप्रेत्य, तस्यैकत्वे तु तत्र गुणानुयोगिकत्व,—विशिष्टसत्ताप्रतियोगिकत्वोभयसत्वेनातिव्याप्तितादवस्थ्यात् ।

---

लक्ष्मीः

ध्येयम् । हेतुघटकैतत्पदप्रयोजनमाह । यदीति । अनुयोगिता । हेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिता । अतिव्याप्तिविरहः स्यादिति । तथा च चैत्रान्यत्वविशिष्टैतद्दण्डवान् दण्डादित्युक्तौ निरुक्तपदानुक्तावपि नातिव्याप्तिः, चैत्रान्यत्वविशिष्टदण्डाभावप्रतियोगिताश्रयैतद्दण्डप्रतियोगिकत्वस्य संयोगसामान्ये सत्वेऽपि हेत्वधिकरणीभूतं यच्चैत्रमैत्रभिन्नं देवदत्तादिकं तदनुयोगिकत्वविरहेणोभयाभावसत्त्वादतिव्याप्तिविरहः स्यादित्यर्थः । अतः । अतिव्याप्तिसंपादनाय । हेतौ एतत्पदोपादाने तु एतद्दण्डस्याधिकरणं चैत्रमैत्रोभयमेव नान्य इति साध्यतावच्छेदकसंयोगसामान्ये चैत्रान्यत्वविशिष्टैतद्दण्डाभावप्रतियोगिताश्रयशुद्धदण्डप्रतियोगिकत्व, एतद्दण्डाधिकरणचैत्रानुयोगिकत्वयोः सत्वात्साध्याभावस्य लक्षणाघटकत्वादभावान्तरमादायातिव्याप्तिवारणाय निरुक्तपदमिति भावः ।

ताम् । व्यावृत्तिं । तथा च गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्र समवाये गुणकर्मान्यत्वविशिष्टसत्ताभावीय प्रतियोगिताश्रयसत्ताप्रतियोगिकत्व, जात्यधिकरणगुणानुयोगिकत्वोभयोः सत्वेनाभावान्तरमादायातिव्याप्तिवारणाय निरुक्तपदम् । तथा च सति समवाये विशिष्टसत्तात्वावच्छिन्नप्रतियोगिकत्वसत्वेऽपि जात्यधिकरणगुणानुयोगिकत्वविरहान्नातिव्याप्तिरिति भावः ।

एवं समवायसंबन्धे विशिष्टसत्तात्वावच्छिन्नप्रतियोगिकत्व, जात्यधिकरणद्रव्यानुयोगिकत्वोभयोः सत्त्वेनाभावान्तरमादायातिव्याप्तिवारणाय यत्किंचित्पदमित्यपि बोध्यम् । तथा च जात्यधिकरणगुणादियत्किञ्चिद्व्यक्त्यनुयोगिकत्वविरहान्नातिप्रसंगः ।

ननु समवायस्त्वेक एव, एवं च समवाये विशिष्टसत्तात्वावच्छिन्नप्रतियोगिकत्व–जात्यधिकरणगुणाद्यनुयोगिकत्वोभयोः सत्वेन साध्याभावस्य लक्षणाघटकत्वान्निरुक्तपदसत्वेपि अतिव्याप्तितादवस्थ्यमत

यद्यपि 'यादृशप्रतियोगितावच्छेदकावच्छिन्नत्वात्...', —'वह्नि-धूमोभयवान् धूमादित्यत्र अव्याप्तिः, संयोगसामान्य एव वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्व-धूमाधिकरणपर्वतानुयोगिकत्वोभयाभावसत्त्वात्,—

---

लक्ष्मीः

आह । इदं चेति । अतिव्याप्तिदानं चेत्यर्थः ।

तथा च समवायस्य नानात्वमभिप्रेत्यैव समवायसंबन्धे विशिष्टसत्ताभावप्रतियोगिसत्ताप्रतियोगिकत्व जात्यधिकरणगुणानुयोगिकत्वोभयोः सत्वादभावान्तरमादायातिव्याप्तिवारणाय निरुक्तपदम्, तदभिप्रायेणैव निरुक्तपदसत्वे समवायसंबन्धे विशिष्टसत्तात्वावच्छिन्नप्रतियोगिकत्वसत्वेपि गुणानुयोगिकत्वविरहात्तदुभयाभावसत्त्वेन नातिव्याप्तिः । तस्यैकत्वे तु । समवायस्यैकत्वे तु । निरुक्तपदसत्वेपीति शेषः । तत्र । समवाये ।

शंकते । यद्यपीति । संयोगसामान्ये एवेति । संबन्धमात्रस्यैकप्रतियोगिकत्वापरानुयोगिकत्वनियमेनेत्यादिः । उभयाभावसत्त्वादिति। उभयत्वावच्छिन्नप्रतियोगिकसंसर्गविरहात्, पर्वतः संयोगेन वन्हिधूमोभयवानिति प्रतीतेस्तु तत्तत्संयोगावगाहित्वेनैवोपपत्तेरिति भावः । वन्हिधूमोभयत्वावच्छिन्नप्रतियोगिकत्वविरहेणाभयाभावसत्त्वादि - त्यर्थः । तथा च साध्याभावस्य लक्षणघटकतयाऽव्याप्तिरिति भावः । यादृशप्रतियोगिताश्रयप्रतियोगिकत्वविवक्षणे तु नाव्याप्तिः, संयोगसंबन्धे वन्हिधूमोभयाभावप्रतियोगिताश्रयधूमादिप्रतियोगिकत्वस्य धूमाधिकरणपर्वताद्यनुयोगिकत्वस्य च द्वयोः सत्वेन साध्याभावस्य लक्षणाघटकत्वात्, परन्तु पूर्वोक्तातिव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वस्यावश्यं विवक्षणीयतयाऽव्याप्तिर्दुरुद्धरैव संयोगसामान्ये वन्हिधूमोभयत्वावच्छिन्नप्रतियोगिकत्वविरहेणसाध्याभावस्य लक्षणघटकत्वादिति भावः ।

अव्याप्तिं निराकर्तुमुपतिष्टते । न चेति । वाच्यमित्यनेनान्वयः । सांसर्गिकविषयत्वमेवेति । प्रतियोगितावच्छेदकावच्छिन्नप्रकारकप्रमीय सांसर्गिकविषयत्वमेवेत्यर्थः । एवकारेण प्रतियोगितावच्छेदकावच्छिन्न वृत्तित्वस्य व्यावृत्तिः । प्रमा च संयोगेन वन्हिधूमोभयवानित्याकारिका

न च निरुक्तप्रतियोगितावच्छेदकावच्छिन्नवत्ताप्रमायाः सांसर्गिकविषयत्वमेव--निरुक्तप्रतियोगिकत्वं वक्तव्यं, तच्च पर्वते वह्नि—धूमयोः प्रत्येकसंयोगस्याप्यस्तीति नाव्याप्तिः, अन्यथा 'संयोगेन' पर्वतो वह्नि—धूमोभयवानित्यादिप्रमाया दुर्घटत्वापत्तेरिति वाच्यम्; तथा सति 'अत एवे' त्यादिना वक्ष्यमाणाया 'वह्नि—धूमोभयवान् वह्ने'—रित्यात्रातिव्याप्तेरऽसङ्गत्वापत्तेः,

वह्नि—धूमोभयवत्ताप्रमानियामकसंयोगमात्रस्यैव हेत्वधिकरणीभूताऽयोगोलकानुयोगिकत्वाभावेन वह्नि—धूमोभयत्वावच्छिन्नाभावमादायातिव्याप्त्यसम्भवात्,—

---

लक्ष्मीः

संयोगेन धूमवदयोगोलकमिति ज्ञानीय सांसर्गिकविषयत्वस्य संयोगे सत्वात्तत्रायोगोलकानुयोगिकत्वस्यापि सत्वेनाभावान्तरमादाय धूमवान् वन्हेरित्यादावतिव्याप्तिवारणाय प्रमापदम्। **निरुक्तप्रतियोगिकत्वम्** । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वम्।

एवं च वन्हिधूमोभयवान् धूमादित्यत्र नातिव्याप्तिः, साध्यतावच्छेदकसंयोगसामान्ये संयोगेन वन्हिधूमोभयवान् पर्वत इत्याकारक प्रमात्मकज्ञानीय संसर्गतारूपविषयत्वरूप तादृशोभयप्रतियोगिकत्वस्य धूमाधिकरणपर्वतानुयोगिकत्वस्य च सत्वेन वन्हिधूमोभयाभावस्य लक्षणाघटकत्वात्।

**तच्च** । प्रतियोगितावच्छेदकावच्छिन्नप्रकारकप्रमीय संसर्गत्वाख्यविषयत्वरूपं प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वं च। **प्रत्येकसंयोगस्येति** । **वन्हिसंयोगे** । धूमसंयोगे चेत्यर्थः। **नाव्याप्तिरिति** । प्रत्येकसंयोगे तादृशविषयत्वरूपोभयप्रतियोगिकत्वस्य धूमाधिकरणपर्वतानुयोगिकत्वस्य च सत्वेन साध्याभावस्य लक्षणाघटकत्वात्। **अन्यथा** । वन्हिधूमयोः प्रत्येकसंयोगे वन्हिधूमोभय प्रतियोगिकत्वानभ्युपगमे। **प्रमायाः दुर्घटत्वापत्तेरिति** । उभयप्रतियोगिकसंयोगस्याऽप्रसिध्या विशिष्टप्रमायाः सांसर्गिकविषयतानियतत्वात्, अन्यस्य सांसर्गिकविषयत्वे प्रमात्वव्याघातादिति भावः।

**तथा सति** । प्रतियोगितावच्छेदकावच्छिन्नवत्ताप्रमीयसंसर्गताख्यविषयत्वस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वरूपत्वे। **असंगत्यापत्तेरिति** । अतिव्याप्तिर्न स्यादित्यर्थः। अतिव्याप्त्यभावं

तथापि—साध्यसाधनभेदेन व्याप्तेर्भेदाद् व्यासज्यवृत्तिधर्मेण साध्यतायां 'निरुक्त' पदमपहाय,—तादृशप्रतियोगिताश्रयप्रतियोगिकत्वघटितस्यैव प्रवेशान्नोक्तस्थलाऽव्याप्तिः। न चैवमुभयत्वेन साध्यतायां व्यभिचारिण्यतिव्याप्तिस्तदवस्थैव स्यात्, 'अत एवे' त्यादिना 'वह्निधूमोभयवान् वह्ने' रित्यादौ प्रकृतैवाग्रे तद्दोषस्य वक्ष्यमाणत्वादिति।

वस्तुतः—सम्बन्धमात्रस्यैकप्रतियोगिकत्वापरानुयोगिकत्वनियमेन वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धत्वाप्रसिद्ध्यैव,—तदुभयत्वावच्छिन्नाभावस्य लक्षणाघटकत्वान्नाव्याप्तिः, अत एवाग्रे,—'वह्निधूमोभयवान् वह्ने'रित्यादावतिव्याप्तिर्दास्यते।

---

लक्ष्मीः

योजयति। **वन्हिधूमोभयवत्ताप्रमानियामकसंयोगमात्रस्यैवेति।** संयोगेन वन्हिधूमोभयवानिति प्रमाजनकसंयोगसामान्यस्यैवेत्यर्थः। अनेन संयोगसामान्ये एव तादृशप्रमीयसंसर्गताख्यविषयत्वरूपं वह्निधूमोभयप्रतियोगिकत्वं दर्शितम्। **हेत्वधिकरणीभूतायोगोलकानुयोगिकत्वाभावेनेति।** हेत्वधिकरणीभूतायोगोलकानुयोगिकत्वाभावेन उभयत्वावच्छिन्नवत्ताप्रमायाः सांसर्गिकविषयत्वं धूमप्रतियोगिकसंयोगमात्रे तत्रायोगोलकानुयोगिकत्वस्य अयोगोलकसंयोगे च वन्हिधूमोभयवत्ताप्रमीय सांसर्गिकविषयत्वस्य चाऽभावेनेत्यर्थः। तथा चोभयाभावस्य सत्वेन साध्याभावस्य लक्षणघटकतयाऽतिव्याप्त्यभावेन तादृशप्रमीयसांसर्गिकविषयत्वरूपं प्रतियोगिकत्वं न वाच्यमित्याशयः।

यद्यपीत्यस्य समाधानमाह। **तथापीति। व्यासज्यवृत्तिधर्मेण।** एकत्वानवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताश्रयधर्मेण। **नोक्तस्थलाऽव्याप्तिः।** साध्यतावच्छेदकसंयोगसंबन्धे वन्हिधूमोभयाभावप्रतियोगिताश्रयधूमप्रतियोगिकत्व–धूमाधिकरणपर्वतानुयोगिकत्वोभयसत्वेन साध्याभावस्य लक्षणाघटकत्वान्न वन्हिधूमोभयवान् धूमादित्यत्राव्याप्तिरित्यर्थः।

शंकते। **न चेति।** तदवस्थैवेत्यनेनान्वयः। **एवं।** प्रतियोगिताश्रयप्रतियोगिकत्वनिवेशे। **उभयत्वेन साध्यतायां व्यभिचारिणि।** वन्हिधूमोभयवान् वन्हेरित्यत्र। **अतिव्याप्तिः।** साध्यतावच्छेदक-

लक्ष्मीः

संबन्धसामान्यान्तर्गत[illegible]नुयोगिक[illegible]योगिकसंयोगे तादृशप्रतियोगिताश्रयवन्हिप्रतियोगिकसंबन्धत्व-वन्हिमद्‌योगोलकानुयोगिकसंबन्धत्वोभयसत्वात्साध्याभावस्य लक्षणाघटकत्वादिति भावः।

तद्दोषस्य। अतिव्याप्तेः। वक्ष्यमाणत्वात्। तथा चोक्तस्थलेऽतिव्याप्तिरत्र लक्षणेऽस्त्येवेति भावः।

अप्रसिद्‌ध्यैवेति। कुत्रापि संयोगे उभयत्वावच्छिन्नप्रतियोगिकत्वविरहादप्रसिद्धिर्बोध्या। तदुभयत्वावच्छिन्नाभावस्य। वन्हिधूमोभयत्वावच्छिन्नप्रतियोगिकाभावस्य। लक्षणाघटकतेति। तादृशोभयाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वाप्रसिद्‌ध्या यादृशप्रतियोगितावच्छेदकपदेन घटत्वादेरेव धारणात्। नाव्याप्तिरिति। संयोगसामान्ये धूमाधिकरणपर्वतानुयोगिकत्वसत्वेपि वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्वाप्रसिद्‌ध्याऽभावान्तरमादाय नाव्याप्तिरित्यर्थः। अत एव। उभयत्वावच्छिन्नप्रतियोगिकत्वाप्रसिद्‌ध्या तदवच्छिन्नाभावस्य लक्षणाघटकत्वादेव। तथा च तुल्ययुक्त्या यादृशप्रतियोगितावच्छेदकपदेन घटत्वादिकमादाय वह्निधूमोभयवान् वह्नेरित्यत्रातिव्याप्तिर्दोस्यत इति भावः। ननु तादृशोभयविषयकज्ञाननिष्ठप्रकारितासंबन्धे वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्वं प्रसिद्धमेवेति वन्हिधूमोभयवान् धूमादित्यत्राव्याप्तिः, अन्यत्र प्रसिद्धस्य वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्वस्य संयोगसामान्ये विरहेणोभयाभावसत्वेनाऽव्याप्तिः। नातिव्याप्तिश्च वन्हिधूमभयवान् वन्हेरित्यत्र, संयोगसामान्ये वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्वविरहप्रयुक्तोभयाभावसत्वेन साध्याभावस्य लक्षणघटकत्वात्, तथाचाऽत एवेति ग्रन्थादित्याशंकां निराकरोति। प्रकारित्वादौ संबन्धत्वाभावादिति। तथात्वात्। संबन्धत्वात्। तथा च प्रकारित्वं संबन्धत्वाभाववत्, विशिष्टधीनियामकत्वाभावादिति प्राचां प्रयोगः। तेषामयमाशयः। यस्य संबन्धत्वं तेन विशिष्टबुद्धिरवश्यं जन्यते सा च मत्वर्थकेण बोध्यते, यथा वह्निमान् पर्वतः, रूपवान् घट इत्यादि न हि वह्निमद्‌ज्ञानं, वह्निमानभावः इत्यादिः प्रामाणिकानामभिलापः। तथा च विषयित्वप्रतियोगित्वादीनां संसर्गता नास्ति, अस्ति च वन्हिं जानामि घटो नास्तीत्याद्यनुभवः,

न च वह्नि—धूमोभयत्वावच्छिन्नप्रकारित्वादावेव तादृशोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धत्वाप्रसिद्धिसम्भवः। प्राचां मते—प्रकारित्वादेः सम्बन्धत्वाभावात्, विशिष्टधीनियामकस्यैव तथात्वादिति ध्येयम्।

न चैवमपि 'घटवान्नित्यज्ञानत्वा' दित्यत्राऽव्याप्तिः, विषयितासम्बन्धे गगनीयत्व, नित्यज्ञानानुयोगिकत्वोभयत्वेन [ गगनत्वेन ] गगनाभावमादायापि प्रसिद्ध्यसम्भवादिति वाच्यम्, तादृशसम्बन्धेन घटादेर्व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्यस्याप्रवेशादिति ध्येयम्।

---

लक्ष्मीः

नहि तेन तेषां संबन्धत्वसिद्धिः, द्वितीया प्रथमाविभक्त्योः संबन्धबोधकत्वाभावात्, ज्ञानाभावयोः प्रत्यक्षे विषयित्वप्रतियोगित्वादिकं प्रकारतयैव भासते इति। तथा च वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्वाप्रसिध्या यादृशप्रतियोगितावच्छेदकपदेन घटत्वादेरेव धर्त्तव्यतया नाव्याप्तिः, तुल्ययुक्त्या साध्याभावस्य लक्षणघटकत्वेनोभयसाध्यकव्यभिचारिणि अतिव्याप्तिसंपादक अत एवेत्यादिग्रन्थसंगतिश्चेति ध्येयम्। प्राचामित्यस्वरससूचनाय स च विषयित्वप्रतियोगित्वाद्यनुपस्थितिदशायां विषयविशिष्टज्ञान—प्रतियोगिविशिष्टाभावादिप्रत्यक्षाद्यनुत्पत्तिरिति।

शंकते। न चेति। एवमपि। घटवान् महाकालत्वादित्यत्राव्याप्तिवारणेपि। नित्यज्ञानत्वादिति। व्यभिचारवारणार्थं नित्यपदम्, अन्यथा घटाभाववति पटादिविषयकज्ञाने ज्ञानत्वसत्वाद्व्यभिचारः स्यात्। गगनीयत्वं—गगनप्रतियोगिकत्वम्। गगनाभावमादायापीति। अपिना पटाभावादिवस्तुमात्राभावसमुच्चयः। नित्यज्ञानान्यत्वविशिष्टपटाद्यभावस्यापि नित्यज्ञाने प्रतियोगिसमानाधिकरणत्वात्। नित्यज्ञानस्य सर्वविषयकत्वात्। समाधत्ते। तादृशसंबन्धेनेति। विषयितासंबन्धेनेत्यर्थः। व्याप्यवृत्तितया। हेत्वधिकरणेऽवच्छिन्नवृत्तिकान्यतया।

ननु विषयितया घटादेः 'साध्यतावच्छेदकसंबन्धेन यत्स्वाधिकरणं तद्वृत्त्यभावस्य तादृशसंबन्धावच्छिन्नप्रतियोगित्वाभावरूपं व्याप्यवृत्तित्वं नास्ति, तच्च नित्यज्ञानानुयोगिकविषयितया घटादेरेव एवं च तस्य प्रतियोगिवैयधिकरण्यघटितलक्षणलक्ष्यत्वात्कथमव्याप्तिवारण-

अत्र ब्रूमः,—साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्याधिकरणतानिरूपित-स्वरूपसम्बन्धेन, यदभाव—प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववत्त्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेनैव सामञ्जस्ये, —निरुक्तप्रतियोगिकत्वे'त्यादिखण्डशः प्रसिद्धिर्विफला, 'कालो घटवान् महाकाल-त्वा' दित्यादौ,—कालिकसम्बन्धावच्छिन्नघटाधिकरणतानिरूपितस्वरूपसम्बन्धेन—प-टत्वावच्छिन्नाधिकरणत्वसामान्याभावस्यैव हेतुमति सत्वेन—पटत्वावच्छिन्नाभावस्यैव निरुक्तप्रतियोगिव्यधिकरणस्य सुलभत्वादिति ध्येयम् ।

---

## लक्ष्मीः

मिति चेन्न । स्वरूपसंबन्धेन गगनादेर्वृत्तिमत्त्वमते घटवान् महाकाल-त्वादित्यत्रेवात्रापि अव्याप्तेरिष्टत्वात् ।

ननु व्याप्यवृत्तिसाध्यकस्थलीय लक्षणे हेत्वधिकरणवृत्तिसाध्यता-वच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिध्या व्याप्यवृत्ति-साध्यकस्थलीयलक्षणस्याव्याप्तिरिति चेन्न । साध्यतावच्छेदकसंबन्धा-तिरिक्तसंबन्धावच्छिन्नत्व साध्यनिष्ठत्वोभयाभावस्यैव प्रतियोगितायां निवेशेन समवायेन पटाभावस्यैव तथात्वेनाऽव्याप्तिविरहात् ।

विशेषरूपेण संसर्गतामभ्युपेत्याह । **अत्र ब्रूम इति** । साध्यता-वच्छेदकसंबन्धावच्छिन्नप्रकृतसाध्याधिकरणतानिरूपितसंबन्धेन । सा-ध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधेयतानिरूपि-ताधिकरणताप्रतियोगिकस्वरूपसंबन्धेन । तथा च संयोगेन वह्न्य-धिकरणताप्रतियोगिकस्वरूपेणघटाभावप्रतियोग्यधिकरणत्वाभाववान् पर्वतादिः तादृशघटाभावप्रतियोगितानवच्छेदकत्वस्यवह्नित्वे सत्त्वा-ल्लक्षणसमन्वयः । धूमवान् वन्हेरित्यादौ संयोगसंबन्धा-वच्छिन्नधूमत्वावच्छिन्नाधेयतानिरूपिताधिकरणताप्रतियोगिकस्वरूप - संबन्धेन धूमाभावप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिक-रणतासामान्याभाववत्वमयोगोलकस्य तादृशधूमाभावप्रतियोगितावच्छे-दकत्वस्यैव साध्यतावच्छेदके धूमत्वे सत्त्वान्नातिव्याप्तिः । संयोगसंब-न्धावच्छिन्नधूमाधिकरणताप्रतियोगिकस्वरूपसंबन्धेन घटाभावप्रति-योगितावच्छेदकावच्छिन्नाधिकरणत्वाभावस्याऽयोगोलके सत्वात्तादृश-घटाभावप्रतियोगितानवच्छेदकत्वस्य धूमत्वे सत्त्वाद् धूमवान् वन्हे-रित्यादावतिव्याप्तिवारणाय सामान्यपदम् । **निरुक्तप्रतियोगिकत्वे**

"स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु,-निरुक्तप्रतियोग्य

---

एवं—यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसम्बन्धसामान्ये,—साध्यतावच्छेदकसम्बन्धत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसम्बन्धत्वोभयाभावः,—तादृशप्रतियोगिता कथं नोक्तेति चिन्तनीयम् ॥

---

लक्ष्मीः

**त्यादीति** । साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिकत्वादीत्यर्थः । कालो घटवान् महाकालत्वादित्यत्राव्याप्तिं निराकरोति । कालो घटवानिति ।

**एवं** । विशेषरूपेण संसर्गतास्वीकारे । **यादृशेति** । वन्हिमान् धूमादित्यादौ वन्हित्वावच्छिन्नप्रतियोगिकसंबन्धसामान्यान्तर्गतसंयोगसंबन्धे साध्यतावच्छेदकसंबन्धत्व—हेत्वधिकरणपर्वतानुयोगिकत्वयोर्द्वयोः सत्वेन यादृशप्रतियोगितापदेन घटादिनिष्ठप्रतियोगितैवधर्त्तव्या, तथा च घटत्वावच्छिन्नप्रतियोगिक संबन्धसामान्यान्तर्गतसंयोगसंबन्धे हेत्वधिकरणपर्वतानुयोगिकत्वविरहेणोभयाभावसत्वात्तादृशघटनिष्ठप्रतियोगितानवच्छेदकत्वस्य वन्हित्वे सत्वाल्लक्षणसमन्वयः ।

धूमवान् वन्हेरित्यादौ धूमत्वावच्छिन्नप्रतियोगिकसंबन्धसामान्यान्तर्गतसंयोगेऽयोगोलकानुयोगिकत्वविरहेणोभयाभावसत्त्वात्तादृशप्रतियोगितानवच्छेदकत्वस्य धूमत्वेऽसत्वान्नातिव्याप्तिः ।

धूमप्रतियोगिककालिकसंबन्धे हेत्वधिकरणानुयोगिकत्वाभावविरहादतिव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धत्वेति । अव्याप्तिस्तु नास्ति अवृत्तिगगनादिप्रतियोगिकसंबन्धे हेत्वधिकरणानुयोगिकत्वाभावात् ।

गगनप्रतियोगिकतादात्म्यसंसर्गे कालिकसंबन्धत्व, हेत्वधिकरणमहाकालानुयोगिकत्वोभयाभावसत्वाद् गगननिष्ठप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वाल्लक्षणसमन्वयः ।

न च साध्यतावच्छेदकसंबन्धत्वविशिष्टहेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वाभाव एव कथं नोक्त इति वाच्यम् । संयोगी गुणकर्मान्यत्वादित्यत्र संयोगनिष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसमवाये साध्यतावच्छेदकसंबन्धत्वविशिष्टहेत्वधिकरणद्रव्यानुयोगिक-

—नधिकरणहेतुसन्निष्ठाभावप्रतियोगितासामान्ये,—

कालस्य जगदाधारत्वप्रवादमनुसृत्याह,—* स्वरूपसम्बन्धेनेति * । कालिकविशेषणतयेत्यर्थः । गगनादेरवृत्तित्वप्रवादस्तु संयोगसमवायपरः, तथाचोक्तप्रणाल्याऽपि गगनाभावो न प्रतियोगिव्यधिकरण इति,—'घटवान् महाकालत्वा'दित्यादावव्याप्तिस्तदवस्थैवेति भावः ।

* निरुक्तेति * । प्रतियोगितावच्छेदकसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वं हेतमतस्तादृशप्रतियोगितासामान्य इत्यर्थः । तथा च संयोगा-

लक्ष्मीः

त्वस्यैव सत्वात्तादृशप्रतियोगिताया धर्तुमशक्यत्वात्, साध्यतावच्छेदकसंबन्धत्वविशिष्टसामान्याद्यनुयोगिकत्वस्याप्रसिद्ध्या यत्किञ्चिद्वृत्त्यधिकरणपदेन सामान्यादेर्धर्तुमशक्यत्वादतिव्याप्त्यापत्तेः ।

**गगनादेर्वृत्तिमत्वे तु इति** । कालः सर्ववानिति प्रतीतेः संकोचे मानाभावादित्याशयः । तु शब्दोऽवधारणे ।

ननु गगनादेः कालिकेनावृत्तित्वेपि घटवन्नित्यज्ञानत्वादित्यत्राव्याप्तिः पूर्वकल्पे दुर्वारा, घटाभावस्य प्रतियोगिवैयधिकरण्यासंभवात्, नित्यज्ञानान्यत्वविशिष्टघटाभावस्यापि पूर्वोक्तदिशा तथात्वासंभवात्, एवं च स्वरूपसंबन्धेन गगनादेर्वृत्तिमत्वेऽवृत्तिमत्त्वे वा कल्पान्तरानुसरणस्यावश्यकत्वे वृत्तिमत्वे तु इत्यसंगतमिति चेन्न । प्राचां नये वृत्त्यनियामकसंबन्धस्य व्याप्यता-व्यापकताघटकत्वं नेष्यते इत्याशयेनैव तत्संगतेः ।

वस्तुनो विषयितासंबन्धेन घटादेर्व्याप्यवृत्तितया तत्र प्रतियोगिवैयधिकरण्यस्यानुपादेयत्वम् ।

अपरे तु वृत्तिमत्त्वे तु इत्यस्य वृत्तिमत्वेपीत्यर्थः । अपिनाऽवृत्तिमत्वसमुच्चयः । तथा चाऽवृत्तिमत्वे विषयितया साध्यतायामेवोक्ताऽव्याप्त्या, वृत्तिमत्वे कालिकसंबन्धेन साध्यतायामपि अव्याप्त्या कल्पान्तरानुसरणमित्याशय इत्याहुः ।

ननु स्वरूपसंबन्धेन गगनादेर्वृत्तिमत्त्वे गगनादेरवृत्तित्वप्रवादो व्याहन्येताऽतआह । **अवृत्तित्वप्रवादस्त्विति । तथा च ।** गगनादेर्वृत्तिमत्वे च । **उक्तप्रणाल्यापि** । संबन्धधर्मिकोभयाभावघटितकल्पे-

**यत्सम्बन्धावच्छिन्नत्व, यद्धर्मावच्छिन्नत्वोभयाभावः,—**

दिना घटाद्यभावमादायैव घटवान् महाकालत्वादित्यत्र लक्षणसङ्गतिः ।

लक्ष्मीः

पि । **अव्याप्तिस्तदवस्थैवेति** । साध्यतावच्छेदककालिकसंबन्धसामान्ये गगनत्वावच्छिन्नप्रतियोगिकत्वमहाकालानुयोगिकत्वसंबन्धयोः सत्वेन गगनाभावस्यापि प्रतियोगिवैयधिकरण्यासंभवादिति भावः ।

**प्रतियोगितावच्छेदकसंबन्धेनेति** । प्रतियोगितावच्छेदकसंबन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये साध्यतावच्छेदकीभूतयद्धर्मावच्छिन्नत्व,साध्यतावच्छेदकीभूतयत्संबन्धावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नो हेतोर्व्यापकः तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति समुदितार्थः । वह्निमान् धूमादित्यत्र संयोगेन घटत्वावच्छिन्नानधिकरणहेत्वधिकरणं पर्वतवृत्तिघटाभावप्रतियोगितायां साध्यतावच्छेदकीभूतसंयोगसंबन्धावच्छिन्नत्वसत्वेपि साध्यतावच्छेदकीभूतवन्हित्वावच्छिन्नत्वविरहेणोभयाभावसत्वात् संयोगेन वन्हित्वावच्छिन्नस्य धूमव्यापकत्वम् । एवं समवायेन वन्ह्यभावप्रतियोगितायां वन्हित्वावच्छिन्नत्वसत्वेपि संयोगसंबन्धावच्छिन्नत्वविरहप्रयुक्तोभयाभावो बोध्यः ।

धूमवान् वन्हेरित्यादौ संयोगेन धूमानधिकरणायोगोलकवृत्तिसंयोगेन धूमाभावप्रतियोगितायां संयोगसंबन्धावच्छिन्नत्व, धूमत्वावच्छिन्नत्वोभयस्यैव सत्वान्नातिव्याप्तिः ।

**तथा च** । प्रतियोगितायां उभयाभावनिवेशे च । **लक्षणसंगतिरिति** । संयोगेन घटाभावप्रतियोगितायां घटत्वावच्छिन्नत्वसत्वेपि कालिकसंबन्धावच्छिन्नत्वविरहेणोभावसत्वात्कालिकेन घटस्य व्यापकत्वाल्लक्षणसमन्वय इति भावः ।

कालिकेन धूमाभावस्य प्रतियोगिसमानाधिकरणतयाऽभावान्तरीय प्रतियोगितायामुभयाभावसत्वाद् धूमवान् वह्नेरित्यत्रातिव्याप्तिरतः प्रतियोगितावच्छेदकसंबन्धेनेति । प्रतियोगितावच्छेदकसंबन्धेनेत्यत्र साध्यतावच्छेदकसंबन्धेनेति तु न वाच्यम् । घटवान् महाकालत्वादित्यत्रैव साध्यतावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधि-

घटाभावप्रतियोगितायां धूमत्वावच्छिन्नत्व–संयोगसम्बन्धावच्छिन्नत्वोभयाभावसत्वेन धूमादेः संयोगेन वह्न्यादिव्यापकत्वापत्तिवारणाय—* सामान्येति * । तथाच,—धूमनिष्ठताद्दशप्रतियोगितायामेव तदुभयसत्वाददोषः ।

*यत्सम्बन्धेनेतिः* । समवायिनः संयोगेन साध्यतायां घटत्वादिः हेतावव्याप्तिः, साधनवन्निष्ठस्य समवायेन संयोगिसामान्याभावस्य प्रतियोगितायां—संयोग—समवायोभयावच्छेद्यतासत्वादतो 'धर्म-सम्बन्ध'—योरुपादानं,

---

लक्ष्मीः

करणहेत्वधिकरणाप्रसिध्याऽव्याप्त्यापत्तेः । विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नेति । **सामान्यपदव्यावृत्तिमाह । घटाभावप्रतियोगितायामिति** । संयोगेन घटत्वावच्छिन्नानधिकरणहेत्वधिकरणायोगोलकवृत्तिघटाभावप्रतियोगितायामित्यर्थः । **तथा च** । सामान्यपदोपादाने च । **धूमनिष्ठताद्दशप्रतियोगितामेवेति** । प्रतियोगितावच्छेदकसंबन्धेन धूमत्वावच्छिन्नानधिकरणायोगोलकवृत्त्यभावप्रतियोगितासामान्यान्तर्गतधूमनिष्ठप्रतियोगितायामेवेत्यर्थः । एव कारेणोदासीनप्रतियोगिताव्यवच्छेदः । **तदुभयसत्वात्** । संयोगसंबन्धावच्छिन्नत्व, धूमत्वावच्छिन्नत्वोभयसत्वात् । **अदोषः** । न धूमादेर्वन्हिव्यापकत्वम् । नातिव्याप्तिरिति यावत् । **यद्धर्मः** । साध्यतावच्छेदको धर्मः । **यत्संबन्धः** । साध्यतावच्छेदकसंबन्धः । अत्र यदि यद्धर्मवच्छिन्नत्वाभावमात्रमुच्यते तदा समवायेन वन्ह्यभावीयप्रतियोगितायां यद्धर्मावच्छिन्नत्वाभावविरहाद्वन्हिमान् धूमादित्यादावव्याप्तिः स्यात् । यदि यत्संबन्धावच्छिन्नत्वाभावमात्रमुच्यते तदा संयोगेन घटाभावीयप्रतियोगितायां यत्संबन्धावच्छिन्नत्वाभावविरहात्तद्दोषतादवस्थ्यम् । तथा च प्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावीय प्रतियोगितात्वव्यापकोभयाभावस्तन्निरूपितनिरूपकत्वनिष्ठप्रतियोगितानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकनिष्ठत्वसंबन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नसामानाधिकरण्यम् ।

अथ साध्यतावच्छेदको धर्मः—संबन्धश्च तथा च साध्यतावच्छेदकपदेनोभयोः संग्रहात् साध्यतावच्छेदकावच्छिन्नत्वरूपयदवच्छिन्न-

तथा च तदभावप्रतियोगितायाः,—धर्म्मविधया समवायेन, सम्बन्धविधया संयोगेन चावच्छेद्यत्वाभावान्नाव्याप्तिरिति भावः।

लक्ष्मीः

त्वस्याऽभाव एव निवेश्यतामालमुभयाभावनिवेशेन। न च समवायेन वन्ह्यभावप्रतियोगितायां साध्यतावच्छेदकवह्नित्वावच्छिन्नत्वसत्वाद् वह्निमान् धूमादित्यत्राव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकताश्रयीभूतं यद्यत्तावदवच्छिन्नत्वाभावस्य विवक्षणीयत्वात्समवायेन वन्ह्यभावप्रतियोगितायां संयोगावच्छिन्नत्वविरहात्साध्यतावच्छेदकं यद्यत्तावदवच्छिन्नत्वाभावस्याक्षतत्वादित्यत आह। **समवायिना इति**। घटत्वादि हेतौ समवायिमान्घटत्वादित्यत्र सद्धेतौ। घटे समवायिनो द्रव्यान्तरस्य संयोगेन सत्वात्सद्धेतुतयाऽव्याप्तिरित्यर्थः। **प्रतियोगितायां**। समवायेन संयोग्यनधिकरणघटवृत्तिसमवायेन संयोग्यभावप्रतियोगितायाम्। संयोगसमवायोभयावच्छेद्यत्वासत्वादिति। सम्बन्धविधया समवायेन, धर्मविधया संयोगेन चावच्छिन्नत्वादित्यर्थः। **तथा च**। धर्मसंबन्धयोरुभयोरुपादाने च। **तदभावप्रतियोगितायां**। समवायेन संयोग्यभावप्रतियोगितायां। **धर्मविधया समवायेनेति**। अवच्छेद्यताविरहादित्यनेनान्वयः। धर्मविधया समवायावच्छिन्नत्वविरहात्, एवं संबन्धविधया संयोगावच्छिन्नत्वविरहादित्यर्थः।

ननु तथापि धर्मविधया साध्यतावच्छेदकावच्छिन्नत्वयदवच्छिन्नत्वोभयाभाव एव निवेश्यतां किं संबन्धावच्छिन्नत्वनिवेशेनेति चेन्न। विषयिताविशिष्टस्य कालिकेन साध्यतायां जन्यत्वहेतौ विषयिताविशिष्टस्य विषयितयाऽभावमादायातिव्याप्तिरतः संबन्धावच्छिन्नत्वनिवेशः। एवं कालिकविशिष्टस्य विषयितया साध्यतायां तद्ज्ञानत्वहेतौ विषयिताविशिष्टविषयितयाऽभावमादायाव्याप्तिरतो धर्मपदम्।

ननु धर्मसंबन्धयोरुपादानेपि धर्मत्वं संबन्धत्वं चाऽव्यावर्त्तकमित्युक्तदोषतादवस्थ्यमिति चेन्न। साध्यतानिरूपिता या किञ्चित्संबन्धानवच्छिन्नावच्छेदकता तदभाववान् यः तन्निष्ठकिञ्चित्संबन्धानवच्छिन्नावच्छेदकत्वानिरूपकत्वं साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमित्यस्यार्थः।

एवं साध्यतानिरूपिता या किञ्चित्संबन्धावच्छिन्नावच्छेदकताव

अत्र च क्वचित्—'यादृशसम्बन्धावच्छिन्ने'त्यपि द्रष्टव्यं, शब्दैक्यस्याऽनुपादेयत्वात्, तेन धूमवति तत्तत्संयोगसम्बन्धेन वह्निसामान्याभावसत्वेऽपि नाव्याप्तिः, तत्तत्संयोगाद्यवच्छिन्नप्रतियोगितायाः संयोगसामान्यानवच्छिन्नत्वात्, सयोगत्वस्य सम्बन्धविधयावच्छेदकतावच्छेदकत्वस्थल एव तथात्वात् ।

---

लक्ष्मीः

दभाववान् यः तन्निष्ठकिञ्चित्संबन्धावच्छिन्नावच्छेदकत्वानिरूपकत्वं साध्यतावच्छेदकावच्छिन्नत्वमित्यस्यार्थः ।

समवायिनः संयोगेन साध्यतास्थले समवायेन संयोग्यभावो न लक्षणघटकः, तथाहि—साध्यतानिरूपिताकिंचित्संबन्धानवच्छिन्नासंयोगनिष्ठावच्छेदकता तदभाववान् समवायः तन्निष्ठकिंचित्संबन्धानवच्छिन्नावच्छेदकतानिरूपकत्वस्यैव तदीय प्रतियोगितायां सत्वात् ।
एवं साध्यतानिरूपिताकिञ्चित्संबन्धावच्छेदकता समवायनिष्ठा तदभाववान् संयोगस्तन्निष्ठकिञ्चित्संबन्धावच्छेदकतानिरूपकत्वस्यैव तदीयप्रतियोगितायां सत्वात् ।

अत्र च । अस्मिन् लक्षणे च । यादृशसंबन्धावच्छिन्नेति । यद्रूपेण संयोगादेः साध्यतावच्छेदकसंसर्गत्वे तद्रूपपर्याप्तावच्छेदकताकावच्छेदकतानिरूपकत्वं यादृशसंबन्धावच्छिन्नत्वमित्यस्यार्थः । तथा च साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगितासामान्ये इति यावत् । रूपवृत्तित्वं च प्रतियोगितायां स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसं० । स्वं० प्रतियोगिता । लक्षणस्य लक्ष्यभेदेन नानात्वमिष्टमेवेत्याह । शब्दैक्यस्याकिञ्चित्करत्वादिति । तेन । पर्याप्तिविवक्षणेन । वन्हिसामान्याभावसत्वेपि । तादृशप्रतियोगितासामान्यान्तःपातितत्तत्संयोगावच्छिन्नवन्हिसामान्याभावप्रतियोगितायाः संयोगावच्छिन्नत्व—वन्हित्वावच्छिन्नत्वोभयवत्वेपि । अवच्छेदकतावच्छेदकत्वे एव । साध्यतावच्छेदकतावच्छेदकत्वे, एव कारेण तत्तत्संयोगत्वस्य व्यवच्छेदः । तथात्वात् । संयोगसामान्यावच्छिन्नत्वात् । यादृशधर्मावच्छिन्नेति । यद्रूपेण धर्मविधया साध्यतावच्छेदकत्वं तद्रूपपर्याप्ता-

एवं 'यद्धर्मावच्छिन्ने'त्यत्रापि,—क्वचित् 'यादृशधर्मावच्छिन्ने'ति बोध्यं। तेन दण्डिमान् दण्डिसंयोगा'दित्यादौ तादृशप्रतियोगितायां तद्दण्डावच्छेद्यत्व-संयोग-सम्बन्धावच्छेद्यत्वोभयाभावासत्वेऽपि नाव्याप्तिः। प्रमेयत्वावच्छेद्यत्वविशिष्ट-स्वरूप-सम्बन्धावच्छिन्नत्वाप्रसिध्या 'प्रमेयवान् वाच्यत्वा'दित्यादावव्याप्तिरतो—विशिष्टाभावमपहाय तादृशोभयाभाव उक्तः।

न च 'निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीय-यद्धर्मावच्छिन्नप्रतियोगितासामान्ये,—यत्सम्बन्धावच्छिन्नत्वाभावस्तत्सम्बन्धेन तद्धर्मावच्छिन्नं व्यापक'-मित्यर्थोऽस्तु, धर्मान्तरावच्छिन्नाभावाप्रवेशेन लाघवादिति वाच्यम्।

'घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वा'दित्यादावव्याप्तेः, तादृशद्रव्यत्वभेदमादाय कथञ्चित्तत्र लक्षणसमन्वयेऽपि,—'द्रव्यत्वविशिष्टप्रमेयवान् स्थूलद्रव्यत्वा'दित्यत्राव्याप्ति, केनापि सम्बन्धेन हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासम्भवात्।

तत्रापि द्रव्यन्तरानुयोगिकसमवायादिसम्बन्धेन हेतुमतः प्रकृतसाध्यानधिकरणत्वे तूक्तक्रमेणापि व्यापकत्वं सुवचमिति तु—विभावनीयमिति।

---

लक्ष्मीः

वच्छेदकताकावच्छेदकतानिरूपकत्वम्। **क्वचिदिति**। यत्र साध्यतावच्छेदकता किञ्चिद्धर्मावच्छिन्ना तत्रेत्यर्थः।

तथा च साध्यतावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगितासामान्ये इति यावत्। **नाव्याप्तिरिति**। तद्दण्डाभावप्रतियोगितायां दण्डत्वमात्रविशिष्टदण्डावच्छिन्नत्वविरहेणोभयाभावसत्वादिति भावः। **विशिष्टाभावम्**। यत्संबन्धावच्छिन्नत्वविशिष्टयद्धर्मावच्छिन्नत्वाभावं। तथा चाऽन्यत्र प्रसिद्धस्य प्रमेयत्वावच्छिन्नत्वस्य स्वरूपसंबन्धावच्छिन्नत्वस्य चोभयाभावः प्रतियोगितायामिति भावः। अथात्रोक्तस्थले प्रसिद्धिवारणाय व्याप्यवृत्तिसाध्यकस्थलीय लक्षणे एवोभयाभावो निवेश्यताम्, अव्याप्यवृत्तिसाध्यकस्थलीयलक्षणे पुनर्विशिष्टाभावनिवेशे किं बाधकम्। **द्रव्यत्वभेदमादायेति**। तादात्म्येन तथाविधद्रव्यत्वानधिकरणत्वस्य घटे सम्भवादिति भावः। **विभावनीयमिति**। अत्र यद्वक्तव्यं तदुक्तं प्राक्। न च साध्यवति स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकतत्तत्प्रमेयाभावसत्वेन सर्वेषां प्रमेयाणां तत्प्रतियोगित्वेन

तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यम् ।

तेन सम्बन्धेनेति । न चैवं संयोगेनापि रूपस्य पृथिवीत्वव्यापकत्वापत्तिः, तेन सम्बन्धेन रूपाभावप्रतियोग्यधिकरणाप्रसिद्धेरिति वाच्यम्;

तथात्वेऽपि तेन सम्बन्धेन रूपसामानाधिकरण्याप्रसिद्धैव व्याप्तिलक्षणाति-

लक्ष्मीः

कथमस्य व्याप्यवृत्तित्वमिति वाच्यम् । एवमपि गगनाभाववाच्यत्वादिरूपप्रमेयाणां अप्रतियोगित्वादिति चेन्न । घटत्वाभावपटत्वाभावान्यतरस्य साध्यतायां प्रमेयत्वहेतावव्याप्यवृत्तिसाध्यके विशिष्टाप्रसिध्याऽव्याप्त्यापत्तेः, नहि अस्यापि व्याप्यवृत्तिसाध्यकत्वम्, साध्यवति घटत्वाभावाभावस्य पटत्वाभावाभावस्य च सत्वेन तत्प्रतियोगित्वस्यैव साध्ये सत्वात् । न च विशिष्टाभावोभयाभावमादायाऽऽत्मत्वसाध्यकस्याव्याप्यवृत्तिताभयेन साध्यतावच्छेदकसंबन्धेन यत्त्वाधिकरणं तद्वृत्त्यभावस्य तादृशसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकपर्यन्तानुसरणस्यावश्यकत्वेनोक्तान्यतरत्वस्य च तथात्वात्कथं तस्याऽव्याप्यवृत्तित्वमिति वाच्यम् । उक्तापत्तिवारणाय प्रतियोगित्वे एव साध्यतावच्छेदकविशिष्टान्यत्वनिवेशात् । वैं० स्वावच्छिन्नत्व—स्वेतरावच्छिन्नत्वोभय सं० । ननु तथापि यत्संबन्धावच्छिन्नतादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्वाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्येव कथं नोक्तमिति चेन्न । घटवान् महाकालत्वादित्यादावव्याप्तेः, कालिकसंबन्धावच्छिन्नाभावस्य निरुक्तप्रतियोगिवैयधिकरण्यासंभवात् ।

पुनः शंकते । न चेति । एवं । तेन संबन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वोक्तौ । तेन संबन्धेन । संयोगसंबन्धेन । रूपाभावप्रतियोग्यधिकरणाप्रसिद्धेरिति । तथा च संयोगेन रूपाभावो च लक्षणघटकः, तदीय प्रतियोगितावच्छेदकसंबन्धेन रूपत्वावच्छिन्नाधिकरणाप्रसिध्या तदनधिकरणत्वस्यापि वक्तुमशक्यत्वात्, अपितु संयोगेन घटाभाव एव तथा, तदीय प्रतियोगितायां साध्यतावच्छेदकसंयोगावच्छिन्नत्वसत्वेपि रूपत्वावच्छिन्नत्वविरहेणोभयाभावसत्वात् । अत्र संबन्धावच्छिन्नप्रतियोगितायामुभयाभावस्यैव सत्वात् संयोगेन

ङ्याप्तिविरहात्, 'यद्धर्मेत्यत्र धर्मस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणता-निरूपकतावच्छेदकत्वेनापि विशेषणीयत्वाच्चा ।

[ तेन वन्ध्याकाशोभयत्वादिनाऽपि न व्यापकत्वमिति ]

नच वृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिः, तादृशसम्बन्धस्य प्रतियोगितानवच्छेदकतया तत्सम्बन्धावच्छिन्नत्वस्याप्रसिद्धेः,—

—तादृशसम्बन्धस्यापि प्रतियोगितावच्छेदकत्वपक्ष एव एतादृशनिरुक्त्यादरात् ।

---

लक्ष्मीः

रूपस्य पृथिवीत्वव्यापकत्वापत्तिरिति भावः । **तथात्वेपि** । संयोगेन रूपस्य पृथिवीत्वव्यापकत्वेपि । **तेन संबन्धेन** । संयोगसंबन्धेन । ननु व्याप्तिलक्षणाऽतिव्याप्त्यसंभवेपि व्यापकत्वापत्तिदुर्वारेत्यस्वरसादाह । **यद्धर्मेत्यत्रेति** । यद्धर्मावच्छिन्नत्वघटके । **धर्मस्य** । धर्मे । तथा च रूपत्वस्य संयोगसंबन्धावच्छिन्नाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वाद्वारणम् । **विशेषणीयत्वाद्वेति** । अतिव्याप्तिविरहादिति पूर्वेणान्वयः ।

शंकते । **न चेति** । **वृत्त्यनियामकसंबन्धेन** । स्वामित्वादिसंबन्धेन । **साध्यतायां** । धनी चैत्रत्वादित्यत्र । **अव्याप्तिरिति** । संयोगेन घटाभावस्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यधिकरणस्य हेत्वधिकरणे प्रसिद्धत्वेपि तदीय प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्याप्रसिद्धिः । तत्र हेतुमाह । **तादृशसंबन्धस्येति** । वृत्त्यनियामकस्वामित्वादिसंबन्धस्येत्यर्थः । **तत्संबन्धावच्छिन्नत्वस्य** । वृत्त्यनियामकस्वामित्वसंबन्धावच्छिन्नत्वस्य । **अप्रसिद्धेः** । प्रतियोगितायामिति शेषः । तथा च तद्घटितोभयाभावाऽप्रसिध्याऽव्याप्तिरिति भावः । समाधत्ते । **तादृशसंबन्धस्यापीति** । वृत्त्यनियामकस्वामित्वादिसंबन्धस्यापीति । अपिना वृत्तिनियामकसंबन्धस्य समुच्चयः । एतादृशाव्याप्तिवारणायेत्यादिः । **प्रतियोगितावच्छेदकत्वपक्षे एवेति** । वृत्त्यनियामकसंबन्धावच्छिन्नप्रतियोगितास्वीकारपक्षे एवेत्यर्थः । **एतन्निरुक्त्यादरात्** । एतल्लक्षणप्रणयनात् । तथा च प्रतियोगिव्यधिकरणसंयोगेन घटाभावप्रतियोगितायामुभयाभावस्य प्रसिद्ध-

"निरुक्तप्रतियोगितासामान्ये,—यत्सम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्व, यद्धर्मावच्छिन्नत्वोभयाभावस्तत्सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्व" मिति तु न युक्तम्।

वृत्त्यनियामकसम्बन्धेन साध्यतायां व्यभिचारिण्यतिव्याप्त्यापत्तेः। यद्वा— "स्वावच्छेदकताघटकसम्बन्धेन यादृशप्रतियोगितावच्छेदकानधिकरणं हेत्वधिकरणं, तादृशप्रतियोगितासामान्ये,—यद्धर्मावच्छिन्नावच्छेदकताकत्व—यत्सम्बन्धावच्छिन्ना-वच्छेदकत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं विवक्षितं,

वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वाभावेऽपि,—प्रतियोगितावच्छेदकताघटकसम्बन्धत्वं सर्वसम्मतमेव,—

---

लक्ष्मीः

त्वान्नाव्याप्तिरिति भावः।

वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वेपि। तादृशार्थविवक्षया तत्संबन्धेन साध्यतायामव्याप्तिं वारयतां मतमाह' **निरुक्तप्रतियोगितासामान्ये इति**। प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणहेतुमद्वृत्त्यभावप्रतियोगितासामान्ये इत्यर्थः। यत्संबन्धावच्छिन्नत्वमित्यस्य साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धानवच्छिन्नत्वमर्थः। एवं च धनी चैत्रत्वादित्यत्र समवायादिना धनाभावोपि लक्षणघटकः, तदीय प्रतियोगितायां धनत्वावच्छिन्नत्वसत्वेपि स्वामित्वसंबन्धातिरिक्तसमवायाद्यनवच्छिन्नत्वविरहेणोभयाभावसत्वादिति भावः। तन्मतं दूषयति। **व्यभिचारिणि इति**। धनी द्रव्यत्वादित्यत्र। **अतिव्याप्त्यापत्तेरिति**। हेतुमद्घटादिवृत्तिसमवायेन धनाभावप्रतियोगितासामान्यं साध्यतावच्छेदकवृत्त्यनियामकस्वामित्वसंबन्धातिरिक्तसमवायादिसंबन्धावच्छिन्नमेवेति तादृशप्रतियोगितासामान्ये साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धानवच्छिन्नत्वविरहेणोभयाभावसत्त्वादिति भावः।

**यद्वेति**। स्वं-प्रतियोगिता। तथा च प्रतियोगितावच्छेदकताघटकसंबन्धेन यादृशप्रतियोगितावच्छेदकानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नावच्छेदकतानिरूपकत्व, यद्धर्मावच्छिन्नावच्छेदकतानिरूपकत्वोभयाभावः तेन संबन्धेन

"चैत्रो न पचती" त्यादौ वृत्त्यनियामकाऽनुकूलत्वसम्बन्धेन पाकविशिष्टाद्याः कृतेरभावस्य चैत्रादावन्वयदर्शनात् ।

व्यभिचारिणि तु,—साध्यवत्सामान्याभावप्रतियोगितायामेव तादृशोभयाभावविरहान्नातिव्याप्तिरिति तु" —नव्याः ।

---

लक्ष्मीः

तद्धर्मावच्छिन्नस्तद्धेतुव्यापकः, तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः ।

वन्हिमान् धूमादित्यत्र संयोगेन वन्हिमान्नास्तीत्यभावप्रतियोगिता न तादृशी तदवच्छेदकस्य वह्नेरधिकरणत्वस्यैव हेतुमति सत्वात्, किन्तु संयोगेन घटवदभावादिनां समवायेन वन्हिमदभावस्य च प्रतियोगितैव तादृशी तस्यां च संयोगसंबन्धावच्छिन्नावच्छेदकतानिरूपकत्व-वन्हित्वावच्छिन्नावच्छेदकतानिरूपकत्वोभयाभावसत्त्वाल्लक्षणसमन्वयः ।

धूमवान् वन्हेरित्यादौ धूमवान्नास्तीत्यभावप्रतियोगितायां धूमत्वावच्छिन्नावच्छेदकतानिरूपकत्व-संयोगसंबन्धावच्छिन्नावच्छेदकता-निरूपकत्वोभयस्यैव सत्त्वान्नातिव्याप्तिः। धनी द्रव्यत्त्वादित्यत्र स्वामित्वसंबन्धेन धनवान्नास्तीत्यभावप्रतियोगितायां स्वामित्वसंबन्धावच्छिन्नावच्छेदकतानिरूपकत्व—धनत्वावच्छिन्नानिरूपकत्वोभयस्यैव सत्वान्नातिव्याप्तिः।

**चैत्रादावन्वयदर्शनादिति** । चैत्रो न पचतीति वाक्यात्—अनुकूलत्वसंबन्धेन पाकविशिष्टकृत्यभाववांश्चैत्र इति बोधः, तत्रचैत्रवृत्त्यभावीय कृतिनिष्ठप्रतियोगितानिरूपितपाकनिष्ठावच्छेदकतायां वृत्त्यनियामकाऽनुकूलत्वसंबन्धावच्छिन्नत्वं सर्वसम्मतम् । तत्सिद्धं प्रतियोगिताया वृत्यनियामकसंबन्धानवच्छिन्नत्वेपि प्रतियोगितावच्छेदकतावृत्यनियामकसंबन्धावच्छिन्नापि भवतीति ।

सामान्यपदप्रयोजनमाह । **व्यभिचारिणि तु इति** । धूमवान् वह्नेरित्यत्र तु इत्यर्थः । **साध्यवत्सामान्याभावप्रतियोगितायामेवेति** । धूमवान्नास्तीत्यभावप्रतियोगितायामेवेत्यर्थः । **तादृशोभयाभावविरहादिति** । संयोगसंबन्धावच्छिन्नावच्छेदकतानिरूपकत्व, धूमत्वावच्छिन्नावच्छेदकतानिरूपकत्वोभयोः सत्वादित्यर्थः । सामान्यपदा-

लक्ष्मीः

नुपादाने पटवत्सामान्याभावप्रतियोगितायां तादृशोभयाभावसत्वादतिव्याप्तिः स्यादिति भावः।

ननु यादृशप्रतियोगिताश्रयभिन्नं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये तादृशोभयाभावस्यैव सम्यक्त्वे प्रतियोगितावच्छेदकानधिकरणत्वप्रवेशो व्यर्थः, वन्हिमान् धूमादित्यादौ च घटवान्नास्तीत्यभावप्रतियोगिताश्रयघटवद्भूतलभिन्नत्वस्य पर्वतादौ सत्त्वात्तादृशप्रतियोगितायां वह्नित्वावच्छिन्नावच्छेदकतानिरूपकत्वविरहप्रयुक्ततादृशोभयाभावसत्त्वात् लक्षणसमन्वयः। व्यभिचारिणि तु धूमवान्नास्तीत्यभावमादायैवातिव्याप्तिवारणादिति चेन्न।

एवं सति समवायेन द्रव्यत्वस्य साध्यतायां गगत्वादिहेतौ साध्यवदभावमादायाव्याप्तिः स्यात्। तथाहि—समवायसंबन्धावच्छिन्नप्रतियोगिताकद्रव्याभावप्रतियोगित्वस्य लाघवात्समवेतद्रव्ये एव स्वीकारेण तादृशप्रतियोगिताश्रयभिन्नत्वस्य गगने एव सत्त्वात्।

केचित्तु वन्हिमत्पर्वतो नास्तीत्यभावप्रतियोगिताश्रयपर्वतभिन्नत्वस्य महानसादौ सत्वेन तदीयप्रतियोगितायामुभयस्यैव सत्वेन वन्हिमान् धूमादित्यादावव्याप्तिप्रसंगात्। नच तन्निवेशेऽपि तादृशप्रतियोगितावच्छेदकपर्वतत्वानधिकरणत्वस्य महानसादौ सत्वेनाव्याप्तितादवस्थ्यमिति वाच्यम्। यादृशप्रतियोगितावच्छेदकतावदन्यत्वं हेतुमतस्तादृशप्रतियोगितासामान्ये निरुक्तोभयाभावस्य विवक्षितत्वात्। अवच्छेदकतावत्ता च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपताकाधिकरणतावत्वसंबन्धेन। रूपवृत्तित्वं च निरूपकतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व सं०। स्वं-निरूपकता वन्हिनिष्ठा। तथा च वन्हिमत्पर्वताभावीय प्रतियोगितावच्छेदकत्वस्य पर्वतत्वे वन्हौ च सत्वेन तन्निरूपितावच्छेदकत्वं वन्हित्वे एवेति पर्वतत्वनिष्ठावच्छेदकतायाश्च निरवच्छिन्नत्वात्, अतस्तादृशरूपं वन्हित्वगतैकत्वं तद्वृत्तिनिरूपताकाधिकरणत्वस्य हेत्वधिकरणमात्रे सत्वेन तादृशाभावमादायाव्याप्त्यसंभवादिति प्राहुः।

ननु तथापि स्वावच्छेदकताघटकसंबन्धेन यादृशप्रतियोगितावच्छेदकानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये यत्सम्बन्धा-

लक्ष्मीः

वच्छिन्नावच्छेदकताकत्वविशिष्टयद्धर्मावच्छिन्नावच्छेदकताकत्वाभाव: तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं कथं नोक्तमिति चेत्।

अत्र केचित्। प्रतियोगिताधर्मिकोभयाभावघटितदीधितिकारोक्त कल्पे प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तिवारणाय विशिष्टाभावमपहायोभयाभावो निवेशितः। तद्वदत्रापि विशिष्टाभावमपहायोभयाभाव निवेशः कृत इत्याहुः।

परे तु प्रमेयवह्निमान् धूमादित्यादावव्याप्तिः, गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन यत्संबन्धावच्छिन्नावच्छेदकताकत्वविशिष्टयद्धर्मावच्छिन्नावच्छेदकत्वाभावरूपविशिष्टस्याऽप्रसिद्धेः।

यद्यपि संयोगेन प्रमेयवह्निमान्नास्तीत्यभावप्रतियोगितायां संयोगावच्छिन्नावच्छेदकताकत्व, प्रमेयवह्नित्वावच्छिन्नावच्छेदकताकत्वस्य च सत्त्वेन विशिष्टस्यैकत्र संभवः, तथापि तदभावस्य गुरुधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकतया तस्यानंगीकारात्, यथा वृत्त्यनियामकसंबन्धावच्छिन्नप्रतियोगिताकाभावो नाभ्युपेयते तथा तादृशाभावोपि, अत एव एतत्कल्पानुसरणं कृतं ग्रन्थकृता, अत एव च प्रमेयवह्निमतो विषयितासंबन्धेनाभावप्रतियोगितायां तत्सिद्धावपि तस्याः वृत्त्यनियामकसंबन्धावच्छिन्नत्वेन तदभावस्यानंगीकारात्। ननु सिद्धान्ते कथं प्रसिद्धिरिति चेत्? विषयितया प्रमेयवह्निमतः संयोगेन योऽभावस्तदीय प्रतियोगितायां प्रमेयवह्नित्वावच्छिन्नावच्छेदकताकत्वस्य घटवदभावीय प्रतियोगितायां संयोगसंबन्धावच्छिन्नावच्छेदकताकत्वस्य च प्रसिद्धिः, वृत्त्यनियामकसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावास्यैतत्कल्पे जगदीशेन स्वीकारात्, अन्यथा एतत्कल्पस्य प्रणयनं व्यर्थं स्यात्।

ननु यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितावच्छेदकतासामान्ये यत्संबन्धावच्छिन्नावच्छिन्नत्व, यद्धर्मावच्छिन्नत्वोभयाभाव एव निवेश्यताम्, अवच्छेदकताद्वयप्रवेशे गौरवादिति चेन्न। सामान्यपदस्य व्यापकत्वार्थकत्वेन तादृशप्रतियोगितावच्छेदकतावृत्त्यभावाप्रतियोगित्वरूपव्यापकताया गुरुतया प्रतियोगितात्वव्यापकतानिवेशे लाघवादित्यन्यत्र विस्तरः।

**नन्विति। उक्तक्रमेणैव।** नव्यमतानुसारेणैव। व्यापकत्वं

**समवायसम्बन्धेन मेयसामान्याभावस्य सामान्यादौ सत्वान्मेयत्वादेरप्यभावप्रतियोगितावच्छेदकत्वं सुलभम्,**

---

ननु व्याप्यवृत्तिसाध्यकस्थलेऽप्युक्तक्रमेणैव व्यापकत्वं निर्वाच्यम्,—अन्यथा 'दण्डिमा' नित्यादौ दण्डत्वादिप्रकारेण व्यापकत्वानुपपत्तेः, तथाच 'प्रमेयवान् घटत्वादित्यादावव्याप्तिः, प्रमेयत्वावच्छिन्नत्वस्याप्रसिद्धेः ।

नच प्रकारित्वादौ तत्प्रसिद्धिः—

—प्रतियोगितानिष्ठाया एवावच्छेद्यतायाः प्रकृते निवेशनीयत्वात्,

अन्यथा प्रकारित्व-प्रतियोगित्वसाधारणैकावच्छेद्यत्वविरहेण व्यभिचारिण्यतिव्याप्त्यापत्तेः,—[ विषयितया प्रमेयत्वविशिष्टस्य ज्ञानादेरभावप्रतियोगितायां प्रमेयत्वावच्छिन्नत्वस्य प्रसिद्धावपि स्वरूपसम्बन्धेन साध्यतावच्छेदकतावच्छेदकेन तदवच्छिन्नत्वस्याप्रसिद्धेः,—] अत आह,—*समवायेति* । ननु स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्वेऽपि, —प्रकृतसाध्यीयसाध्यतावच्छेदकसम्बन्धसामान्ये,— तादृशोभयाभावविवक्षयैव सर्वसामञ्जस्ये कृतं विवक्षान्तरेण ?

---

लक्ष्मीः

निर्वाच्यम् । तादृशप्रतियोगितासामान्ये तादृशावच्छेदकताकत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं निर्वाच्यमित्यर्थः । **अन्यथा** । व्याप्यवृत्तिसाध्यकस्थले उक्तक्रमेण व्यापकत्वानिवेशे । **व्यापकत्वानुपपत्तेरिति** । तद्दण्डवान्नास्तीत्यभावस्य जागरूकत्वात् । उक्तक्रमेण व्यापकत्वनिवेशे दण्डत्वमात्रावच्छिन्नावच्छेदकतानिरूपकत्वविरहेणोभयाभावसत्वादिति भावः । **तथा च** । उक्तक्रमेण व्यापकतानिवेशे च । **प्रमेयत्वावच्छिन्नत्वस्य** । प्रमेयत्वावच्छिन्नावच्छेदकतानिरूपकत्वस्य । **अन्यथा** । प्रतियोगितानिष्ठावच्छिन्नत्वानिवेशे । **अतिव्याप्त्यापत्तेरिति** । प्रकारितानिष्ठधूमत्वावच्छिन्नत्वस्य प्रतियोगितासामान्ये विरहेणोभयाभावसत्वादिति भावः । **सुलभमिति** । तथा च प्रमेयवान् वाच्यत्वादित्यत्र समवायेन प्रमेयाभावप्रतियोगितायां प्रसिद्धस्य स्वरूपेण गगनाद्यभावप्रतियोगितायां प्रसिद्धस्य स्वरूपसंबन्धावच्छिन्नत्वस्य चोभयाभावस्य घटाभावप्रतियोगितायां सत्वाल्लक्षणसमन्वय इति भावः । **सर्वसामञ्जस्ये इति** । घटवान्

अतएव—समवायस्यैकत्वेन द्रव्यत्वादिप्रतियोगिकत्व-गुणाद्यनुयोगिकत्वोभयसत्वेऽपि,—'द्रव्यं जाते'रित्यादौ,—

—'वह्नि-धूमोभयवान् वह्ने'रित्यादौ संयोगस्यद्वित्वावच्छिन्न-प्रतियोगिकत्वविरहेऽपि च,—नातिव्याप्तिः'रित्यपि वदन्ति ॥२०॥

---

'घटवान् महाकालत्वा'दित्यत्र घटीयतादृशविशेषणतायां पटत्वावच्छिन्नप्रतियोगिकत्वविरहेण पटाभावस्यैव प्रतियोगिवैयधिकरण्यसम्भवात्,

'कालः प्रमेयवान्महाकालत्वादि'त्यत्र च कालिकसम्बन्धेन प्रमेयसामान्यस्य व्याप्यवृत्तितया तत्र प्रतियोगिवैय्यधिकरण्यस्यैवानुपादेयत्वेन निर्दोषादतः पूर्वकल्पे दोषान्तरमाह, * अत एवेति * ।

यद्यपि संयोगमात्रस्यैव द्वित्वावच्छिन्नप्रतियोगिकत्वविरहाद्वह्निधूमोभयत्वावच्छिन्नाभावमादायैव नातिव्याप्तिसम्भावना,—तथापि 'वह्निधूमोभयवान् वन्हे'रित्यादौ संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि समवायस्यैकत्वेन द्रव्यत्वप्रतियोगिकत्व, गुणानुयोगिकत्वोभयवत्वेन 'द्रव्यं जाते'रित्यादौ नातिव्याप्तिरिति—योजना ।

विरहेऽपि चेति*—"चकारस्तु प्रामादिक"—इति प्राञ्चः ।

वस्तुतस्तु—"संयोगस्य = सम्बन्धमात्रस्य, द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि = द्वित्वावच्छिन्नप्रतियोगिकत्वाऽसिद्धावपीत्यर्थः । तथा च सम्बन्धमात्रस्य एकप्रतियोगिकापरानुयोगिकसम्बन्धत्वनियमेन वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धस्याप्रसिद्धया तादृशप्रतियोगिकत्वस्य लक्षणाघटकत्वेऽपि—'वह्नि—धूमोभयवान् वह्ने' रित्यादौ नातिव्याप्तिः, प्रकारित्वादेः सम्बन्धत्वे मानाभावादिति तु प्रागेव प्रपञ्चितमस्माभिः । केचित्तु—'वह्नेः' इत्यत्र "धूमात्" इति, "नातिव्याप्तिः" इत्यनन्तरञ्च "अव्याप्तिर्वा इति पाठं कल्पयन्तो—"द्रव्यं जाते' रित्यादावतिव्याप्तिं, वह्नि—धूमोभयवान् धूमादित्यत्रचाऽव्याप्तिमेव पूर्वलक्षणे दोषं सङ्गमयन्ति ॥

---

लक्ष्मीः

महाकालत्वादित्यत्राव्याप्तिवारणे । पूर्वकल्पे । संबन्धधर्मिकोभयाभावघटितलक्षणे । दोषान्तरं । अतिव्याप्तिं । दीधितौ । अत एव । प्रतियोगिताधर्मिकोभयाभावघटितलक्षणस्यादरादेव । द्वित्वावच्छिन्न-प्रतियोगिताकत्वविरहेपि । द्वित्वावच्छिन्नप्रतियोगिताकत्वस्याप्रसिद्धत्वेपि । अप्रसिध्याऽतिव्याप्तिविरहेपीति यावत् । आत्मा-

प्रतियोगित्वादिश्च स्वरूपसम्बन्धविशेषो, न तु सम्बन्धत्वेन निविष्टः, सामानाधिकरण्येऽपि सम्बन्धः,—संयोगत्वादिनैव निविशते। दर्शितश्च नियमाघटितमपि सम्बन्धत्वम्।

अभावत्वञ्चेदमिह नास्तीदमिदं न भवतीति प्रतीतिनियामको भावाऽभावसाधारणः स्वरूपसम्बन्धविशेषः,—

---

ननु स्वरूपसम्बन्धविशेषात्मकप्रतियोगित्वस्य विशिष्टधीजनकत्वरूपसम्बन्धताघटकनियमघटितत्वादात्माश्रयत्वमत आह, * प्रतियोगित्वादिरिति *। आदिनाऽ-[नुयोगित्वनिरूपितत्ववृत्तित्वाऽ] वच्छेदकत्वपरिग्रहः। * नतु सम्बन्धत्वेनेति *। प्रतियोगितात्वादिधर्मान्तरप्रकारेण हेतुमन्निष्ठाभावीयत्वप्रकारेणैव वा तत्प्रवेशादिति भावः।

*संयोगत्वादिनैवेति*। ननु प्रतियोगितात्वमपि स्वरूपसम्बन्ध एवेत्युक्तदोषतादवस्थ्यम्;

किञ्च वृत्त्यनियामकसम्बन्धेन हेतुतास्थले,—तेन सम्बन्धेन हेतुसम्बन्धित्वस्याऽवश्यं प्रवेश एवेत्यतः सम्बन्धत्वेन निवेशेऽपि न क्षतिरित्याशयेनाह, *दर्शितश्चेति*। विशेष्यविशेषणत्वान्यविशिष्टधीविषयत्वमेव सम्बन्धत्वमिति भावः।

भावभिन्नत्वस्वरूपस्याभावत्वस्य प्रवेशे च 'घटत्वाभाववान् द्रव्यत्वा'दित्यादावतिव्याप्तिरित्याह,—*अभावत्वञ्चेति*।

*इदमिहेत्यादि* 'इदमिहनास्ती'ति प्रतीतिसाक्षिकभावाऽभावसाधारणाऽभावत्वप्रवेशे तादात्म्येन साध्यतायां व्यभिचारिण्यतिव्याप्तिस्तादृशप्रतीतिनियामकाभावप्रतियोगितायास्तादात्म्यावच्छिन्नत्वाभावेनोभयाभावसत्त्वात्, अत—'इदं न भवति' त्युक्तम्।

---

लक्ष्मीः

श्रयत्वमिति। सम्बन्धत्वं विशिष्टधीजनकत्वम्, जनकत्वं च व्यापकताघटितम्, व्यापकता च प्रतियोगिताधर्मिकोभयाभावघटितलक्षणादन्यत् दुर्वचम्, तथा च प्रतियोगित्वस्य संबन्धघटकप्रतियोगित्वसापेक्षत्वे आत्माश्रय इति भावः। स्वस्य स्वापेक्षित्वेऽनिष्टप्रसंग आत्माश्रयः।

विशेष्यविशेषणत्वान्येति। इदं प्रकारविशेष्ययोः संबन्धत्ववारणाय विषयताविशेषणम्।

**अतो नाभावसाध्यक-व्यभिचारिण्यतिप्रसङ्गः, तदपि वा नोपादेयं, प्रयोजनविरहात्,**

**विषयता-तत्वादिवत् प्रतियोगित्वाधिकरणत्व-तत्व-सम्बन्धत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येकदेशिनः।**

**महामहोपाध्याय श्रीरघुनाथ-शिरोमणि-भट्टाचार्य-विरचितायां दीधितौ सिद्धान्तलक्षणम्।**

---

यादृश प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगिताया उभयाभावविवक्षयैव सामञ्जस्ये तदुपादानमपि न कर्त्तव्यमत आह,—

* तदपि वेति * । अभावत्वमपि वेत्यर्थः, अपिरवधारणार्थः । ननु घटाभावप्रतियोगित्वमभावस्वरूपं, ? घटस्वरूपं वा, ? आद्ये,—'घटोऽभावप्रतियोगि'त्यस्य 'घटोऽभाववा'नित्यर्थः स्यात्, द्वितीये,—'घटवान्' इत्याकारः स्यात् । एवमधिकरणत्वमपि न संयोगरूपं, बदरस्यापि कुण्डाधारत्वप्रसङ्गादत आह,—विषयेति ।

अतिरिक्तविषयतापक्षस्य नैय्यायिकेनापि केन चित्स्वीकारात्तस्य दृष्टान्तता । * तत्वादिति * । विषयतात्वादीत्यर्थः । आदिना प्रकारित्वादेः परिग्रहः ।

केचित्तु—"तत्वं=तत्ता, आदिना चेदन्त्वस्योपग्रहः, तत्वेदन्त्वयोः पदार्थान्तरत्वं विना दुर्वचत्वात्तत्रैव पर्य्यवसानादित्याहुः ।

* तत्वेति * । प्रतियोगितात्वाधिकरतात्वेत्यर्थः ॥२१॥

इति श्रीजगदीशतर्कालङ्कारविरचितायामनुमानखण्डदीधितिव्याख्यानभूतायां जगदीश्याख्यया प्रसिद्धायां सिद्धान्तलक्षणम् ॥

---

लक्ष्मीः

**अतिव्याप्तिरिति** । घटत्वात्मकसाध्याभावस्य हेतुसमानाधिकरणाऽभावत्वानाक्रान्तत्वादभावान्तरस्यैव लक्षणघटकत्वादिति भावः ।

**इदमिदं न भवतीत्युक्तमिति** । इदमिदं न भवतीति प्रतितिनियामकस्य तादृशाभावस्य प्रवेशे घटत्वाभावादिसाध्यके व्यभिचारिणि अतिव्याप्तिः । तादृशप्रतीतिनियामकाभावप्रतियोगितायां स्वरूपसंबन्धावच्छिन्नत्वाभावेनोभयाभावसत्वादत इदमिह नास्तीत्युक्तम् । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितायामुभयाभावनिवेशेनैव सामंजस्ये तदुपादानं न

लक्ष्मीः

कर्तव्यमत आह। तदपि वेति। आद्ये—प्रतियोगिताया अभावस्वरूपत्वे। द्वितीये—प्रतियोगितायाः प्रतियोगिस्वरूपत्वे। एवं घटत्वरूपत्वे घटो घट इति स्यात्। बदरस्य कुण्डाधारत्वप्रसंगादिति। कुण्डसंयोगस्य कुण्डाधारत्वरूपत्वादित्याशयः तथा चाननुभव इत्यत आह। विषयतेति।

विषयताया ज्ञातरूपत्वे घटपटौ इत्यादि समूहालंबनज्ञानस्य भ्रमत्वापत्तिः, ज्ञानात्मकघटपटादिविषयतानामैक्येन पटत्वावच्छिन्नघटादिनिष्ठविषयताशालित्वात्। विषयरूपत्वे घटभूतलसंयोग इति ज्ञानस्य घटवद्भूतलसंयोग इति ज्ञानाद्वैलक्षण्यप्रसंगः, विषयात्मकघटादिविषयताया ऐक्यात्, ज्ञानविषयोभयरूपत्वे च घटवद्भूतलं घटभूतलसंयोगश्चेत्यादिसंमूहालंबनग्रहे संयोगादौ विषयतावैलक्षण्यानुपपत्तिः, ज्ञानविषयोरविशेषात्। न चेष्टापत्तिः। तथा सति घटवद्भूतलमित्याद्येकैक संयोगविषयताशालिज्ञानात्तादृशसमूहालंबनस्यवैलक्षण्यानुपपत्तेरिति ध्येयम्।

सिद्धान्तलक्षणव्याख्या व्याख्याता संप्रदायतः।
दत्तात्रेयेण सुधिया तेन सांबः प्रसीदतु।
॥ इति श्रीः ॥

